वीर सं. २४६६
विक्रम सं. १९९६
इस्वीसन १९३९




भावनगर—महोदय प्रीन्टींग प्रेसमा
शा. गुलाबचंद लल्लुभाई द्वारा मुद्रित.



# પ્રસ્તાવના.

અનાદિ કાળથી આ દુનિયારૂપી ભૂલ-ભૂલામણીવાળી ઘોર અટવીમાં ભટકતા પ્રાણીઓને ઉત્તમ પુરુષોનાં ચરિત્ર માર્ગદર્શક થવા સાથે ઉચ્ચ ગતિ પ્રાપ્ત થવામાં પરમ કારણભૂત થાય છે. તેમાં પણ આધુનિક જડવાદી વિજ્ઞાનથી પૂરવેગે ઉન્માર્ગે દોરવાતા મનુષ્યોને સન્માર્ગે લાવવામાં સંસારથી વિરક્ત બનેલા મહાપુરુષોનાં ચરિત્રરૂપી શિષ્ટ સાહિત્યની અતિશય આવશ્યકતા છે. એ મહાપુરુષો પૈકી આ ચરિત્ર પણ એવા વંદનીય મહાત્માનું છે, કે જેઓ પરમ વૈરાગી, નિર્મલ ચારિત્રપાત્ર, બાલ-બ્રહ્મચારી, આર્હત ધર્મના સત્ય પ્રરૂપક, આગમના ગૂઢ તત્ત્વોના જાણકાર, ગૃહસ્થોને આપેલા સદુપદેશદ્વારા જૈન પાઠશાલાઓ, જ્ઞાનમંદિરો અને લાઈ-

ંરીઓ સ્થાપન કરાવી જ્ઞાનનો ઉદ્યોત કરનાર, ધર્મથી વિમુખ બનેલા કેટલાય મનુષ્યોને પ્રતિબોધી ધાર્મિક શ્રદ્ધામાં સ્થિર કરનાર, અને સંખ્યાબંધ પ્રાચીન તીર્થોનો ઉદ્ધાર કરાવી જૈનશાસનના પરમ પ્રભાવક છે. આવા પરોપકારમય પવિત્ર જીવન ગાળનાર મહાપુરુષનું ચરિત્ર વાંચવાથી, શ્રવણ કરવાથી, અને બની શકે તેટલે અંશે પોતાના જીવનમાં ઉતારવાથી જીંદગીનો પલટો થવા સાથે આ ભવ અને પરભવ બન્ને સુધરે છે, એજ હેતુથી આ મહાપુરુષનું ચરિત્ર પ્રકાશિત કરવું અમોએ ઉચિત ધાર્યું છે.

આ ગ્રન્થમાં આચાર્યજી મહારાજ શ્રી વિજયનીતિ સૂરીશ્વરજી મહારાજ સાહેબની પૂર્વાવસ્થા, તેમને વૈરાગ્ય થવાનાં કારણો, દીક્ષિત થયા પછી તેમણે શું શું શુભ કાર્યો કર્યા, અને અત્યારે તેમની શું પ્રવૃત્તિ છે ? વિગેરે સંપૂર્ણ હકીકત વર્ણવી છે. ચરિત્ર પૂર્ણ થયા બાદ, આચાર્યજી મહારાજે કઇ કઇ સાલમાં ક્યાં ક્યાં ચતુર્માસ કર્યા, અને પ્રત્યેક ચતુર્માસમાં શું શુ પુણ્ય—કાર્ય થયાં, તે ચતુર્માસ—વર્ણન નામના પ્રકરણમાં દર્શાવેલ છે ત્યાર બાદ આચાર્યજી મહારાજના ગુરુદેવ સ્વર્ગસ્થ અનુયોગાચાર્ય પન્યાસજી મહારાજ શ્રી ભાવવિજયજી ગણીશ્વરજી મહારાજ સાહેબના શિષ્ય—પ્રશિષ્યાદિનું વર્ણન પટ્ટાવલીરૂપે વર્ણવ્યુ છે.

'ગુરુ તેવા ચેલા' એ ન્યાયે આચાર્યજી મહારાજ પોતે જેવા પરમ વૈરાગી અને શાસન પ્રભાવક છે, તેવીજ રીતે તેઓશ્રીના

विद्वान् शिष्यो पण तेमने शुभ पगले चाली, उग्र विहार करी देशोदेश विचरी अनेक भव्यात्माओने प्रतिबोधी जैन-शासननो उद्योत करी रह्या छे.

आ सर्वांग संपूर्ण चरित्र पंन्यासजी महाराज श्री कल्याण-विजयजी महाराज साहेब तथा पंन्यासजी महाराज श्री संपद्-विजयजी महाराज साहेबे गुजराती भाषामां तैयार करीने आप्युं हतुं, ते उपरथी अमोए पंडित व्रजनाथ शास्त्री तथा पंडित शिवशंकर शास्त्री पासे संस्कृतमां तैयार कराव्युं छे. वळी अवार-नवार तेओश्रीए केटलीक उपयोगी सूचनाओ आपी अमारा कार्यनी सरलता करी आपी छे, ते बदल बन्ने पंन्यासजी महाराज साहेबोनो उपकार मानीए छीए. आ ग्रन्थ प्रकाशित करवामां राधनपुर निवासी शेठ वाडीलाल पूनमचंद, तथा राज-कोट निवासी दोशी जेठालाल पानाचंद विगेरे सद्गृस्थोए आर्थिक सहाय आपी अमारा उत्साहमां अभिवृद्धि करी छे, ते बदल तेमनो आभार मानीए छीए. पूज्यपाद आचार्य महाराज साहेबनुं आ मननीय चरित्र वांची लोको थोडे घणे अंशे तेने पोताना जीवनमां उतारशे तो अमो अमारो परिश्रम सफळ थयो मानशुं.

ग्रन्थने शुद्ध छपाववा माटे बनती काळजी राखवा छतां कोइक स्थळे दृष्टि दोषथी, मतिमंदताथी के प्रेसनी भूलथी कांइक

અશુદ્ધિ રહી ગઇ હોય, તો તે બદલ મિથ્યા-દુષ્કૃત યાચીએ છીએ; અને સાક્ષરવર્ગ અમોને સૂચવશે તો બીજી આવૃત્તિ વખતે તે તે સ્થળે સુધારો કરવામાં આવશે. આશા છે કે વિદ્વાન્ મુનિવર્યો તથા સાક્ષરવર્ગ કોઇ ઠેકાણે અશુદ્ધિ જણાય તો સુધારીને વાંચશે, અને અમોને સૂચના આપવા કૃપા કરશે.

અમદાવાદ
રીચીરોડ

લી. વ્યવસ્થાપક—
શ્રી વિજયનીતિસૂરીશ્વર જૈન લાઇબ્રેરી.



# विषयानुक्रमः ।

गमनं, तत्रोद्यापनमहोत्सवः। ततो विहृत्य पादलिप्त-पुरे गमनम्। तत्र चतुर्मासानन्तरं गुरुदेवेन मुनिराज-श्रीनीतिविजयगणीश्वरस्य पन्यासपदवीप्रदानम्। .... ८५-९३

पादलिप्तपुराद् विहृत्य रैवताचलतीर्थयात्रां कृत्वा वांकानेर गोरवी—जामनगरादिषु अनेक भव्यान् प्रति-बोध्य राजकोटनगरे आगमनम्। चतुर्मासानन्तरं ततो विहृत्य राजधन्यपुरे आगमनम्। ततः सवेन सह विहृत्य सिद्धाचलतीर्थयात्रां कृत्वा पुना राजधन्यपुरे आगमनम्। वर्षाकालान्तरं संघेन सह केसरियातीर्थ-यात्रां कृत्वा राजधन्यपुरे आगमनम्, चातुर्मासावस्था-नम्, उपधानतपोविधापनं च। .... .... ९३-१२०

राजधन्यपुराद् विहृत्य वाव थरादादिषु लुम्पा-कादीन् प्रतिबोध्य, साचोरा—ऽर्बुदाचल—राणकपुर—नाडोल—घाणेराव नाडलाइ—वरकाणा—मूछारामहावी-रादितीर्थेषु यात्राः कृत्वा, सादडीप्रभृतिपुरेषु विहृत्य, राजनगरे आगमनम्। तत्र मोहनलाल—ऋषभचन्द्र-योर्दीक्षा—दानपूर्वके मुनिमुक्तिविजय—राजविजयेति नाम्नी दत्ते। चतुर्मासानन्तरं शङ्खेश्वरतीर्थे गमनं, प्रतिष्ठामहोत्सवः। ततो विहृत्य तारङ्गतीर्थे यात्रां कृत्वा वीसनगरे मुनितिलकविजयस्य दीक्षादानम्। वीस-नगरे चतुर्मासावस्थानम्, उपधानादितपो—मालारोप-णादिमहोत्सवविधापनं च। वर्षाकालानन्तरं ततो

ततो नरोडा—सरखेज—पानसर—भोयणी—शंखेश्वर—पत्तनादिषु विहृत्य केसरियातीर्थयात्रा। ततः पत्तनपुरे आगमनं, श्रीहेमचन्द्राचार्य—ग्रन्थावलिस्थापना। चतुर्मासानन्तरं चाणर रणूजादिग्रामेषु विहारः, उद्यापनादिमहोत्सवाश्च। ततः पत्तनपुरे आगमनम्। तत्र मुनिमनोहरविजय—रविविजययोर्बृहद्दीक्षा उद्यापनमहोत्सवश्च। ततश्चाणस्मानगर्यामागमनं, जलाशयाद् निर्गतायाः श्रीशीतलनाथमूर्तेः प्रतिष्ठापनम्। वर्षाकालानन्तरं वडनगरे गत्वा उपधानतपोविधापनम्। ततो राधनपुरे गमनम्। तत्र सोमचन्द्रश्राद्धस्य दीक्षापूर्वकं मुनिसम्पद्विजयेति नामदानम्। ततः शंखेश्वर—पत्तनादिषु विहृत्य ऊंझापुर्यामागमनम्, तत्र मुनिश्रीसंपद्विजयस्य बृहद्दीक्षा। ततस्तारङ्गतीर्थयात्रा कृत्वा वडनगर—वीसनगरादिषु विहृत्य राजनगरे आगमनम्। उपधानतपोविधापनम्। वर्षाकालानन्तरं पन्न्यास—श्रीनीतिविजयगणीन्द्रस्य आचार्यपदवी, अष्टाह्निकादिमहोत्सवाश्च। गुरुदेववैयावृत्त्याय राजनगरेऽवस्थानं, चतुर्मासनिवास उपधानादितपोविधापनं च। ... २०४—२४६

राजनगराद् विहृत्य श्रीसिद्धाचलतीर्थयात्रा, पादलिप्तपुरे च चतुर्मासकरणम्। तत्रोपधानादितपो—मालारोपण—शान्तिस्नात्रादिमहोत्सवा जैनसेवासमाजस्थापना च। तत ऊना—ऽजारापार्श्वनाथ—प्रभासपत्तनादितीर्थेषु

विहृत्य जीर्णदुर्गे रैवतगिरियात्रा । ततो वेरावलनगरे गमनं चतुर्मासवासश्च। ततो विहृत्य प्रभासपत्तने गमनं, तत्रत्यजिनमन्दिरजीर्णोद्धारप्रबन्धविधापनं च । ततो वेरावलनगरे आगत्य रवाऽऽख्यश्राद्धं दीक्षयित्वा मुनिरविविजयेति नाम दत्तम् । ततः पोरबन्दर—जामनगरादिषु विहृत्य रैवताचलतीर्थयात्रा, जूनागढनगरे चतुर्मासाऽवस्थानं, सूरिवरोपदेशेन च रैवताचलतीर्थोद्धारप्रारम्भश्च। ततो विहृत्य सिद्धाचलतीर्थयात्रां कृत्वा राजनगरे आगमनम् । तत्रोद्यापनमहोत्सवो रायचन्द्रश्राद्धस्य च दीक्षादानपूर्वकं मुनिगुणविजयेति नामविधापनम्। केशवश्राद्धं दीक्षयित्वा मुनिकमलविजयेति नाम दत्तम् । वर्षाकालानन्तरं विहृत्य राधनपुरे गमनम्, उद्यापनमहोत्सवः । ततः पत्तनपुरे गमनम् । तत्र पन्यासदयाविजयस्योपाध्यायपदवीप्रदानं, मुनिशान्तिविजयस्य च पन्यासपदवीप्रदानम् । ततो जूनागढनगरे गमनम्। रैवताचलतीर्थे ध्वजदण्डमहोत्सवः, जगजीवनश्राद्धस्य च दीक्षा। ततो जेतपुर—गोण्डल—राजकोट-मोरवीप्रमृतिषु विहृत्य वांकानेरनगरे गमनम्, तत्रोपाश्रयविधापनं चतुर्मासावस्थानं च। ततो विहृत्य श्रीशत्रुंजयादितीर्थयात्रां कृत्वा राजनगरे चतुर्मासावस्थानम् । ततः पत्तनपुरे आगमनम्, संघेन च सह भद्रेश्वर—रैवताचलादितीर्थयात्रा । ततो जेतपुरे आग-

नम्, उपधानतपोविधापनं च । वर्षानन्तरं राधनपुरे गमनम् । तत्रोद्यापनमहोत्सवः, मुनिरामविजयस्य बृहद्दीक्षा, पाठशालास्थापनं च । ततो विहृत्य शङ्खेश्वरादितीर्थयात्रां कृत्वा जूनागढनगरे आगमनम् । रैवतगिरौ उद्धारितचैत्यप्रतिष्ठा । ततो राजनगरे आगमनम् । तत्र मुनिमानविजयो–दयविजययोर्गणिपदवीप्रदानं चतुर्मासावस्थानं च । . . .... २४६–२९६

राजनगराद् विहृत्य केसरियातीर्थयात्रा । तत्र धर्मसिंहश्राद्धस्य दीक्षां दत्त्वा मुनिभक्तिविजयेति नाम दत्तम् । ततो राजनगरे आगमनम्, तत्रोद्यापनादिमहोत्सवान् कारयित्वा कपडवंजनगरे आगमनं चतुर्मासावस्थानं च । वर्षाकालानन्तरं मुनिमुक्तिविजयमोतीविजयो–दयविजय–तिलकविजय–कल्याणविजयाना गणि–पन्न्यासपदवीप्रदानम् । मुनिसुन्दरविजयस्य बृहद्दीक्षा मुनिमेरुविजयस्य च दीक्षा । ततो राजनगरे गमनम्, तत्र मुनिविनयविजयस्य दीक्षा । ततो मेसाणानगरे गमनम्, तत्र मुनिशुभविजयस्य दीक्षा । ततस्तारङ्गा–ऽर्बुदादितीर्थयात्रां कृत्वा सीरोहीपुर्यां मुनिशुभविजयस्य बृहद्दीक्षा । ततो देलवरे गमनम्, तत्रोद्यापनमहोत्सवः । ततो जावालपुरे मुनिदेवेन्द्रविजय–जीवविजययोर्दीक्षा । चतुर्मासानन्तरं मुनिमहेन्द्रविमलस्य पन्न्यासपदवी, मुनिमङ्गलविजय–

मनोहरविजय–सम्पद्‌विजयानां गणिपदवी च । ततः सीरोही गूछालामहावीर--राणकपुर– देसुरी–पाली–कापरडा योधपुरादिषु विहृत्य फलोधीपुर्यामागमनम् । ततः संघेन सह जेसलमेरतीर्थयात्रां कृत्वा फलोध्या·मागमनम्,पन्यास-हर्षविजयगणिवरस्य आचार्यपदवी-प्रदानं चतुर्मासावस्थानम् उपधानतपोविधापनं मुनि-भुवनविजयदीक्षा च । ततो विक्रमपत्तन–मेडता–सोजत–पाली–तखतगढा–ऽर्बुदाचलादिषु विहृत्य राजनगरे गमनम् । तत्रोपधानतपोविधापनम् । चतुर्मासा-नन्तरं मुनिप्रकाशविजय-भद्रङ्करविजययोर्बृहद्दीक्षा मुनि-सम्मेलनं च । ततो विहृत्य मोहमयीनगर्यां गमनम्, तत्र चतुर्मासावस्थानम् । चन्दुलालश्राद्धस्य दीक्षादान-पूर्वकं मुनिचरणविजयेति नाम दत्तम् । .... २९६–३२६

मोहमय्या विहृत्य क्रमेण वापीपुर्यामागमनं, तत्र च प्रतिष्ठामहोत्सवः । ततो वीलीमोरा–ऽमलसार–नवसारी– बारडोली–जघडीया--गन्धार --काव्यादिषु विहृत्य खम्भातनगरे मुनिचम्पकविजयं दीक्षयित्वा शत्रुञ्जयतीर्थयात्रां विधाय कुण्डलापुरि आगमनम् । तत्र वल्लभदास–मनसुखलालयोर्दीक्षादानपूर्वके मुनि-वल्लभविजय-मलयविजयेति नाम्नी दत्ते । ततः पाद-लिप्तपुरे गत्वा चतुर्मासावस्थानम् । तत्रोद्यापनादि-महोत्सवा उपधानादितपोविधापनं साध्वीपाठशाला-

स्थापनं च । ततो विहृत्य जीर्णदुर्गे गमनं, रैवताचलतीर्थयात्रा । जीर्णदुर्गे अरुणविजय–कञ्चनविजययोर्दीक्षा । ततो जेतपुर–गोंडल–राजकोटादिषु विहृत्य वङ्कपुरे आगमनम्, तत्र ध्वजदण्डमहोत्सवः । ततः स्थानदुर्गे मूली–वर्द्धमान–दसाडादिषु विहृत्य शङ्खेश्वरतीर्थयात्रा, मुनिकनकविजयस्य च दीक्षा । ततो राधनपुरे गमनम् । तत्र मुनिसम्पद्विजय मङ्गलविजयगणिवरयोः पन्यासपदवीप्रदानम् । मुनिकञ्चनविजयस्य बृहद्दीक्षा, चतुर्मासावस्थानं पाठशालाभवनोद्घाटनम् उपधानतपोविधापन च । चतुर्मासानन्तरं मुनिभरतविजय–हिम्मतविजय–भूषणविजयानां दीक्षा । ... .. ... ३२७–३५७

राधनपुराद् शङ्खेश्वर–चाणस्मादिषु विहृत्य पट्टनपुरे आगमनम् । तत्र संघक्लेशोपशमकरणम् अष्टाह्निकादयो महोत्सवाश्च । ततो विहृत्य वारेजापुरे मुनिरंगविजयस्य दीक्षा दत्ता । ततोऽहम्मदावादपुरे गमनम् । चतुर्मासानन्तरं ततो विहृत्य प्रान्तिजपुरे आनन्दविजयस्य दीक्षादानम् । ततो विहृत्य केसरियातीर्थयात्रां कृत्वा उदयपुरे गमनम् । तत्र चम्पकलालश्राद्धस्य दीक्षादानपूर्वकं मुनिचन्द्रोदयविजयेति नाम दत्तम् । ततो विहृत्य आघाट–फत्तेहपुर–

રૈવતાચલાદિ તીર્થોદ્ધારક, શાસનપ્રભાવક, આચાર્યપ્રવર,

## શ્રીમદ્-વિજયનીતિસૂરીશ્વરજી મહારાજ સાહેબ.

જન્મ સંવત ૧૯૩૦ ના પોષ શુદિ ૧૧.



દીક્ષા સં. ૧૯૪૯ના અષાડ શુદિ ૧૧. વડી દીક્ષા સં. ૧૯૫૦ના મહા શુદિ ૪.

ગણિ પદ સં. ૧૯૬૧ ના માગશર શુદિ ૫.

પંન્યાસ પદ સં. ૧૯૬૨ ના કારતક વદિ ૧૧.

આચાર્ય પદ સં. ૧૯૭૬ ના માગશર શુદિ ૫.

બી પી. પ્રેસ-પાલીતાણા

ॐ अर्हं नमः। ऐं नमः॥

## तीर्थोद्धारक-सर्वशास्त्रविशारद-जैनाचार्य

# श्रीविजय-नीतिसूरीश्वरचरित्रम्।



( महाकाव्यम् )

स्रग्धरा

श्रेयः कर्तुं जगत्याः परमकरुणया ज्ञानचक्षूंषि दत्त्वा,
विश्वेषां भक्तिभाजां जनि-मृतिजनितां क्लेशमालामसह्याम्।
जेगीयन्ते त्रिलोकी-सुर-नर-दितिज-ध्येय-पादारविन्दा-
स्तान् सर्वांस्तीर्थकारान् भवजलधि-महापोतकल्पान् नमामः १
मार्तण्डो नैशमन्धव्रजमिव नियतं शुद्धचारित्रभाग्भि-
र्भव्याऽऽत्माऽज्ञानराशिं झटिति परिहरन्त्येव येऽमी सुमह्याः।
सम्यक्तत्त्व-प्रकाशं विदधति करुणा-वारिसम्पूर्णकूपा,
भूयो भूयः प्रणौमि प्रवर-मुनिगणान् सद्गुरूंस्तानजस्रम् ॥२॥

इन्द्रवज्रा—

विद्यावतामानन-सत्तटाके, या राजहंसीव विलालसीति।
संसार-सन्ताप-निवारणाय, गङ्गेव शुभ्रा भुवि वर्वृतीति ॥३॥
तां शारदां धीरधियः प्रदात्रीं, ब्रह्माऽऽदि-सर्वाऽमर-नूयमानाम्।
देवीं प्रसन्नां जगदाद्यरूपां तोष्टोमि भक्त्या वचसामगम्याम् ॥४॥

शार्दूलविक्रीडितम्—

येषां जीवनमुज्ज्वलं सुकृतिनां जाजायते प्राणिनां,
कामाऽऽदि-प्रविमुक्तमेव हृदयं शश्वद्‌दरीदृश्यते ।
संसारीयमशेषवस्तु नियतं स्वप्नेन्द्रजालोपमं,
ये पश्यन्ति त एव धन्यमनुजा वैराग्यवन्तो मताः ॥५॥

उपजातिः-

एतादृशा एव महापुमांसः, क्षितौ परेषामपि जीवनानि ।
प्रकाश्य नैजाऽमल-जीवनाऽऽभां, कुर्वन्ति चाऽऽदर्शमयानि नूनम्
मार्गे समुच्चे सहसाऽऽकृषन्ति, स्थातुं च लोकानितरांस्त एव ।
मोहाऽन्धकारक्षय-तीक्ष्णहस्ताः, परोपकारव्रतिनो महिष्ठाः ७

वसन्ततिलका

तादृग्विशिष्ट-गतमोह-महाऽऽप्तपुंसा
मेवाऽनुकुर्वत उदारधियः समस्ताः ।
अत्युच्चकृत्यमपरे व्यवहारदृष्ट्या,
तेनैव शीघ्रमतितुङ्गपदं लभन्ते ॥ ८ ॥

उच्चैस्तमाः परिबुभूषव आशु बालाः,
कुर्वन्ति शिष्टजनताऽऽचरणं पवित्रम् ।
तादृग्भ्य एव वसुधातलपावनेभ्यः,
शिक्षां परां बहुविधां सुखमाप्नुवन्ति ॥ ९ ॥

तेषां सुपूर्ण-शरदिन्दु-समुज्ज्वलाऽऽभां,
कीर्तिं सतीं जगदिदं परिभासयन्तीम् ।
प्रज्ञावतामभिमतामतिशिक्षितास्ते,
प्रख्यापयन्ति महतामपि तद्विधानाम् ॥ १० ॥

शार्दूलविक्रीडितम्—

तस्मात् सम्प्रति वर्तते क्षितितले साधीयसां तादृशा-
मत्यावश्यकजीवनीयचरितं यद्वाचनात् सत्वरम् ।
जायेरन्नुरुबुद्धयः शिशुगणा अग्रेतना भूरिशः,
सर्वोन्नत्यकरा जगद्धितरता आदर्शभूताः सताम् ॥ ११ ॥

वैतालीयम्

महतामपि जीवनं क्रमात्, पदमुच्चैस्तममञ्चति ध्रुवम् ।
जीवनेन तादृशा नराः, सम्पश्यन्ते मार्गमात्मनः ॥ १२ ॥

वसन्ततिलका—

तीर्थङ्करा अपि समे भगवन्त एते,
प्राक् क्वाऽपि जन्मनि समा अभवन्मनुष्याः ।
स्वार्थप्रमुक्त-शुभवर्तन-सद्विचारैः,
प्रारब्ध-जात-विशदाऽऽचरणैश्च नित्यम् ॥ १३ ॥

उपेन्द्रवज्रा—

यथा यथा ते निज-षट्सपत्नान्, परैरजय्यान् सहसैव जिग्युः ।
तथा तथा जीवननिर्मलत्वं, विनिन्यिरे सत्त्वमया भवन्तः १४

उपजातिः—

तत्तद्भवोपार्जितसर्वकर्मा-ण्याधूय सिद्धिं परमामवापुः ।
अनन्तविज्ञानमनन्तशक्ति--मासास्त्रिलोकीपतयो बभूवुः ।१५।

विधातुमेवं निजजीवनं हि, पतन्ति नैके प्रबलाश्च विघ्नाः ।
जयश्च तेषां कषपट्टिकेव, तादृग्जनानां विचकास्ति लोके ।१६।

तादृग्जनाऽग्रेसरतां गतस्य, महीयसोऽमुष्य चरित्रनेतुः ।
आजन्म सर्वं चरितं पवित्रं, विश्वोपकृत्यै प्रकटीकरोमि ।१७।

क्वेदृग्जनानां चरितं ह्युदारं, क्व शेमुषी तुच्छतरा मदीया ? ।
तदप्यहं मञ्जुलभूरि-वृत्तैः, पद्यैः प्रवर्ते खलु तद्विधातुम् ।१८।

महीयसामैश्वर-शक्तिभाजा-मेषामुदाराऽमित-सद्गुणैश्च ।
सम्प्रेरिता मामकबुद्धिरेषा, कर्तुं किलैतच्चरते नितान्तम् ।१९।

स्रग्धरा—

जैनाऽऽचार्यप्रधानो विजयमधिवहन्नर्णवः सद्गुणानां,
श्रीमाञ्छ्रीनीतिसूरीश्वर-विभुरनघः सर्वतन्त्रस्वतन्त्रः ।
स्वीयाऽन्याशेष-शास्त्र-प्रवचन-करणे गीष्पतिः सद्गुरूणां,
मूर्धन्योऽयं पुनानः क्षितितलमखिलं साम्प्रतं चाकचीति ।२०।

वांकानेराऽभिधाना क्षिति-विदित-महापत्तनेषु प्रधाना,
वापी-कूपैरसंख्यैरुपवननिकरैः सत्तटाकैश्च रम्या ।
लक्ष्मीदेव्याः प्रधानं सदनमिव परा निर्मिता सृष्टिकर्त्रा,
नानाऽर्हच्चैत्यमाला गुणिगणवसतिर्या पुरी भात्यजस्रम् ।।२१।।

यस्यां कोटिध्वजानां गगनलिह–महासौधमाला विभाति,
श्राद्धाः सर्वे समृद्धा नय–विनययुताः सद्गुरूपासनाऽऽढ्याः ।
सप्तक्षेत्र्यां नयाऽऽप्तं प्रतिदिनममितं सद्धनं संवपन्ति,
पापस्थानानि सप्त प्रचुर–शुभधियः श्राद्धमात्रास्त्यजन्ति ॥२२॥

उपेन्द्रवज्रा

अनर्घ्यरत्नैर्विविधैरनल्पैः, सत्पण्यवीथ्यां परितः प्रकीर्णैः ।
रत्नाऽऽकरीयां सुषमां जयन्ती, जहास शक्रेन्द्रपुरीमपीयम् ।२३।

मन्दाक्रान्ता––

तस्यां पुर्यां वसति वरधीः सत्कृतः सर्वलोकैः,
अर्हद्धर्म्मा परमचतुरो लौकिकाऽशेषकृत्ये ।
लक्ष्म्या श्लिष्टः परमकरुणावान् महेभ्यः कृतज्ञः,
शुद्धे धर्मे जिननिगदिते रागवान् फूलचन्द्रः ॥२४॥

उपेन्द्रवज्रा

दशाऽऽदिकश्रीयुतमालिवंश–नभोदिनेशः शशभृत्सुकान्तः ।
सत्कीर्तिशाली गुरुदेवसेवी, दुर्नीति–वृक्षव्रजभित्कुठारः ॥२५॥

तद्धर्मपत्नी सुगुणा सुरूपा, सतीप्रकाण्डा गृहकृत्य–दक्षा ।
पटीयसी सर्वकलासु धीरा, चोथीति नाम्ना प्रथिता समासीत् २६

व्योमाऽ*ग्निनन्देन्दुमिते शुभाऽब्दे, मासे ×सहस्ये धवले च पक्षे ।
वैश्वे +तिथौ स त्वगुणप्रधानः, समस्त-सल्लक्षण–लक्षिताऽङ्गः २७

* १९३० । × पौषमासि । + एकादश्याम् ।

तुङ्गस्थिताऽनेकखगे सुलग्ने, तयोर्द्वयोः सूनुवरः प्रजज्ञे ।
जाते च पुत्रे हृदि सम्प्रहृष्टः, श्रेष्ठी प्रचक्रे जननोत्सवं हि ।२८।

शार्दूलविक्रीडितम्––

षष्ठीजागरवासरे च विधिना सञ्जागराऽऽदिक्रियां,
कृत्वा द्वादशवासरे च महता चारूत्सवेन प्रधीः ।
नीहालोत्तरचन्द्र इत्यभिधया प्रासेधयज्जातकं,
जातीयाऽखिल-भोजनं बहुविधं प्रायच्छदिभ्येश्वरः ॥ २९ ॥

उपेन्द्रवज्रा

पुरे च तस्मिन्नधुना विपश्चिद्, चैत्यद्वयी सन्यतरा चकास्ति ।
उभे विशाले रमणीयधर्म-शाले चकास्तः सकलर्तुसौख्ये । ।
शतद्वयी चाऽऽर्हत-सज्जनानां, सम्यक्त्वभाजां वरिवर्त्यमुष्याम् ।
सत्कीर्ति-लक्ष्मी-गुरुदेव-भक्ति-श्रिताऽऽत्मनां दुष्कृतवर्जितानाम् ॥

वसन्ततिलका–––

प्राग्जन्म-भूरि-समुपार्जित-पुण्ययोगा-
देवाऽत्र जन्मनि नरः समुपैति नूनम् ।
दीर्घाऽऽयु-रुच्चकुलजत्व सुबुद्धिकत्वं,
सर्वेन्द्रियाऽतिपटुतां भवरोगहृत्त्वम् ॥ ३२ ॥

यद्भासतेऽधिकसमुन्नत-वंशजन्म,
तत्राऽप्यहिंसनमयाऽतुल-जैनधर्मः ।

मोक्षार्थिताऽऽत्मवशिताऽऽदिकमत्र पुण्य-
पुञ्जं विना भवति दुर्दुरवापमेव ॥ ३३ ॥

उपेन्द्रवज्रा

चरित्रनेत्रा सुधियाऽमुनाऽपि, दुरापमप्येतदवापि सर्वम् ।
तेनाऽनुमाम्यस्य भवान्तरीय सम्पादिताऽमेय-सुपुण्यराशिम्

आसन्नमुष्याऽधिक-धर्मनिष्ठाः, श्रीभायचन्द्रो जशराजनामा ।
माणिक्यचन्द्रश्च सहोदरास्ते, ज्यायांस आसीद्भगिनीद्वयञ्च ।३५।
बालोऽपि गम्भीर सुतीक्ष्णबुद्धि-र्वयस्यवर्गैः सह नाऽत्यरंस्त।
नैवाऽप्रियं जात्वपि सम्बभाषे, प्रीणञ्जनानात्म-वचःसुधाभिः

वसन्ततिलका

तन्मण्डलीय-शिशु-शिक्षण-राज-विद्या-
शालामसावविशदच्छ-कुशाग्रबुद्धिः ।
षष्ठीं समामधिगतश्चतुरः सुवक्ता,
मेधाविपूत्तमतमोऽभ्यसितुं प्रलग्नः ॥३८॥

इन्द्रवज्रा

प्रातः समुत्थाय विधाय नित्य-मावश्यकं तानवकृत्यमाशु ।
सर्वेभ्य आदौ विनयी स शाला-मागच्छदत्यन्त-गुरुप्रसादी ३८
स्तोकेन कालेन हि गुर्जरीय-षट्पुस्तकान्येष समभ्यगीष्ट ।
चत्वारि चाऽप्याङ्गलपुस्तकानि, जहौ तदभ्यासमतुच्छबुद्धिः।३९।
स शैशवे द्वादशवर्षमात्रः, शिक्षामशेषां व्यवहारकीयाम् ।
अह्नाय सम्प्राप्य बुभूषुरासी-दादर्शभूतो महतामपीह ॥४०॥

तदर्थमेतज्जनकं समूचे, प्रधानशिक्षाप्रद आग्रहेण ।
महेभ्य! सम्प्रत्यमुमुग्रबुद्धिं, नीहालचन्द्रं परिपाठय त्वम्॥४१॥
असाववश्यं भविता महीयान्, त्वदन्वयाऽऽकाश गभस्तिहस्तः।
समस्त-धीमज्जन-चित्तपद्मा-ऽऽकरप्रकाशी जगदद्वितीयः ॥४२॥

वंशस्थवृत्तम्

यदस्य बुद्धिःप्रतिभात्यलौकिकी सुरेश्वराऽऽचार्यधियोऽपि जित्वरी
समागताऽशेषविशेष-वादकृत्-प्रमत्त-मातङ्ग-मदाऽपहारिणी।४३।
नीहालचन्द्रस्य मनस्तु काम-मत्यन्त-वैराग्यमयं यतोऽभूत् ।
अतः स ऐच्छद्गुरुराजपार्श्वे, सद्धर्मशिक्षां परमार्थदात्रीम् ॥४४॥
कालेऽधुना या व्यवहारशिक्षा, सत्रा तया धार्मिक-शुद्धशिक्षा ।
नो दीयते मुख्यतया शिशूना-मतोऽस्ति धर्मे दृढता न तेषाम् ४५

इन्द्रवंशा

आत्मानमप्याशु न धर्म-संस्कृते
रादर्शभूतं परिकर्तुमीशते ।
अश्यन्ति नूनं निज-धर्म-सत्क्रियाऽ
नुष्ठानतस्ते शिशवश्च सर्वथा ॥ ४६ ॥

इत्थं विमृश्यैष चरित्रनायको,
दुष्प्राप मानुष्य-जनुश्च सार्थकम् ।
सौवं निनीषुः करुणाऽऽर्द्र-मानसः,
आसीत् सयत्नः सुगुरूपलब्धये ॥ ४७ ॥

ततः प्रभृत्या नियमेन शश्व-दित्वा च चैत्यं जिनदम् बभूव ।
गुरोः सतः पार्श्वमुपेत्य योगे, तद्वाक्य-पीयूषमलं पपौ सः ।४८।
भवादमुष्मादतिगाढपङ्का-दात्मानमुद्धर्तुमना मनीषी ।
प्रतिक्रमान् पञ्च कियन्ति सूत्रा-ण्यावश्यकान्येष पपाठ सम्यक् ॥
यथा फलानीह वटस्य लोके, पितुः समानास्तनुजास्तथैव ।
एतां जनोक्तिं चरितार्थयन् हि, पितेव जातोऽखिल-सद्गुणोऽयम् ॥
धर्माऽनुरागाऽधिकरक्त आसीत्, संस्कार उग्रः पितुरस्य यादृक् ।
चरित्रनाथीय-विशुद्ध-चित्ते, समक्रमीत्सैव विशेष एषः ॥५१॥
श्रीफूलचन्द्रो जनको ह्यमुष्य, सन्ध्याद्वयाऽऽवश्यक-धर्मकृत्यम् ।
कृत्वैव चैवं जिनमूर्तिपूजां, नित्यं ववल्भे निरवद्यकर्मा ॥५२॥
चरित्रनेताऽपि महोग्रबुद्धिः, सत्रा च पित्रा प्रतिधस्रमेषः ।
त्रैकालिकाऽऽवश्यक-सर्व-धर्म-कृत्यं विधातुं नियमेन लग्नः ५३
भवान्तराऽऽराधित-शुद्ध-धर्म-संस्कारयोगाज्जननेऽप्यमुष्मिन् ।
चान्द्री कलेवोज्ज्वलधर्म-दार्ढ्यमवर्द्धत् प्रत्यहमेतकस्य ॥५४॥

-मालिनी

प्रतिसमय-मनेकाऽऽयात-विद्वद्गुरूणां,
क्रम-कमल-सुसेवा-तद्विशुद्धोपदेशैः ।
श्रुतिपथमुपनीतैः पूर्ण-वैराग्य-सम्पद्,
भवितुमलगदेतच्चाऽन्तरात्मा विमोहः ॥ ५५ ॥

-वसन्ततिलका

संसार-जालपतिता अतिमूढ-जीवाः,
पारापता इव सदाऽनुभवन्ति दुःखम् ।

येऽपि स्वकीय-धन-पुत्र-कलत्र-भृत्या
स्तेऽपि ध्रुवं न हि भवन्ति कदापि नैजाः ॥५६॥

यद्यौवनं भवति सौख्यदद् जनानां,
नित्यं न चाऽस्ति तदपि स्फुट-विद्युदाभम् ।
पुष्णाति यां तनुमशेपजनः सुखाय,
साऽप्येकदा परिजनैरिह दह्यते वै ॥ ५७ ॥

मोमुह्यते कथममुत्र विवेकि-जीवो,
येनाऽऽशु नाशमुपयाति विवेक-रत्नम् ।
तस्मादमुं परिविहाय सुधीमता हि,
निःश्रेयसाय यतितव्यमवश्यमाशु ॥ ५८ ॥

इन्द्रवज्रा।

संसार-कारागृह-संनिवासाद्, मुक्तिः कथं मे भवितेति चित्ते ।
कुर्वन् विमर्शं बहुधा तदन्ते, चारित्रलाभ स हि निश्चिकाय ५९

परं किलैतन्नहि पारयेऽह-मत्र स्थितः सम्प्रति बन्धुमध्ये ।
विचिन्त्य चैवं हृदि गुप्तरीत्या, ययौ ततो गुर्जरदेशमेकः ।६०।

स शैशवस्थोऽपि विशेषशास्त्राऽभ्यासी विरक्तोऽधिकधर्मरक्तः ।
सर्वत्र लोकैरतिसत्कृतोऽभूद्, नीहालचन्द्रः प्रतिभाविशिष्टः ।६१।

वात्सल्यतः सज्जन-सद्गृहस्था-स्तत्राऽपि शास्त्राऽधिकशिक्षणाय ।
सर्वप्रबन्धं व्यदधुः सयत्ना, एकत्र मुख्ये नगरे विशाले ॥६२॥

इतश्च पुत्रं तमवीक्षमाणा, निर्विण्ण-चित्ता जनकाऽऽदिवर्गाः ।
समाययुस्तत्र गवेपयन्तः, प्रदर्शयन्तः सुतमोहमुग्रम् ॥६३॥

आलोक्य पुत्रं वहु मोदमाना, आगृह्य सम्यक् प्रतिबोध्य सर्वे ।
आनिन्यिरे सादरमालयं तं, भूयोऽपि गेहान्निरगाद्विरागी ।६४।
इत्थं कियद्वारमसौ न्यरोधि, गृहं समानीय कुटुम्बवर्गैः ।
तथापि लब्ध्वाऽवसरं मुमुक्षुः, स राजकोटं नगरं ह्यगच्छत् ।६५।

स्रग्धरा

तत्रैजन्सीवकीलो वदितुमतिपटुर्मातुलो यस्तदीयो,
लक्ष्मीचन्द्राऽभिधेयः सकल-परिजनैः प्रेषितो नीतिविद्वान् ।
आगत्याऽनेकयुक्त्या शम-दमन-भिदा दर्शयन् प्रत्यबोधि,
नैच्छत्स्थातुं गृहेऽसौ दृढतरमतिकः सन्तरीतुं भवाब्धिम् ।६६।

शार्दूलविक्रीडितम्--

येषां चेतसि वर्ततेऽचलतरा वैराग्यलक्ष्मीः परा,
तृष्णा मानस-सद्मनो विषधरी निष्काशिता यैर्बलात् ।
संसारीय-समस्त सौख्यमनिशं जानन्ति तुच्छं परं,
धन्यास्ते जगदर्चनीय-चरणास्तिष्ठन्ति गेहे कथम् ? ।।६७।।
स्थेमानं मनसो विलोक्य सुधियो बाल्येऽपि तस्येदृशं,
धर्मे जन्म-जरा-विपत्ति-मरण-क्लेशौघ-विच्छेदके ।
चित्ताऽऽह्लादमुपागतः स हि ततो यातः पुरीमात्मनः,
पश्चात्सोऽपि पुरीजनैरविदितः प्रापत् पुनर्गुर्जरम्  ।।६८।।

उपेन्द्रवज्रा--

यथा न मां केऽपि जनाः स्वकीया, जानीयुरित्थं मनसाऽवधार्य ।
तथा स्थितो धार्मिक-जैनशास्त्राऽ-भ्यासं विधातुं ह्यलगत्सयत्नः।।

स्वर्मधनिष्ठा जनकादयोऽपि, संसार-निस्तार-पथाऽधिरूढम् ।
मत्वा तमेवं शुभकृत्यरक्ता, विवेकिमुख्याः शुशुचुर्न किञ्चित् ॥

नाऽयं गृहे स्थास्यति कोटिशोऽपि,
कृतैः प्रयत्नैरधुना मया हि ।
अतस्तदीयेदृश-धर्म-कार्ये,
नैवाऽन्तरायं विदधीत कोऽपि ॥ ७१ ॥

इन्द्रवज्रा—

इत्थं तदीयाऽखिल-बन्धुवर्गा
निश्चित्य चित्तेषु तदर्थमोहम् ।
औज्झन् प्रसेदुश्च विलोक्य तस्य,
मोक्षार्थितां हार्दिक-दार्ढ्यभाजः ॥ ७२ ॥

सांसारिकाऽनेक--सखीनजस्रं,
चक्षाण आसीदतिधर्मनिष्ठान् ।
मित्राणि ! मानुष्यमिदं दुरापं,
लब्धुं न शक्यं मुहुरेतकस्मिन् ॥ ७३ ॥

लब्ध्वा कथञ्चिद्बहु--पुण्ययोगा--
च्चिन्तामणिप्रायमवश्यमेतत् ।
यतेत धीमानमृताय तूर्णं,
मुधैव नो चेदिदमत्र याति ॥ ७४ ॥

यथा दिनेशः समुदेति कल्ये, यात्यस्तमप्येष दिनाऽवसाने ।
संसार-चक्रे भ्रमतश्च जन्तो-रुत्पत्ति-नाशौ भवतस्तथैव ॥७५॥

यद्गर्भवासे जनने च मृत्यौ, जाजायते दुःखमसह्यमेषाम् ।
दृष्ट्वाऽन्यदीयं तदवश्यमेव, सौवस्य तस्याऽनुमितिं विधत्ताम्॥७६॥

यावन्न कैवल्यमियर्ति जीवः, कर्माणि सर्वाण्यवधूय विद्वान् ।
तावन्निपातो भवसागरेऽस्मि ञ्जीवस्य नूनं भवतीति वित्त ॥७७॥

अत्यद्भुतं रूपमुदीक्ष्य दीपे, यथा पतित्वा म्रियते पतङ्गः ।
तथैव कान्ता-सुख-लिप्सया हि, विनाशमायात्यतिमूढजीवः ॥

मृत्वा पुनर्यो न हि लाति जन्म, तस्यैव मृत्युर्जगति प्रशस्तः ।
जातो न को वा म्रियते जगत्यां, मृतश्च को ना न हि जायतेऽस्मिन्॥

यावच्च देहे पटुतेन्द्रियाणां, कालो न वा यावदुपस्थितोऽस्ति ।
तावच्छिवश्री-प्रतिपत्तयेऽत्र, धर्मो विशुद्धः परिषेवणीयः ॥८०॥

चरित्रनेता परिपूत-चेता, विलुप्तकल्पायित-मोह-मायः ।
विहाय संसार सुखं समग्रं, बालोऽपि चारित्र-जिघृक्षुरासीत् ॥

परन्तु स श्रीमति तुङ्गवंशे, जन्माऽऽप्य पित्रादि कुटुम्ब-वर्गे ।
सर्वार्द्धिमत्त्वेऽपि यदिच्छतीह, चारित्रलाभं तदतीव चित्रम् ॥८२॥

सञ्जायमानेदृश-किंवदन्ती-भीत्या न चाऽऽत्मयन्निज-मानसीयम्।
उच्चैर्विचारं प्रियमित्रवर्ग-मप्येष गम्भीरमतिः कदापि ॥८३॥

मनो हि यस्येदृश-धीर-पुंसो, वैराग्यमायाति निसर्गतश्च ।
संसारलीला विषवद्विभाति, तदीय संशुद्ध-विरक्त-चित्ते ॥८४॥

वैराग्यवार्ता वनिताऽनुरागि-यूनामिवाऽयं गृह-सन्निवासः ।
दुःखाय शश्वद्भवतीह नूनं, निवृत्त ।।।गाऽऽश्रित-मानसानाम् ८५

मालिनी

स्रजमिव निज-मूर्ध्ना सर्वदापूज्यकाना-
मवहदधिक-भक्त्याऽऽदेशनं मोदमानः ।
कथमपि तदवज्ञां जातुचिन्नैव कुर्व-
न्ननवरत-तदाज्ञा-वर्तमानः स आसीत् ॥ ८६ ॥

शार्दूलविक्रीडितम्

चारित्र-ग्रहणे तु लातुमसकौ ताताऽऽदिकानां वचः,
काठिन्ये न्यपतत् तथापि विजय-श्रीसिद्धिसूरीश्वरम् ।
जैनाचार्यमनेक-शास्त्र-निपुणं दीक्षां ययाचे भृशं,
भक्त्या सर्व-भयाऽपहां सुभविनां पापौघ-भूध्राऽशनिम् ॥ ८७ ॥

सोऽप्याचष्ट महामते ! त्वमधुना संवर्तसे शैशवे,
पित्रादेर्वचसा विना तव मया दातुं न सा शक्यते ।
तस्माद्गच्छ तदीय-सम्मतिदलं लात्वाऽऽगतोऽसि चेद्,
तर्ह्येतत्सकलं विचार्य भवतो दास्यामि दीक्षामहम् ॥ ८८ ॥

इत्याकर्ण्य दुरापमुत्तरमसौ सूरीन्द्र-पद्माऽऽननात्,
सर्वस्वेऽपहृते धनी जन इव क्लेशीभवन् भूरिशः ।
किं कुर्यामधुनैतदर्थमचिरं कार्यं कथं सेत्स्यति ?;
वारं वारमिति प्रधीरतितरां तात्राद्धयेऽचिन्तयत् ॥ ८९ ॥

इन्द्रवंशा

गन्तास्मि गेहं तदपि ध्रुवं नो, दास्यन्त्यनुज्ञां जनकाऽऽदयो मे ।
चारित्रमादातुमहं पुनर्वा, नैवाऽऽगमिष्यामि ततः कदापि ॥९०॥

इत्थं मनोवाञ्छितकार्यसिद्ध्यै, विचार-वार्धौ पतितस्य तस्य ।
क्रमेण चित्ते द्रढिमानमापत्, सुनिश्चिता संयमसञ्जिघृक्षा ॥९१॥

यतो जगत्यां महतां प्रतिज्ञा, कदापि वैफल्यमुपैति नैव ।
गीर्वाणि-सम्भाषितवच्च सत्या, वर्वर्ति कालत्रितयेऽपि नूनम् ॥

समारभन्ते यत ईदृशं ते, महाजनाः प्रौढधियः सुकृत्यम् ।
प्रागेव सर्वं स्वधिया विमृश्य, विशालचित्ते श्रुत-पारयाताः ॥

मालिनी

चलति जगति सेना निर्जिताऽनेकवीरा,
परिचलति कदाचिद्रत्नसानुश्च लोके ।
उदयति दिशि भानुः पश्चिमायां तथापि,
विचलति न हि वाणी सद्भिरुक्ता कथञ्चित् ॥९४॥

वसन्ततिलका

तद्राजकोटनगरीय-महोग्रशक्ति
कैजन्सितामुपगतस्य हि बालसूनोः ।
लोक-प्रभूत-यशसो गुणवद्धकील-
लक्ष्म्यादिचन्द्र-शुभनाम-धरस्य तस्य ॥९५॥

तन्मातुलस्य जनताऽतिग-सन्महिम्ना,
न क्वाऽपि कोऽपि मुनिपुङ्गव एतकस्य ।
संवेगिनोऽधिकतराऽऽतुरतामितस्य,
दीक्षां प्रदातुमशकद्भृशमर्थितोऽपि ॥९६॥ (युग्मम्)

पित्रादि--सम्मतिमृते न हि केऽपि तर्हि,
कश्चाऽपि योग्य-मनुजं सुधियं मुमुक्षुम् ।
प्राविव्रजन्नखिल-लक्षण-लक्षिताङ्गं,
श्रीवीर-शासन-रता ध्रुवमेव मौनाः ॥ ९७ ॥

इन्द्रवज्रा

लात्वाऽपि चारित्रमवश्यमेव, जित्वा च सार्धं मनसेन्द्रियाणि ।
कुर्वन्त आमन् बहुधा तपस्या, आत्मानमुद्धर्तुमशेपदुःखात् ॥९८॥

चारित्रमादातुमतुच्छबुद्धि-श्चरित्रनेताऽपि दृढीकृताऽऽत्मा ।
केनाऽपि सुश्रावक-सज्जनेन, चचाल दाहोदपुरं प्रतीतः ॥९९॥

तत्राऽऽगतश्चैत्यमुपेत्य भव्यं, जिनेन्द्र-पूजां परया च भक्त्या ।
विधाय तस्मादपि तूर्णमेष, "महेरवाडा" पुरदिश्य चालीत् ॥१००॥

मार्गे किलैकाऽऽम्रतरोरधस्ता-दुत्तार्य वस्त्राऽऽभरणादिसर्वम् ।
स्वपाणिना नन्द-समुद्र-रन्ध्र-भूमानवर्षे[१९४९] शुचि-शुक्लपक्षे १०१
वैश्वे तिथौ चन्द्रदिने सहर्षं, विलुञ्च्य केशान् मुनिवेषमेषः ।
आधाय सांसारिक-वस्त्रजातं, नीहालचन्द्राय ददौ स तस्मै ।
॥ १०२ ॥ युग्मम् ॥

श्रामण्यवेषी तत आजगाम, महेरवाडानगरं विशालम् ।
चक्रे चतुर्मास-निवासमत्र, सुखेन निःसङ्गमनाः स धीरः॥१०३॥

तत्रत्य-सुश्रावक-सद्गृहस्था, एनं स्वहस्तार्पित-साधुवेषम् ।
नोशन्ति तं वासयितुं स्वपुर्यां, विनिर्जिताऽशेष-कषायमेकम् ॥

परन्तु तत्रत्य-सुधीः सुधर्मा, तत्पौरमुख्यः समुपेत्य भक्त्या ।
प्रणम्य नैजे सदने निवस्तु-माग्रह्य भूयस्तमयाचतैनम् ।१०५।

वैधर्मिकस्यैव-मुदीक्ष्य तस्य, धर्माऽनुरागं विनयं च यर्हि ।
तर्ह्येव जैना मुदिता गृहस्थाः, स्वपाश्रये तं समतिष्ठिपन्त ।१०६।

भक्त्या चतुर्मासमवासयन्त, तं पाणिनीयं विदुषा वरेण ।
अध्यापिपन् भूरिधन-व्ययेन, तद्बुद्धि-साध्वाचरण-प्रसन्नाः ॥

अध्यात्मशक्तिं मतिवैपुलत्व-मुत्साहितां बाहुबलं ह्यमानम् ।
प्रादीदृशत्सर्वनिरोधकर्तॄन्, चरित्रनाथो जगतीतलेऽरिगान् १०८

कौटिम्बिकाऽहेय-विशेष-मोह-मायाऽऽदिकं पैत्रिकसम्पदश्च ।
तृणाय मत्वा परिहाय चैष, चारित्रलक्ष्मीं भजते स्वशक्त्या ॥

भुजङ्गप्रयातम्

चतुर्मास-पूर्तौ ततः संविहृत्यो-
मताग्राममागान्मुनिः सोऽतिहृष्टः ।
स्थितस्तत्र पुर्यां मुनीन्द्रः सुविद्वान्,
विजित्कान्तिनामा महाशान्तचेताः ॥ ११० ॥

अदात्सोऽस्य नाम्ना विजित्पश्चिमस्य,
बहु-श्रीक-पंन्यास-भावाऽभिधस्य ।
प्रवादि-द्विपेन्द्रव्रजाऽखर्व गर्वं,
विहन्तुं मृगेन्द्रोपमत्वं गतस्य ॥ १११ ॥

वियद्बाण-रन्ध्रेकमाने हि वर्षे,
स्वावूर्जे-कृष्णे तिथौ वैश्वदेवे ।
बलिष्ठे सुलग्ने भवस्तोमहर्त्रीं,
परामार्हतीं शास्त्ररीत्या सुदीक्षाम् ॥११२॥ युग्मम्॥

उपजातिः

प्रसङ्गतोऽत्र प्रथिताऽनुयोगा-ऽऽचार्यस्य पन्यास-विभूषितस्य ।
श्रीमद्विजिद्भाव-समाख्यकस्य, पट्टावलीं तां परिचाययामि ११३

मालिनी

प्रभव-विजयसूरिः सप्तदश्यां शताऽब्धा-
मभवदखिल-जैनाऽऽचार्य-चूडामणिः सः ।
तप-गण-गगनेऽस्मिन् भास्करः प्रोदियाय,
यमिह सकल-जैना मन्वते सार्वभौमम् ॥११४॥

उपजातिः

तदाज्ञयाऽसावनुयोगपूर्वा-ऽऽचार्याऽऽत्त-पन्यासपदः प्रविद्वान्
श्रीसत्यपूर्वो विजयस्तदानीं, क्रियां समुद्धर्तुमना बभूव ॥११५॥

वसन्ततिलका

कौलिङ्गिकाऽऽदि सहवासितयाऽन्यतो वा,
सञ्जात-साधु-शिथिलाऽऽ-चरणाऽऽदि-दोषान् ।
व्युच्छेत्तुमेव नियतीकृत-साधनं यत्,
वित्त क्रियोद्धृतिमतुच्छधियस्तदेव ॥ ११६ ॥

आत्मोन्नतेः सुगम–वर्त्मनि सञ्चरता–
मक्षय्य–सौख्य परिपित्सु–मुनिव्रजानाम् ।
स्वाचार––रत्न–परिहार––कर––प्रमादाऽ
ऽत्यन्त––प्रलोप––करणैकमना भवन् सः ॥ ११७ ॥

इन्द्रवंशा

प्रस्थाय धीमानथ सत्वरं ततः,
सम्प्राप्य राणोदयपूर्वकं पुरम् ।
आराध्य तां शासनदेवतामरं,
संतस्थुषीं तां पुरतः किलैक्षत ॥ ११८ ॥

साऽवोचतैनं त्वयकाऽधुना कथं ?,
ह्याकारिताऽहं दिश कृत्यमाशु मे ।
सोऽप्यब्रवीत्तां कुरु नः सहायतां,
संवेग–शैथिल्य–विभागमिच्छताम् ॥ ११९ ॥

सा देविका तं पुनरेवमूचुषी,
स्वामिन्नवश्यं तव मानसेप्सितम् ।
सिद्धिं व्रजिष्यत्यचिरेण सद्गुरो !,
व्याहृत्य चैवं ह्यभवत्तिरोहिता ॥ १२० ॥

उपजातिः––

निशीथचूर्णी–धृत–पाठमूलात्,
संवेगि–चिह्नं विदधे स एवम् ।
चूर्णैः सुमिश्रीकृत–खादिरेण,
रागेण रक्तीकृतमुत्तरीयम् ॥ १२१ ॥

इन्द्रवज्रा

पन्यास-सौभाग्य-विजिच्छरण्यः,
पट्टं तदीयं समलञ्चकार ।
सैद्धान्तिकः शासन-पद्म-भानु-
स्त्यक्तः कषायैर्जित-वादिवृन्दः ॥ १३२ ॥

उपजातिः

श्रीरत्नपूर्वो विजयो विशेष
तत्त्व-प्रवेत्ता जगति प्रसिद्धः ।
पन्यास-भागस्य विशेषपट्टं,
समग्रहीदुज्ज्वल-शील-शाली ॥ १३३ ॥

अमुष्य शिष्येष्वखिलेषु मुख्यः,
स्वीया-ऽन्यदीया-खिल-तन्त्र-विद्वान् ।
श्रीभावपूर्वो विजयो बभूवान्,
पन्यासयुग् गौरव-पट्ट-संस्थः ॥ १३४ ॥

महात्मनश्चाऽस्य जगद्धितेच्छोः,
स्वाचारनिष्ठस्य महोपकर्तुः ।
अत्युज्ज्वलं जीवन-सच्चरित्रं
चित्रीयते चाऽऽधुनिकाऽन्य-चित्ते ॥ १३५ ॥

स गुर्जरे सप्त-शताऽब्दिकायां,
श्रीमत्सुधी-शीलगुणाऽऽख्य-सूरेः ।

महामहिम्ना वनराज-चाव
डाऽऽख्यः प्रतापी पृथिवीसुजानिः ॥ १३६ ॥
अवासयच्छ्रीअणहिल्लपूर्वं
पुराऽभिधानं नगरं विशालम् ।
उद्यान-वापी-सरसी-सुकूप
श्रियाऽभिरामं जनता-निवासम् ॥१३७॥ (युग्मम्)
जुगोप कष्टं प्रतिपन्नमेन
माभीरक-श्रीअणहिल्लनामा ।
अतस्तदीयाभिधयैव लोके
प्राचिख्यपत्तद्वनराजराजः ॥ १३८ ॥
प्रख्यातिमत्पट्टन-राजधान्यां,
राज्याऽऽसनेऽनेकनृपा बभूवुः ।
सोलङ्क-वंशोद्भव-चावडाऽऽख्य
सद्गोत्रजाता भुज-भूरि-शौर्याः ॥ १३९ ॥
तेष्वार्हताः शश्वदहिंसनाऽऽत्म--
विशुद्ध-धर्मं ह्यनुसस्रुरेते ।
कुमारपालो वनराज-चाव--
डाऽऽद्या महीन्द्राऽश्रित-पादपीठाः ॥ १४० ॥
कुमारपालः कलिकाल-सर्व--
ज्ञ-हेमचन्द्राऽभिध-सूरिराजः ।
गिरा ह्यमारीपटहं नरेन्द्रो,
देशेषु चाऽष्टादशसंज्ञकेषु ॥ १४१ ॥

आद्योष्य तेष्वेव महाकृपालु--
निःशेष-जीवेष्वभय-प्रदानम् ।
कृत्वा स मारीत्यभिधामपीह,
प्रासेधयत्केवल-शारिकासु ॥ १४२ ॥ युग्मम् ॥

मालिनी

उदयन-विमलाऽऽद्या मन्त्रिणस्तादृशा हि,
सतत-सुकृत-कृत्याऽऽराधनैक-प्रवृत्ताः ।
दिशि दिशि परिगीत-स्फार-सत्कीर्तिमालाः,
इह हि समभवंस्ते जैनधर्मैक-रक्ताः ॥ १४३ ॥

इन्द्रवज्रा

एतादृशे पट्टन-पत्तने हि,
(१९००) बिन्दु-द्वयाऽङ्कैक-मिते सुवर्षे ।
श्रीमल्लिनाथ-प्रभु-पाटिकायां,
श्रीरूपचन्द्राऽऽख्य-महेभ्यसूनोः ॥ १४४ ॥

सवाइचन्द्रस्य महर्द्धिकस्य,
स्वधर्मपत्न्यामतिशीलवत्याम् ।
जीवेतिनाम्न्यां बहुरूपवत्यां,
भीखाऽभिधानो ह्युदपादि सूनुः ॥१४५॥ युग्मम्

बाल्य-प्रभृत्यैव तदीय-चित्तं
संस्कार-रागेण हि धार्मिकेण ।

आसीच्च रागीकृतमेतकरागात्,
तद्भावना नित्यमवर्धीच्च ॥ १४६ ॥

स्वरिगन्नजस्रं रममाण एष,
सर्वं प्रपञ्चं क्षणिकं प्रपश्यन्।
सदैव सद्धर्म-विधावरज्यत्,
संसारवासादपि संव्यरंसीत् ॥ १४७ ॥

आर्या-गीतिः

तावदुपैदनुयोगा--ऽऽचार्यः पन्न्यास रत्नविजयः श्रीमान्।
भ्राम्यन् देशमनेकं, भव्याऽऽत्मनां प्रतिबोधनं ददमानः १४८

शिखरिणी

पुनानोऽयं पृथ्वीमनिशमनघः स्वाङ्घ्रि कमलैः,
जयन् वादिव्राजं दिशि दिशि सुयुक्त्या जिनगिराम्।
नयंस्तान् सन्मार्गं कुपथ गत-लोकानहरहो (हर्),
हरन् मोहं नृणां तम इव दिनेशः समुदितः ॥ १४९ ॥

उपजातिः

व्याख्यान-पीयूषमलं सुभव्यान्,
संसार वार्धिं तितरीषु-जीवान्।
सम्पाययन् मोह-तमिस्रमेषां,
तमिस्रहेवाऽतितरां निरस्यन् ॥ १५० ॥

तत्राऽणहिल्ले नगरे विशाले,
समागतं तम्मुनिराजमेनम् ।
नानद्यमानैर्विविधैः सुवाद्यैः,
प्रावेशयन्ताखिल-पौरलोकाः ॥ १५१ ॥

कृत्वा प्रवेशं महतोत्सवेन,
व्याख्यान-मारब्ध सुधोपमं सः ।
भव्याः ! प्रजानीत समस्तमेव,
विद्युद्विलासायितमस्ति विश्वम् ॥ १५२ ॥

शिखरिणी--

हठाल्लोके लोकान् कवलयति कालो हि बलवान्,
भवत्यायुः क्षीणं प्रतिदिनमवश्यं जनिमताम् ।
इति ज्ञात्वा सर्वे भवत शुभकृत्ये परिणताः,
समायाते काले कृत-सुकृतमेवाऽवति यतः ॥१५३॥

तरीतुं संसारं जलनिधिमपारं सुकृतिनां,
महापोतं धर्मं जिनगदितमेवाऽतिसुखदम् ।
सुखाऽऽदित्सां धद्ध्वे भजत लघु सर्वे सुभविनः,
यतोऽक्षय्यं सौख्यं नियतमतिजुष्टः प्रददते ॥ १५४ ॥

भवारण्ये भीमे कुसुम-शर-लुण्टाक-निलये,
महामोहे सिंहे विषय-ममता-गर्त-विषमे ।
घनाऽज्ञान-ध्वान्ते मद-गिरि सुदुर्गे विधिवशाद्,
व्रजन्तश्चापल्यं न हि नयत चित्ते गुरुधियः ॥१५५॥

भृशं नानादुःखं जगति सहते जीवनिकरः,
भुजङ्ग्यस्ता वामा नियतमिह तिष्ठन्ति विषमाः ।
विपद्ग्रस्तो देहो विषयजसुखं चाऽऽविरसं,
विचिन्त्यैवं धीरा लघु भवत धर्मैकमनसः ॥ १५६ ॥

वसन्ततिलका

रत्नाकरे पतित–रत्नमिव स्वपाणे–
र्मानुष्य–मप्यतिदुरापमुपेत्य लोके ।
धर्मे मतिं न हि करोति मनुष्यजन्मा,
पश्चादिवद् भवति तस्य जनुर्मुधैव ॥ १५७ ॥

मालिनी

मुनिवर–मुख–चन्द्राच्निश्च्युतं सोऽपि भीखा (खो)––
ऽमृतमयमुपदेशं किल्विषौघ–प्रणाशम् ।
श्रुति–युगल–पुटाभ्यां काममापीय हृष्टोऽ–––
भवदधिक–विरागी सर्वसङ्गं जिहासुः ॥ १५८ ॥

उपजातिः––

ततः स भीखेत्यभिधानको हि,
संसार–दुःखाऽनल–तप्तचित्तः ।
भवौषधं संयममादरेण,
पन्न्यासवर्यं तमयं ययाचे ॥ १५९ ॥
अमुष्य संसार–निवृत्तिमिच्छतो,
निशम्य सम्प्रार्थनमातुरस्य ।

द्वि-त्रि-ग्रहैक-प्रमिताऽब्दकीय [१०३२]
माघे सुमासे धवले च पक्षे ॥ १६० ॥
सौम्ये दिने श्रेयसि शुद्धलग्ने,
दीक्षां प्रदातुं सुधिये ह्यमुष्मै ।
पन्यासयुग् रत्नविजिन्मुनीशो,
निर्धार्य सङ्घं तदुवाच सर्वम् ॥१६१॥युग्मम्

पुष्पिताग्रा

अथ सकल-कुटुम्ब-वर्ग-पौरा-
स्तदुदित-मोदममानमाप्नुवन्तः ।
प्रददु-रनुमतिं तदर्थमस्मै,
सकल-पुरे च तदुत्सवं वितेनुः ॥ १६२ ॥

शालिनी

प्रादुः सम्यग् वायणामेकमासं,
नष्टप्रायाऽशेष-मोहाय तस्मै ।
भीखानागे संयमेच्छाश्रिताय,
सर्वे पौरा भूरिसत्कारपूर्वम् ॥ ॥ १६३ ॥

उपजातिः

दीक्षा-जिघृक्षा समये च तस्मि
न्नुदेति कस्यैव महात्मनो यत् ।
अतः किलैतां जनता समस्ता,
महत्त्वबुद्ध्याऽऽद्रियताऽतिहृष्टा ॥ १६४ ॥

लान्ति स्म ये तां परिहाय मोहं,
कौटुम्बिकं वैषयिकं च सौख्यम् ।
आत्माऽतिरामाः कृतिनस्त एव,
मान्याश्च धन्या जनतास्वभूवन् ॥ १६५ ॥

इत्थं महाऽऽडम्बरतः स भीखे—
त्याख्यो विनिर्णीतदिने सुलग्ने ।
पन्न्यासधुग् रत्नविजित्सुपाणे-
र्जग्राह दीक्षामतिमोदमानः ॥ १६६ ॥

विशुद्ध-भावेन दिवाऽनिशं हि,
चारित्र-रत्नं ह्यवतोऽतियत्नात् ।
ज्ञानक्रिये तस्य समैधिषातां,
सिते शशाङ्कस्य कलेव पक्षे ॥ १६७ ॥

सहोपयोगे न हि नित्यकर्मा
नुष्ठान-शीलस्य मुनेरमुष्य ।
भाव-प्रकर्षः परिवर्धमानो,
व्यालोकि लोकैः क्रमशस्तदानीम् ॥ १६८ ॥

इन्द्रवज्रा

तत्राऽपि तद्दर्शन-शुद्धिरासी-
ल्लोकेऽद्वितीया विबुधैरपीड्या ।
यदैहिकेऽतिप्रतिबन्धकेऽपि,
नैवाऽजहाज्जात्वपि तद्विशुद्धिम् ॥ १६९ ॥

वसन्ततिलका-

आजीवमात्म-रमणः कृतिनां वरेण्यः,
प्राण-प्रयाण-समये समुपस्थितेऽपि ।
व्याहृत्य पञ्च-परमेष्ठि-नमस्कृतिं स,
संश्राव्य सर्वजनतां दिवमध्यवात्सीत् ॥१७०॥

प्रासङ्गिकं परिचयं मुनिपुङ्गवस्य,
पन्न्यासभाग्विजय-" भाव " शुभाऽभिधस्य ।
संक्षिप्तमेव परिदर्श्य चरित्रकेऽस्मिन्,
सम्प्रत्यहं प्रकृतमेतदनुस्मरामि॥ ॥ १७१ ॥

उपजातिः

विशाल-पुर्याममुताऽभिधायां,
चरित्रनेतारममुं प्रदीक्ष्य ।
श्रीमान् मुनिः कान्ति-विजित् सुधीमान्,
प्रासेधयन्नीति-विजित्सुनाम्ना ॥ १७२ ॥

मालिनी

नव-मुनिरथ साकं तेन तस्माद्विहृत्य,
वडनगरमगच्छत् तत्र पन्न्यासवर्यः ।
प्रथित गुणि गणाढ्यः श्रीप्रतापाभिधेयो,
न्यवसदपर-साधुः सिद्धिपूर्वो विजिच्च ॥१७३॥

पृथ्वी

स एव मुनिपुङ्गवः प्रथित-सिद्धिसूरीश्वरो,
विभाति जगतीतलं क्रम-कजैः पुनानोऽधुना।
जिनाऽऽगम-पयोनिधेरुपगतोऽस्ति पारम्परम्,
प्रबोधयति सज्जनाननिशमेव धीराग्रणीः ॥१७४॥

प्रतापविजयो महानिह हि सर्वपन्न्यासिनां,
शिरोमणिरुदारधीः स्वपर-शास्त्र-पारङ्गतः।
प्रसिद्ध--गुरु--दीक्षण--प्रवर-योग-संसाधने,
न्ययोजयदमुं मुनिं विजय-नीतिसंज्ञं मुदा ॥१७५॥

गीतिः

चरम-जिन-शासनेऽस्मिन्, सामायिक-परिहारविशुद्धीमे(चै)।
छेदोपस्थाप्य-सूक्ष्मसम्पराय-यथाख्यातचारित्रम् ॥१७६॥

उपगीतिः

विलसति तेषु प्रथमं, दीक्षायां मुनीनामधुना।
तत्सामायिकसंज्ञं, ददति चारित्रं श्रीगुरवः ॥ १७७ ॥

गीतिः

सुचिरं परीक्ष्य पश्चाद्, उद्वाह्य दशवैकालिकयोगञ्च।
छेदोपस्थाप्यनाम-चारित्रं द्वितीयमपि सन्ददते ॥१७८॥

उपगीतिः

सदोषाऽदोष-पर्या-यं पौर्वं छित्वा गणेशः ।
ददते यच्चारित्रं, तदुच्यते छेदोपस्थाप्यम् ॥ १७९ ॥

उपजातिः

तद्योग्यताऽऽपन्नमशेष-धीम
जनाग्रगण्यं समधीत-शास्त्रम् ।
अमुं चरित्राऽधिपतिं विदित्वा,
ख-बाण-निध्येकमिते सुवर्षे[१९५०] ॥ १८० ॥
माघे सुमासे शशि-शोभि-पक्षे,
गणेश-तिथ्यामसुरेज्य-वारे ।
पोरे विशाले नगरेऽतिरम्ये,
शान्तोऽतिदान्तो मुनिराजवर्यः ॥ १८१ ॥
पन्यास-भाक् श्रीविजयोपपदी-
प्रताप-नामा बलवत्सुलग्ने ।
प्रायच्छदस्मै मुनि नीतिनाम्ने,
दीक्षां परां चारु-महामहेन ॥ १८२ ॥
( त्रिभिर्विशेषकम् )

पानाऽऽदिचन्द्राऽऽत्मज साकलाऽऽदि
चन्द्रो महेभ्यः स्व वसु-व्ययेन ।
मेरुं तथाऽष्टापद-रैवताऽऽदीन्,
पवित्र-तीर्थान् रचयाञ्चकार ॥ १८३ ॥

शिखरिणी

कला वाला श्रेष्ठी ह्यकृत शुभभावेन महता,
महर्द्धिः श्रद्धालुः सुकृत रतिरुद्यापन–महम् ।
दिनान्यष्टौ यावे–ज्जिनवर–समर्चा समभवत्,
सुगीतैः सद्वाद्यैर्भविक-जनता–नृत्य-निकरैः॥१८४॥

शार्दूलविक्रीडितम्

प्रान्ते साकलचन्द्रकः शुभ--मतिः श्रीपानचन्द्राऽङ्गभूः,
सर्व–ज्ञातिक–तत्पुरीय--जनताः सन्मोदकान् प्राशिशत् ।
व्यत्यैत्तत्र महोत्सवे सुकृतिनामग्रेसरः श्रद्धया,
ह्याशा–पञ्च–सहस्रकेण विमिता मुद्राः स्वधर्मे रताः ॥१८५॥

उपजातिः –

ज्ञानादि–नानाविध–धर्म–कृत्ये,
तत्रागताः सज्जन–सद्गृहस्थाः ।
श्रेयोऽर्थिनो भूरिधनानि सर्वे,
वितीर्णवन्तः शुभभावव..ः ॥ १८६ ॥

शार्दूलविक्रीडितम्

वर्षाकाल उपागते वहुजना आगत्य वह्वाग्रहात्,
सङ्घत्या मुनिराजसेनमनघं बीजापुरं निन्यिरे ।
चातुर्मास–मतिष्ठदेष मतिमांस्तत्रैव सम्प्रार्थितः,
पंन्यासः शुभकृत् प्रतापविजयः श्रीमान् सुशिष्यैः श्रितः ॥१८७॥

वसन्ततिलका-

संसार-दुःख दहनाऽधिक दह्यमानं,
चेतः सतां निज सुधामय-देशनायाः ।
शश्वत्सुवृष्टिकरणेन दयाऽऽर्द्रचेता,
आनन्दयद् घन इवाऽधिक-तप्तभूमिम् ॥ १८८ ॥

शिखरिणी

असारे संसारे न हि दधति केऽप्यत्र मनुजाः,
स्थितिं नित्यां सर्वे जनन-मरण-क्लेशमसकृत् ।
सहन्ते तन्मुक्त्यै जिनगदित-धर्मं ह्यनुपमं,
सुख-प्रेक्षावन्तो भजत लघु यूयं सुमनसः ॥१८९॥
तडिल्लोलाऽऽकारा धन सदन-दाराऽऽदिकजना,
विपद्यन्ते सर्वे जल इव तरङ्गा अहरहः ।
अतो विज्ञा नैषु क्षणमपि रमध्वं कथमपि,
विहायैतत्सङ्गं कुरुत निजकल्याणमचिरम् ॥१९०॥

इन्द्रवंशा

इत्थं गुरोस्तस्य निशम्य देशनां,
सांसारिकाऽशेष-विमोह-नाशिनीम् ।
वैराग्य-चिन्तामणि-रत्नदायिनीं,
संसार-दुष्पार समुद्र तारिणीम् ॥ १९१ ॥
नत्वाऽन्य-सच्छ्रेष्ठि-निकेतन-स्थितः,
कश्चित् पटेलः शुभ चेचराऽभिधः ।

प्रोद्भूत-वैराग्य-विशेष-वासितः,
श्रीसद्गुरोस्तस्य पदाब्ज-माश्रयत् ॥ १९२ ॥

उपजातिः

डाहाऽभिधानोऽपि तथैव भूरि
संसार-वैराग्यमभिप्रपन्नः ।
अशिश्रियद् गौरव-पाद-कल्प
वृक्षं मुमुक्षुर्भव-वार्धि-मध्यात् ॥ १९३ ॥

इमौ ततः श्रीमुनिराजपार्श्वे,
लब्धौ समध्येतुमुभौ सुखेन ।
शाब्दं सुशास्त्रं महता श्रमेण,
ग्रन्थांस्तथा प्राकरणाननेकान् ॥ १९४ ॥

क्रमात्तदर्हौ समधीत-शास्त्रौ,
प्राव्राजयत्तौ मतिमान् सुलग्ने ।
क्रमात् सुखाब्धिर्विबुधश्च नीतिः,
श्रीमान् महीयान् बहु-शास्त्र-विद्वान् ॥ १९५ ॥

धियः प्रकर्षाद् धृतवांस्ततोऽस्य,
कुशाग्र-बुद्धेः स हि वेचरस्य ।
बुद्ध्युत्तरं सागर-नामधेय
माचार्यतामापदयं हि पश्चात् ॥ १९६ ॥

डाहाऽभिधानस्य च नामधेयं,
श्रीदानपूर्वं विजयं प्रचक्रे ।

इत्थं ह्युभौ संयम-रत्नमित्वा,
निःसीम-मोदं समवापतुस्तौ ॥ १९७ ॥

वसन्ततिलका

व्योमेषु-नन्द-शशि-सम्मित-विक्रमीये[१९५०],
संवत्सरे जलद-कालिकसन्निवासम् ।
बीजापुरे पुरवरे कृतवान् सुधीमान्,
लाभो महानभवदत्र समस्तसङ्घे ॥ १९८ ॥

स्वागता

प्रावृषो विरमणे मुनिनाथै-स्तत्पुरः प्रविहरद्भिरुदारैः ।
शिष्य-वृन्द-परिजुष्ट-पदाब्जैः, प्रापि राजनगरं धुत-पापैः १९९

वेण्ड-शङ्ख-पटहाऽऽदिनिनादै-र्दिव्य-वेष-रमणी-जन-गीतैः ।
भूरि-चारु-रचितोत्सव एष, प्राविशत्पुरवरं मुनिराजः ॥२००

दीपचन्द्र-तनुजन्म-महेभ्य--वीरचन्द्र-रमणीय-सुहर्म्यम् ।
अध्युवास मुनि-मण्डल-युक्तः, श्रेष्ठि-वर्ग-परिवन्दित-पादः२०१

उपजातिः

पुनस्ततः श्रेष्ठिजनाऽऽग्रहेण,
लुवारपोलीय उपाश्रयेऽसौ ।
भू-बाण-नन्द-क्षिति-वैक्रमेऽब्दे[१९५१],
पयोदकालं गमयाञ्चकार ॥ २०२ ॥

शिखरिणी

चतुर्मास्याः पूर्तौ परममुनिराजः प्रविहरन्,
गतो भोयण्याख्ये प्रथितवरतीर्थे ह्यघहरे ।
इहाऽद्राक्षीद्रम्यां जिनवर-विभोर्मूर्तिमनघां,
प्रणम्यैतां नत्वा स्वममत सुधन्यं गुणनिधिः ॥२०३॥

इतोऽगात् तारङ्गाऽभिधमपि महातीर्थमसकौ,
समं शिष्यैः सर्वैरतिशय-विनीतैर्बुधवरैः ।
विलोक्यैतत्तीर्थाऽधिपति-जिननाथं प्रमुमुदे,
मुहुर्नत्वा नुत्वा विविध-नुतिवाक्यैरपि सुधीः ॥२०४॥

उपजातिः

इतोऽप्ययं केशरिआदि-नाना-
सत्तीर्थयात्रां प्रविधाय भक्त्या ।
प्रागात्त-चारित्र-पुरं समागात्,
स मेरवाडाऽभिधया प्रसिद्धम् ॥ २०५ ॥

सच्चैत्य-दण्ड-ध्वज-रोपणीय-
महामहे सङ्घ-समर्थितोऽसौ ।
प्राचीकरत्तत्र समस्त कृत्यं,
यथोक्तरीत्या गुणवद्गरीयान् ॥ २०६ ॥

स्थित्वा च तस्मिन् कतिचिद्दिनानि,
व्याख्यान-पीयूषमशेषलोकान्

अदीधपच्चैतदशेष-हार्दाऽ
ज्ञानाऽन्ध-पुञ्जं समजीहरत्सः ॥ २०७ ॥

विहृत्य तस्मादयमाजगाम,
प्रख्यातिमत् सिद्धपुरं पुरं सः ।
तत्राऽऽरम्भमद्बहुभिः सुपुम्भिः,
सुश्राविकाभिश्च महोपधानम् ॥ २०८ ॥

नानापुरेभ्यो जनताऽभ्युपेता,
स्त्रियः पुमांसश्च विवृद्ध-भावाः ।
महत्तपः श्रीउपधान नामाऽ-
नुष्ठातुकामा नगरे च तस्मिन् ॥ २०९ ॥

भुजङ्गप्रयातं

तदन्ते समग्रास्तपःकर्तृलोकाः,
प्रवृत्ते सुचारूत्सवेऽनेकधा हि ।
गुरोः पाणि-पद्म-प्रदत्ताः सुमाला,
अवाक्षुः शिरोभिः प्रहर्ष-प्रकर्षात् ॥ २१० ॥

उपजातिः

आष्टाहिकं चारुतरं ह्यपूर्व,
गुरूपदेशाद् व्यदधुश्च पौराः ।
महोत्सवं प्रत्यहमेतकेऽस्मिन्,
प्रभावनाः श्रीफलकाऽऽदिमिश्च ॥ २११ ॥

स्वधर्मिवात्सल्यमनेकमग्र्यान्,
जीवाऽनुकम्पाऽऽदिषु भूरिदानम् ।
शान्त्यादिकस्नात्र-समर्चनं च,
श्राद्धोत्तमास्ते कृतिनः प्रचक्रुः ॥ २१२ ॥

द्रुतविलम्बितम्

विहरमाण इतः करुणानिधिः,
प्रथित-वालम-तीर्थमुपागतः ।
प्रभुमुदीक्ष्य सुनम्य नृजन्मतां,
सफलतामनयत्स यतीश्वरः ॥ २१३ ॥

वसन्ततिलका

कृत्वा विहारमुमतानगरं प्रपन्नः,
श्रीमद्गुमानविजयाऽऽख्य गुरोः शरीरे ।
दुःखं निशम्य वलवत्तत एव शीघ्रं,
यातो हि राजनगरं गुरुसेवनार्थम् ॥ २१४ ॥

चैत्रेऽसिते शिवतिथौ समुपेत्य तत्र,
षण्मासका-वधिक-दुष्ट रुजाऽर्दितस्य ।
सेवा-परो निज- गुरोः सततं स तस्मि-
न्नेवाकरोज्जलद-कालिक सन्निवासम् ॥ २१५ ॥

दृग्-भूत-रन्ध्र-धरणी[१९५२]मित-वैक्रमेऽब्दे,
प्रावृष्यसौ सकल-भावुक-वृन्दमत्र ।

शत्रुञ्जयाऽऽख्य-बहुपावन-तीर्थराज-
माहात्म्यमिष्टफलदं समशुश्रवच्च ॥ २१६ ॥

स्रग्धरा

यात्रामेतस्य भक्त्या विदधति मनुजा ये महान्तः परैर्वा,
शुद्धान्तर्भावपूर्णा जनि-मृतिहरणीं कारयन्तीह यात्राम् ।
तेषां किं किं फलं वै भवति परभवे प्रस्फुटं सर्वमेतत्,
मेघ-ध्वानाऽनुकृत्या निज-मधुर-गिरा व्याचचक्षे सभायाम् २१७

उपजातिः

इतो विहारावसरे विपश्चि-
च्छ्रीमच्चरित्राधिपतेरमुष्य ।
निःशेष-दुःखोपशमाय सार-
गर्भोपदेशं बहुधा निशम्य ॥ २१८ ॥

स्रग्धरा

मोतीलालो महेभ्यः सुकृत-कृति-रतो वीरचन्द्रेभ्य-पुत्रः,
चत्वारिंशत्सहस्री सकल-जनमतो ढालपोलाधिवासी ।
संघं सिद्धाचलीयं गमयितुमनघश्चेतसि स्वस्य कृत्वा,
पन्न्यास-श्रीप्रतापाभिध-गुरुमखिलं स्वाशयं व्याजहार

॥ २१९ ॥ ( युग्मम् )

માલિની

ગુરુરથ શુભકાર્યે પ્રોદ્યતં સપ્રતિજ્ઞં,
તમધિક–ધનવન્તં પ્રોત્સહિષ્ણું તદર્થમ્ ।
ન્યગદ–દખિલ–વિદ્વદ્વૃન્દ–સુત્યસ્તદૈવં,
પર–ભવ–હિત–કૃત્યૈ તૂર્ણમેતદ્વિધત્સ્વ ॥ ૨૨૦ ॥

અભિલષતિ ય એતન્ન્યાય–લબ્ધાં સ્વલક્ષ્મીં,
મહતિ સુકૃત–કાર્યે વ્યેતુમેતજ્જગત્યામ્ ।
અનુભવતિ સ એવ શ્રીવિલાસં પરસ્મિ––
ન્નિહ હિ સફલજન્મા જાયતે પુણ્યકર્મા ॥ ૨૨૧ ॥

અમિત–ધનમવાપ્ય પ્રાણિનો યેઽત્ર લોકે,
વિવિધ–સુકૃત–કૃત્યે સ્વશ્રિયં નો વિયન્તિ ।
પર–જનુષિ ન ચૈતે ભાગ્યવન્તો ભવન્તિ,
જનનમપિ મુધૈવ શ્રીમતાં તાદૃશાનામ્ ॥ ૨૨૨ ॥

ઇન્દ્રવજ્રા

ઇત્થં પ્રબોધ્યૈષ તતો વિહૃત્ય, સાકં સ્વશિષ્યૈરમતાઽઽખ્યપુર્યામ્ ।
આજગ્મિવાંસ્તત્ર સમસ્ત–પૌરા, વેણ્ડાઽઽદિવાદ્યૈઃ પુરમાનયન્ ।

વસન્તતિલકા

ઇત્થં પ્રભૂત–બહુશસ્ત–મહામહેન,
શ્રીમાન્ પ્રવિશ્ય નગરીં કૃત–ચારુ શોભામ્ ।
સદ્દેશનાઽમૃત–મયં પરિતૃપ્ય લોકાન્,
પ્રાતીતૃપચ્ચ સકલા–નઘતાઽદ્રિ–શમ્બઃ ॥ ૨૨૪ ॥

मालिनी

कृत-विहृतिरुदारस्तत्पुराच्छ्रीमुनीशो,
विसनगरमयासीत्तत्र सुश्राद्धवर्गैः ।
रचित-वितत-भूम-ग्राम शोभां प्रपश्य--
न्नतिशय-रमणीयोपाश्रयं प्राविशत्सः ॥ २२५ ॥

मधुर-रुचिरवाण्या वारिदाऽऽराव-जेत्र्या,
श्रवसि सुखमुदारं शृण्वतां सन्नयन्तीम् ।
विविध-कलुष-राशिं प्राणिनां नाशयन्तीं,
सदसि परमयोगी देशनां दत्तवान् सः ॥ २२६ ॥

वसन्ततिलका

आगत्य राजनगरादिह वीरचन्द्र--
सूनुः कृतज्ञ-परमार्हतधर्मनिष्ठः ।
मोत्यादिलाल उपगन्तुममुं मुनीश
मत्याग्रहं ह्यकृत चालितसंघमध्ये ॥ २२७ ॥

उपजातिः

ततश्चिकीर्षोः परमं सुकृत्यं, सच्छ्रेष्ठिनस्तस्य महानुरोधात् ।
पुनः समागात्सह सर्वशिष्यै स्तद्राज-पूर्वं नगरं यतीन्द्रः २२८

पुनः स सिद्धाचलयात्रिकार्यै, सौम्ये दिने मङ्गलकारि-लग्ने ।
सहस्र-सार्ध-त्रय-संख्य-संघैः, सत्रा प्रतस्थे मुनिराजवर्यः २२९

शार्दूलविक्रीडितम्

प्रत्युत्तारक सुस्थले गुरुवरः पीयूष-तुल्याक्षरै-
र्व्याख्यानैरघताहरैः सुभविनां सम्यक्त्व-दार्ढ्य-प्रदैः ।
सर्व-भ्रान्ति-निरासकैः श्रुतिपुटैः पेपीयमानैरलं,
मायूरं घनवत्प्रमोद-जलधौ सम्माजयन् सज्जनान् ॥२३०॥

इत्थं सद्गुरु-देव-भूरि-कृपया कैश्चित्प्रयाणैरसौ,
सिद्धाद्रिं समुपेयिवान् सकुशलः संघश्चतुर्धा मुदा ।
दृष्ट्वा चादिम-तीर्थपं जिनवरं श्रीनाभिराजात्मजं,
साफल्यं जनुषः समाप सकलोऽप्येनं मुहुः संस्तुवन् ॥२३१॥

इत्थं तीर्थपतेर्विधाय विधिवच्छत्रुञ्जयस्याऽऽदरात्,
यात्रां भक्तिभरेण तत्र कतिचिद् घस्रान् समभ्युष्य सः ।
पश्चात्पट्टणपत्तनं मुनिवरस्तस्माद्विहृत्याऽऽगमत्,
सर्वैः शिष्यगणैरुदारमतिभिः शेश्रीयमाणो मुदा ॥२३२॥

वेण्डाऽऽद्यैर्विविधैः सुवाद्यनिकरैर्नानद्यमानैरलं,
सर्वाऽऽशा-परिपूर्णतामुपगतैरभ्यागतान् सद्गुरून् ।
सम्प्राप्ता-खिल-देहि कर्ण-विवरेष्वत्य-न्त-बाधिर्यतां,
कुर्वद्भिः शरदिन्दु-सुन्दर-मुखी-सीमन्तिनी-गायनैः २३३

अत्युच्चैर्बहुकेतनैश्च ललितै-र्लेलिह्यमानैर्वियत्,
सद्बन्दि-प्रमुखैः पठद्भिरनघ-श्रीमद्गुरूणां स्तुतीः ।

शङ्खध्वान-जयाऽऽरवैश्च सकलाः पौराः प्रमोदाऽऽकुलाः,
तन्वन्तः परमोत्सवं निजपुरं प्रावीविशन्नादरात् ॥ २३४ ॥
( युग्मम् )

भुजङ्गप्रयातं

दद्दौ देशनां सोऽथ तस्मिन् सुधायाः,
सदृक्षां प्रशस्यां जनाऽघौघ-लोपाम् ।
भवाब्धौ निमज्जीभवद्भव्य-जीवान्,
हठादुद्धरिष्णुं पयोद-स्वनेन ॥ २३५ ॥

उपजातिः

सुश्राविकाः श्राद्धगणाश्च सर्वे,
श्रुत्वा तदीयाऽद्भुतदेशनां हि ।
प्रभावनां प्राप्य ययुर्गृहाणि,
बाढं स्तुवन्तो मुनिराजमेनम् ॥ २३६ ॥

आसन्न-वर्षासमयं विलोक्य,
तत्रत्य-सङ्घः समुदारभक्त्या ।
प्रावृड्व्यवस्थातुममुं मुनीन्द्रं,
व्यहाग्रहीदुज्ज्वल-शील-शालम् ॥ २३७ ॥

ततो ह्ययं सर्वजनाऽऽग्रहेण,
खेतर्वसीनामकपाटिकायाम् ।
उपाश्रये राम-शराऽङ्क-भूमी- [१९५३]
वर्षे प्रचक्रे जलदर्तुवासम् ॥ २३८ ॥

निपीय भव्याः सुचिरं गुरूणां,
व्याख्यान-पीयूष रसं यथेच्छम् ।
सम्यक्त्व-दार्ढ्यं समवाप्य सर्वे,
प्रबोधमत्य-ामुपेयिवांसः ॥ २३९ ॥

जहुश्च केचिल्लशुनाऽशनाऽऽदि,
ललुश्च केचिन्नियमं विशेषम् ।
अभिग्रहं केचन दध्रुरेवं,
ददुश्च दानं बहु धर्मकार्ये ॥ २४० ॥

तत्पाटकीयाऽभ्य-महाजनानां,
मिथो विरोधो बहुवत्सरीयः ।
आसीन्महान् येन तदीय-सिद्धि-
ऋद्ध्यादि कार्ये महती च हानिः ॥ २४१ ॥

ह-ात्र धर्मे बलवान् विरोधः,
किं किं न दुःखं जनयत्यवश्यम् ।
परत्र वासो नरकेषु तेषां,
येऽमुत्र धर्मे कलहायमानाः ॥ २४२ ॥

तमप्यसौ धार्मिक-सूक्ति-युक्त्या,
विलोप्य विद्वान् दयया महत्या ।
प्रबोध्य सर्वान् समनीनयत्स,
मैत्रीं प्रशस्यां चरितस्य नेता ॥ २४३ ॥

ततश्च सर्वे सुखिनो बभूवुः,
परस्परं सख्यमुपेतवन्तः ।
सन्तुष्टुवुः श्रीसुगुरुं किलैनं,
धीमज्जनानां धुरि कीर्तनीयम् ॥ २४४ ॥

वसन्ततिलका।

श्रीम"त्प्रताप"विजयैर्गुरुभिः सहाऽत्र,
पन्न्यास-नाम-पदवी-समलङ्कृतैश्च ।
श्रीभावपूर्वविजयेन भविष्यता प
न्न्यासाऽञ्चितेन चरिताधिपतिर्न्यवात्सीत् ॥२४५॥

गुर्वाज्ञया चरितनायक एव नित्यं,
जीमूत-गर्जन-विजित्वर-निःस्वनेन ।
ओजस्विनीममृत-सन्निभ-देशनां स,
चक्रेऽत्र सभ्य-हृदयं भृशमाकृषन्तीम् ॥ २४६ ॥

गुर्वादि-सर्वमहतां पुरतः सदैव,
प्रादीदृशद्विनयमेष तदाश्रवः सः ।
गर्वं बभार हृदये न हि लेशतोऽपि,
चारित्र-रत्न-वरभूषण-भूषिताङ्गः ॥ २४७ ॥

मालिनी

नभसि सित-चतुर्थ्यामष्ट-घस्रोपवासान्,
अकृत चरित-नेता निर्जितात्मा महात्मा ।

वसु–दिवस–तदर्थाऽपूर्व चारूत्सवस्तै
र्व्यरचि भविक–जीवैः पाटकीयैरशेषैः ॥२४८॥

उपजातिः

प्रभावनाः श्रीफल–मोदकाऽऽद्यैः,
प्रचक्रिरे नित्यमनल्पभावाः ।
नानाप्रकारां जिनराजपूजां,
सद्वाद्य–गीतैरतिनर्त्तनैश्च ॥ २४९ ॥

तत्पारणा–दर्शन–लिप्सयाऽत्र,
समाययौ विक्रमपत्तनात्सः ।
सांसारिकोऽमुष्य चरित्रनेतुः,
श्रीफूलचन्द्रो जनको महीयान् ॥ २५० ॥

द्रुतविलम्बितं

तमवलोक्य सुतं हृदये पितुः,
प्रथमवत् समुदैदतिमोहनम् ।
तदुपलक्ष्य गुरुः प्रतिबोधितुं,
सदसि मिष्टगिरैव–मुपादिशत् ॥ २५१ ॥

मालिनी

इह हि जगति भव्या ! धर्म एवास्ति सारः,
सुरतरुरिव सर्वाऽभीष्टदाता स एषः ।
नवनिधि–समवाप्तिं कारयत्येष एव,
गमयति सुरलोकं प्रापयत्येष मोक्षम् ॥ २५२ ॥

शार्दूलविक्रीडितम्

तस्माद्दुर्धियमाशु सर्वमनुजा ! हित्वाऽऽत्मनः श्रेयसे,
कृत्वा धर्ममकल्मषं जिनवरैः सङ्कीर्तितं चाऽऽगमे ।
त्यक्त्वा स्त्री-धन-पुत्र गेह-सुहृदां मोहं दुरन्तं बुधा !,
अक्षय्यं सुखमिश्रतु ह्यनुपमं यद्दुर्लभं देहिनाम् ॥ २५३ ॥

वैतालीयम्

इह युवता चञ्चलोपमा,
विषय-सुखा अपि नश्वरा मताः ।
मतिविकलो ना तथापि हा !, ।
तत्तृष्णां न हि हातुमिच्छति ॥ २५४ ॥

शार्दूलविक्रीडितम्

आयुश्चापि चिरं विनाशरहितं नो जायते देहिनां,
जायन्ते विविधा गदा बलहरा देहेषु तेषां सदा ।
हन्ताऽप्यस्ति-विपज्जराऽऽधि-मरणोद्भूतं प्रभूतं भयं,
तस्मात् संयम एक एव सुधिया निर्भीक आलम्ब्यते

मालिनी

बहु-भव-कृत-पुण्यैः प्राप्यते यत्कदाचित्,
असकृदिदममुष्मिन्नाऽधिगन्तुं च शक्यम् ।
तदधिक सुरत्नापं नुः शरीरं समेत्य,
विफलयति य एतत्तज्जनुर्व्यर्थमेव ॥ २५६ ॥

उपजातिः

माता पिता पुत्र-कलत्र-भृत्या,
भ्रात्रादिका येऽप्यखिलाः कुटुम्बाः ।
प्रपाऽऽगताः पान्थजना इवाऽमी,
स्वीया विभान्तीह न तत्त्वतो हि ॥ २५७ ॥

छायेव मैघी तडितां प्रभेव,
सामुद्रिकी वा लहरीव सर्वे ।
कर्माऽनुसारात्प्रतिजन्मनीह,
भवन्ति नश्यन्ति मुहुर्मुहुस्ते ॥ २५८ ॥

नानाप्रदेशाऽऽगत-पक्षिणो वा,
यथैकवृक्षे निशि सम्मिलन्ति ।
प्रगे पुनस्ते परिहाय वृक्षं,
स्व-स्वेष्टदेशं लघु संव्रजन्ति ॥ २५९ ॥

तथैव कान्ताऽऽदिक-बन्धुवर्गा,
अभ्युष्य संसार-महीरुहं ते ।
स्वार्थं च संसाध्य विहाय सर्वं,
प्रयान्ति काले क्षणभङ्गुरत्वात् ॥ २६० ॥

आमुक्ति जीवः खलु बम्भ्रमीति,
संसारचक्रे रथचक्रवद्धि ।
चतुष्पराशीतिकलक्षयोनौ,
युङ्क्ते वियुङ्क्ते च समस्तभावैः ॥ २६१ ॥

अहो हि धीराः क्षणभङ्गुरेषु,
नैतेषु रज्यन्ति विवेकवन्तः ।
हित्वा ममत्वं स्वहिताय तूर्णं,
धर्मे श्रयन्ते परमं विशुद्धम् ॥ २६२ ॥

भुजङ्गप्रयातम्

जगत्या-मियं मोहलीला विचित्रा,
जना येषु दाराऽऽदिवर्गेष्वजस्रम् ।
धरन्ते मदीया मदीयेति-बुद्धिम्,
इमानेकदा तेऽप्यकाण्डे त्यजन्ति ॥ २६३ ॥

शार्दूलविक्रीडितम्

यद्देहस्य सुखाय शश्वदखिलाः यान्तीह दाराऽऽदिका-
नाहारैः सरसैः सदैव नितरां पुष्णान्ति यं मानुषाः ।
स्रग्वस्त्राभरणादिभिश्च सततं सम्भूषयन्त्यादराद्,
एकस्मिन् दिवसे तमत्र सुखदं हित्वैव यान्ति ध्रुवम् ॥२६४॥
कोटीशाः परमर्द्धिका नरवरा वीरा नरेन्द्रादयः,
चञ्चच्चामर-वीजिता गजपति-स्कन्ध-स्थिता यान्ति ये ।
सेनानी-प्रमुखाऽऽवृता वरवधू-वृन्द-श्रिताः सर्वदा,
तेऽप्येकत्र दिने विहाय सकलं गच्छन्ति लोकान्तरम् ॥२६५॥

वसन्ततिलका

माया-प्रपञ्च-रचितं सकलं च विश्वं,
स्वप्नोपमं तदवलोक्य विचार-दृष्ट्या ।

निःश्रेयसाय यतनं करणीयमेत
देवाऽस्ति मुख्यमिह तत्त्वविदां सुपुंसाम् ॥२६६॥

शालिनी

देही नित्यो निर्जरश्चाऽमरश्च,
शुद्धो बुद्धश्चैकरूपः परन्तु ।
एतद्देहात्यन्त सम्पर्कहेतो
रज्ञो नाशी बद्ध आभासते वै ॥ २६७ ॥

देहाऽसङ्गः सर्व--कर्म-क्षयेण,
कर्मोच्छेदः केवल-ज्ञान-लब्ध्या ।
जाते तस्मिञ्जायते चाऽयमात्मा,
मुक्तोऽबद्धः सर्ववित्सर्वदर्शी ॥ २६८ ॥

उपजातिः

अज्ञा नरा यावदिहाऽऽम(त्म)-पुत्र
कलत्र-लक्ष्मी-सदनाऽऽदिकेषु ।
मुह्यन्ति तावद्भव-काननेऽस्मि
न्ननन्तकालं परितो भ्रमन्ति ॥ २६९ ॥

वैतालीयम्

इदमिह सदनं ममाऽस्ति नो,
धन सुत-जाया-बान्धवास्तथा ।
इति विमृशति यो हि ना सदा,
ममतोदेति न तस्य कर्हिचित् ॥ २७० ॥

इह भवेऽस्ति यो ममाङ्गजो,
भविताऽग्रे स हि कस्य पुत्रकः ? ।
इत्थमेव कौटुम्बिकाः समे,
न भवति तदेषु रञ्जना सताम् ॥ २७१ ॥

शालिनी

आत्मा चायं सच्चिदानन्दरूपः,
संसारीयोपाधिमात्रं सदुःखम् ।
एवं दार्ढ्यं जायते यर्हि तर्हि,
भ्रष्टुं शक्ता बाह्यभावा न चैनम्(चास्य) ॥२७२॥
तस्माद्भव्या ! एष संसार मोहो,
बोभोत्यन्तं चात्मनः क्लेशकारी ।
एतज् ज्ञात्वा कल्पवृक्षोपमानं,
जैनं धर्मं चाऽऽद्रियध्वं किलैनम् ॥ २७३ ॥

वसन्ततिलका

नो चेद्भवोदधिममुं सुखतः कदापि,
तृष्णोर्मि-जाल-बहु-दुस्तरतामुपेतम् ।
कामारिवर्ग-वडवानल-तीव्र-तापं,
नैवोत्तरिष्यथ महामतिका अपि द्राक् ॥ २७४ ॥

शिखरिणी

भवाम्भोधौ मग्ना कुमति-जनता सत्यरहिता,
सुतप्ता कामाऽग्नि--ज्वलित-शिखया मोहकलिता ।

સદા પાપે રક્તા સતત–પર–નિન્દાऽऽદિ–નિરતા,
કથં પારં ગન્તા(ન્ત્રી)ભવ–જલનિધે–ર્ધર્મ રહિતા॥૨૭૫॥

શાર્દૂલવિક્રીડિતમ્

શ્રીમન્નીતિ-મુનીન્દ્ર-વક્ત્ર-શશિનોऽવિચ્છિન્ન–ધારાયિત
ચ્યોત–દ્ધાર્મિક–દેશનાऽમૃતમલં પેપીયમાના મુદા ।
આનન્દં ક્રમવાચ્યમેવ સકલાઃ સભ્યાઃ સમાપેદિરે,
સમ્યક્ત્વ-દ્રઢિમાનમાપુરનઘાઃ સન્તઃ કૃતાર્થા ભૃશમ્ ॥૨૭૬॥

શ્રીમદ્વિશ્વજનીન–"નીતિ" વિજયસ્યાऽમુષ્ય વિદ્યાનિધેઃ,
પીયૂષાऽતિતિરસ્કરીમઘહરીં સદ્દેશનામાર્હતીમ્ ।
શ્રાવં શ્રાવમનારતં સુભવિનઃ સાવદ્યકર્માણિ તે,
સર્વાણ્યેવ જહુઃ પરામુપરતિં પાપદ્દશેષાદગુઃ ॥ ૨૭૭ ॥

સંસાર–સ્થિતિ–તાતકં મુનિવરસ્યૈતસ્ય વક્ત્રાદરાત્,
સર્વે સભ્યજનાસ્તદૈવમદગન્ ધન્યોऽસિ યત્તે સુતઃ ।
ઈદ્દગ્વિશ્વ શિરોમણિર્વિજયતે શાસ્ત્રાऽબ્ધિ-પારઙ્ગતો,
માતા સાऽતિગરીયસી સુકૃતિની યાऽસોષ્ટ રત્નં હ્યમુમ્ ॥૨૭૮॥

રાત્રિશ્ચન્દ્રમસેવ વાસરકૃતા વ્યોમેવ તે સત્કુલં,
પુંરત્નેન મુનીશ્વરેણ ગુણવચ્ચાऽગ્રેસરેણાऽમુના ।
વિશ્વોદ્ધાર–કૃતિ–ક્ષમેણ જનતા–પાપાऽદ્રિ–દમ્ભોલિના,
સંસારऽર્ણવ–પોતકેન સુષમામાધત્ત મહ્યાં ધ્રુવમ્ ॥ ૨૭૯ ॥

ઇત્થં સૌવ સુપુત્ર–જાત–નિરઘ–શ્રામણ્ય–મૂર્તિં પરાં,
લોકં લોકમસીમમોદમબિભઃ શ્રીફૂલચન્દ્રઃ પિતા ।

श्रुत्वा तात्त्विक-देशनामनुपमां श्रीमद्गुरोराननात्,
सर्वं मानस-मोहजालमनघस्तत्कालमेवाऽच्छिनत् ॥२८०॥

एवं चारु-महामहेन नगरे श्रीपट्टणे प्राजनि,
श्रीमद्विक्रमहायनेऽनल-शराऽङ्केन्दु-प्रमाणे गुरोः ।
नीत्याख्यस्य मुनीशितुर्विजयिनो वादि-द्विपानां सृणेः,
चातुर्मास उदार-धीर-धिषणस्यैतस्य मेधाविनः ॥ २८१ ॥

उपजातिः

तस्मिंस्तदन्ते समुपाजगाम,
महर्द्धिकः पोरपुराधिवासी ।
कृती सुधर्मा मगनादिलाल
पुत्रो गुणी मोहनलालनामा ॥ २८२ ॥

श्रीमन् ! गुरो ! त्वत्कृपया चिकीर्षु-
रुद्यापनं साम्प्रतमस्मि चाऽहम् ।
अतोऽनुकम्पां मयि संविधाय,
मनोरथं मे परिपूरयाऽरम् । ॥ २८३ ॥

आयाहि सङ्घं सकलं पुनीहि,
विधेहि तत्रोचित-सर्वकृत्यम् ।
विभाविनी तत्र विशेषरीत्या,
श्रीपञ्चतीर्थ्या रचनाऽपि हृद्या ॥ २८४ ॥

इत्थं मृदूक्त्या गुरुराजवर्यं,
विद्वत्तमं सद्गुणसन्निवासम् ।

अखण्ड शील-प्रभयाऽतिदीप्तं,
व्यजिज्ञपद्भक्तिभरेण कामम् ॥ २८५ ॥

विज्ञप्तितस्तस्य मुनीश्वरोऽय-
मूर्जेऽसिते भूधरजा सुतिथ्याम् ।
विहृत्य तस्मात्सह साधुवर्यैः,
पोराऽधिसीर्णं समुपाजगाम ॥ २८६ ॥

वसन्ततिलका

नानद्यमान-बहु-काहल-वेण्ड-शङ्ख
भेरी-मृदङ्ग-वर-झर्झर-काऽऽदिवाद्यैः ।
आकर्ण्य नागरजना गुरुराजमेतं
सुश्राविका-निवह-कोकिल-कण्ठ-गीतैः ॥ २८७ ॥
सर्वे जना अतितरां बधिरीभवन्तः,
प्रोच्चैर्विधाय रुचिरोत्सवमाशु भक्त्या ।
आरक्त-पीत-धवलांऽशुककेतनानि,
संबिभ्रतोऽधिकमुदं हृदये वहन्तः ॥ २८८ ॥
श्रीमद्गुरोरभिमुखं समुपेत्य भूरि-
भक्त्याऽभिवन्द्य विधिवत्सकलान्मुनीशान् ।
आनिन्यिरे मुनिवरं जित-मोहमल्लं,
स्वीयं पुरं रचित-चारुमहामहैस्ते ॥ २८९ ॥

पञ्चचामरम्

अथाऽददान्मुनीश्वरः पयोद-नाद-जित्वरै
र्वचोभिरेष देशनां सुधामयी-मतिस्फुटाम् ।

अनेक-जन्म-सञ्चिताऽघ-सन्तति-प्रलोपिनीं,
सुभुक्ति-मुक्ति-दायिनी-मधोगति-प्ररोधिनीम् ।२९०।

निशम्य सर्वसज्जना अपूर्व-रम्यदेशनां,
भवाऽब्धि-पोतरूपिकां श्रवः सुखाकरीमलम् ।
अतिप्रबोध-कारिकां सतामुदार चेतसां,
प्रतुष्टुवुर्गुरुं भृशं ह्यदोष-संयमाऽविनम् ॥ २९१ ॥

उपजातिः

अथाऽऽरम्भच्छुभलग्नकेऽसा--
वुद्यापनं श्रेष्ठिवरेण तेन ।
यथाविधानं विजयोपनाम
श्रीनीतिनामाऽखिल-लोक-मान्यः ॥२९२॥

प्रावीवृतत् सर्व-मनः-प्रसाद--
माष्टाहिकं चारु-महोत्सवं सः ।
अत्युज्ज्वलं नित्य-मनेकधा हि,
प्रभावना-पूजन-गायनानि ॥ २९३ ॥

शत्रुञ्जयो रैवतकोऽर्बुदाद्रिः,
समेत-पूर्वं शिखरं तथेति ।
अष्टापदं चाऽऽर्हत-पञ्चतीर्थी,
व्यरीरचत्कारुवरैरपूर्वाम् ॥ २९४ ॥

आम्यर्णिक-ग्राम-निवासिलोका,
वैदेशिकाऽऽहूत-जनाश्च सर्वे ।

सहस्र-षट्क-प्रमिताः समागु--
दिदृक्षया तत्र महामहे हि ॥ २९५ ॥
तेषां समभ्यागत-मानवानां,
दिनाऽष्टकं भोजनदित्सया हि ।
न्ययुङ्क्त चैकामुरु-पाकशालां,
तत्रत्य संघः सकलो महीयान् ॥ २९६ ॥
वीयाय मुद्रा अयुत-प्रमाणाः,
महोत्सवे चारुतरे च तस्मिन् ।
निर्विघ्नमेतत्सकलं बभूव,
श्रीमद्गुरूणां कृपया महत्या ॥ २९८ ॥
इत्थं चारित्राऽधिपतिः सुविद्वान्,
चतुः-शराऽङ्क-क्षिति-विक्रमाऽब्दे[१९५४] ।
वर्षा-निशाः सर्वजनाऽऽग्रहेण,
व्यजीगमत् पोरपुरे सुखेन ॥ २९८ ॥

वसन्ततिलका

पन्यासपूर्व-विजयोत्तर-भावनाऽऽनः,
श्रीमद्गुरोः क्रम युगाऽम्बुजसेवमानः ।
सद्धीर कान्तिविजयाऽऽदि-मुनीन्द्रयुक्तो,
व्यत्यैत्पयोद-दिवसानिह नायकोऽस्य ।२९९।

स्वागतावृत्तम्

संविहृत्य तत एष मुनीशो,
भव्य-जीवजनता-प्रतिबोधम् ।

सन्दान इह चागत आशु,
राजपूर्व-नगरं रमणीयम्. ॥ ३०० ॥

सर्व-सङ्घ-रचितैः कमनीयै
रुत्सवै-रमित-पौरजनौघैः ।
प्राविशद्वरपुरं कृतशोभं,
देशनामदित चारु-गिरा सः ॥ ३०१ ॥

तत्र संघ-विहिताऽऽग्रह-मित्वा,
तस्थिवान् सुचिर-कालमनंहाः ।
अङ्क-रामैं-मित-सूत्रमपाठीत्,
शेमुषी-विपुलताऽऽदि-गुणाऽढ्यः ॥ ३०२

उपजातिः

जैनाऽऽगम-ग्रन्थमियन्तमेष,
सम्वाच्य तत्सार-मशेषमेव ।
द्रागग्रहीत् क्षीर-निधिं प्रमथ्य,
सुधां निलिम्पा इव तीक्ष्ण-बुद्धिः ॥ ३०३ ॥

वसन्ततिलका

पन्न्यास-भावविजयाऽऽनन-पूर्ण-चन्द्र
निर्गच्छदच्छ-परिवाचन-सौध-धाराम् ।
वाचस्पतेर्वदनतः सकलाः सुविधा,
दम्भोलि-पाणिरिव सोऽपि ललौ महात्मा ॥ ३०४ ॥

वैतालीयम्

हरगोविन्ददासमुख्यकाः,
कतिथाः श्राद्धगणाः सुभावुकाः ।
शुश्रुवुश्च वाचनां मुदा,
सर्वेषामपि शुद्धभावतः ॥ ३०५ ॥

इन्द्रवंशा

श्रोतार आसन् सुधियः सुमेधसः,
श्रीमान् गुरुस्तत्सकलेभ्य उच्चकैः ।
प्रायच्छदेभ्यः प्रतिवासरं प्रभु
स्तद्वाचनाः सप्त घटीर्नियम्य वै ॥ ३०६ ॥

पञ्चचामरम्

अयं चरित्रनायकः समग्र-पाणिनीय--को
ष-काव्य-तर्क-नाटकं निमित्त-शास्त्रमुत्तमम् ।
प्रभाकरीय-कापिलं विशेप-योगशास्त्रकं
स्वधीत्य भूरि नैपुणं समाप चैपु तीक्ष्ण-धीः ॥३०७॥

उपजातिः

सामुद्रिकेऽप्येष विशेष-विद्वान्
समस्त वैदान्तिक दन्तिसिंहः ।
छन्दोविदां सर्व-जगत्यमुष्मिन्,
मूर्द्धन्यतां नूनमवाप्तवान् सः ॥ ३०८ ॥

इत्थं स महामधुना समेषां,
विद्वत्तमानां मुनिपुङ्गवानाम् ।
अग्रेसरोऽयं मुनि-नीतिनामा,
शान्ति-प्रधानः खलु जेजयीति ॥ ३०९ ॥

पञ्चचामरम्

अनुष्ठितोग्र-भूरि-सत्तपः-प्रभूत-तेजसा,
कृशानुवद्दिवानिशं विभासुरः क्षमाधरः ।
जिनाऽऽगमाऽटवीष्वसावटाट्यमानकेसरी,
सुबोधिबीजदायकः सुनायकः शिवश्रियाः ॥३१०॥

शार्दूलविक्रीडितम्

भूतेषु ग्रह-रोहिणीपति-मित-श्रीविक्रमीयाऽब्दके, [१९५५]
श्रीसंघाऽतिशयाऽऽग्रहेण मुनिराट् सन्तस्थिवान् प्रावृषि ।
पन्न्यास-प्रभु-" भाव " नाम-गुरुभिः साकं कियत्साधुभिः,
स्वर्ग-श्रीप्रविजायि-राजनगरे तन्वन् स्वकीर्तिं पराम् ।३११।

पञ्चचामरम्

अहर्निशं गुरु-क्रमाम्बुज-द्वय-श्रितौ रतो,
वशम्वदः सदा गुरोरगाध बुद्धिसागरः ।
शमी दमी कृपानिधिः पर-स्वकीय शास्त्रवित्,
पनीपदीति सद्गुरोः कृपादशा महद्यशः ॥३१२॥

मालिनी

रस शर-नव-भूमी-हायने[१९५६] विक्रमीये,
सद्गुरु-विहरमाणस्तत्पुरः सूत्सवेन ।
अचिर-भय-मनीहो निर्धुताऽशेष-पापो,
वडनगरमथाऽऽगान्निष्कषायी कृतात्मा ॥२१३॥

पञ्चचामरम्

समागतं गुरुं परं समेऽवगत्य तत्क्षणं,
सुनागरा महाजना वधूजनैः समं मुदा ।
सुतोरणाऽऽदि-बन्धनैः सुशोभ्य सत्पथाऽऽदिकं,
नदत्सुवेण्डशङ्खकाहलाऽऽदिनैक-वादनैः ॥ २१४ ॥
जयध्वनिं समुच्चकैः समुच्चरद्भिरार्हतै
र्नभः-स्पृशैः सुकेतनैः स्फुरत्सुचित्र-सत्पटैः ।
सुवृत्त-पीन-कर्कश-स्तनाऽतिहारि गायनै
र्विरच्य चारुमुत्सवं पुरं स्वकं ह्यवीविशन् ॥ २१५ ॥
( युग्मम् )

उपजातिः

भक्त्या च केचिद्गुरुदर्शनाय,
प्रभावनालिप्सुतया च केचित् ।
श्रोतुं च धर्मं ह्यपरे समागु
राबाल-वृद्धाः पुरवासि-लोकाः ॥ २१६ ॥

आबाल्य-सम्पालित-ब्रह्मचर्य
श्चरित्रनाथो मुनिनीतिनामा ।
इत्थं महाऽऽडम्बरतः प्रविश्य,
श्रीमद्गुरूणां वचनेन नुन्नः ॥ ३१७ ॥

व्याख्यानमारब्ध घनप्रणादाऽ
नुकारि-विस्पष्ट-सुमिष्ट-वाचा ।
भव्याः ! समस्ताः शृणुतैकचित्ताः,
श्रीवीतरागोदित-शुद्ध-धर्मम् ॥३१८॥ (युग्मम्)

पृथ्वीच्छंदः

स एव भववारको निरघ-धर्म आभाषितो,
न यत्र परिहिंसनं भवति देहिनां जात्वपि ।
मनो-वचन-कायतः स्रवति तानजस्रं जनः,
स एष परिषेव्यताममृतसौख्यदायी महान् ॥३१९॥
अमुं य इह सेवते त्यजति तं न विष्णुप्रिया,
सुखी भवति सर्वदा व्रजति नैव दुःखं हि सः ।
विभाति शशि-निर्मला जगति तस्य कीर्तिः परा,
क्रमेण सुखमक्षयं परमदुर्लभं याति सः ॥ ३२० ॥
नरत्वमिह दुर्लभं चतुरशीतिलक्षेषु वै,
भगेषु तटिनीपतौ पतित-रत्नवत्प्राणितः ।
तदाप्य बहुभाग्यतः परम-जैन-धर्मे रतिं,
प्रपद्य भवसागरं तरत भव्य-जीवा ध्रुवम् ॥३२१॥

विपत्तिरपि सम्पदीभवति चाऽत्र धर्म्मात्मना
मरातिरपि मित्रतां ध्रुवमियर्ति वैश्वानरः ।
शशाङ्क इव शीतलीभवति तत्प्रभावादरं
श्रियं धनपतेरहो जगति सम्पनीपद्यते ॥ ३२२ ॥

मन्दाक्रान्ता

ध्यायं ध्यायं सकल-सुजना गौरवाऽऽस्याच्छशाङ्का
नि(न्नि)श्च्योतन्तीं निरुपम-महादेशना-सौधधाराम् ।
तर्पं तर्पं गुरुवरममुं सादरं संस्तुवन्तः,
तत्त्वं धर्म्यं बुबुधुरधिकं श्रावकाः श्राविकास्ताः ॥ ३२३ ॥

उपजातिः

ततोऽतिहृष्टाः सकलाश्च लोकाः,
प्रभावनामाप्य गृहं प्रजग्मुः ।
गृणन्त उच्चैः सुगुरोरमुष्य,
गुणानुदाराञ्जनतां पुनानान् ॥ ३२४ ॥

हेतोः कुतश्चिन्नगरे च तस्मिन्,
विलोक्य लोकान् कियतो जिहासून् ।
सज्जैनधर्मं पुरि लोकमान्यौ,
जेठाख्य सच्छ्रेष्ठि-सुपुत्र एषः ॥ ३२५ ॥

नगीनदासो बहुधर्म-रागी,
श्रीखेमचन्द्राऽऽत्मज-वीरचन्द्रः ।

तद्राजपूर्व नगरं समेत्य,
व्यजिज्ञपेतां गुरुराजमेवम् ॥३२६॥ (युग्मम्)
स्वामिन् ! कियन्तः पुरि मे हि जैना,
भवन्ति धर्माद्विमुखा इदानीम् ।
अतः प्रभो ! तद्दिशि तूर्णमेव,
कृत्वा विहारं परिपाहि धर्मम् ॥ ३२७ ॥
मेघाऽऽगमं केकि-गणा यथा वा,
वाञ्छन्ति चन्द्रं तृपिताश्चकोराः ।
तथा गुरो ! त्वां सकला उशन्ति,
द्रागेत्य सर्वान् स्वजनान् पुनीहि ॥ ३२८ ॥
प्रावृण्निवासं प्रविधाय तस्मिन्,
प्रबोध्य सर्वानव वीर-धर्मम् ।
अभ्यर्थ्य चैवं गुरुभिः सहैतौ,
स्व-ग्राममेतौ निज-धर्म-रक्तौ ॥ ३२९ ॥

आर्या

प्रथितं पुरा किलैतद्, आनन्दपुरेति नाम्ना सर्वत्र ।
वसतिर्महाजनानां, कोटिसंख्यावतां समासीत् ॥३३०॥

उपजातिः

तत्राऽधुना कृष्णदले शशाङ्क
कलेव नित्यं ह्यपचीयमाना ।

अल्पीयसी श्रावक-सद्म संख्या,
नामाऽवशेषा बत वर्त्ततीति ॥ ३३१ ॥

विशुद्ध-धर्माऽऽचरण-प्रसिद्धे,
तद्गुर्जरे नीवृति चाऽऽर्हतानाम् ।
अत्यन्त-शोच्या समुपस्थितेदृक्,
परिस्थितिः सम्प्रति लोक्यते हा ! ॥ ३३२ ॥

विभात्यमुष्मिन्नधुनाऽपि रम्याऽऽ
कृतीनि चत्वारि सुमन्दिराणि ।
जिनेश-बिम्बैरतिशोभितानि,
महान्ति तारापथ-लेलिहानि ॥ ३३३ ॥

उपाश्रयाश्चारुतरा अनेके,
वाप्यश्च कूपा अतिमिष्ट-तोयाः ।
कियत्तटाकाः सतताऽम्बु-पूर्णा,
उद्यानमाला धनवज्जनानाम् ॥३३४॥ (युग्मम्)

सत्पाठशाला विविधाऽस्त्यमुष्मिन्,
कन्याजनीयाऽपि च सा विशाला ।
श्रीमज्जनानां कति धर्मशाला,
गोरक्षिणीत्यादि-विशेष-संस्था ॥ ३३५ ॥

वसन्ततिलका-

ईदृग्-विशाल-नगरे वडपूर्वकेऽसौ,
श्रीमानतुच्छ-मतिमान् करणैक-सिन्धुः ।

जैनैस्तदन्य सुजनैरपि मण्डितायां,
पर्षद्यनल्प-महिमा समुपादिदेश ॥ ३३६ ॥

प्रत्याहिकाऽमृत-समान-सुदेशनाभि-
रोजस्विनीभि-रखिलाऽऽगम सम्मताभिः ।
तीर्थङ्करोक्त-परमार्थ-निगूढतत्त्व-
प्रस्फोटिनीभि-रघनाशन-कारिणीभिः।३३७।(युग्मम्)

सज्जैन-धर्म-विमुखीभवदार्हता ये,
तेऽप्याशु जात-कुधियं हृदयौकसो हि ।
निष्काश्य दुष्टवनितामिव लब्ध-बोधाः,
प्रापुः पुनर्जिन-सुभाषित-धर्म-दार्ढ्यम् ॥ ३३८ ॥

धर्मं विहाय मनुजा इह दुःखमेव,
सम्प्राप्नुवन्ति सकला निरचिन्वतेति ।
संसेव्य चाऽऽर्हतममुं परिशुद्ध-धर्मं,
भौमं सुखं निरुपमं परिभुञ्जतेऽस्मिन् ॥ ३३९ ॥

धर्मान्तरीय-जनताऽपि समेत्य नित्य
माकर्ण्य गौरवमुखा-द्वित-तथ्य-धर्मम् ।
सम्प्राप्य बोधमधिकं जगृहुः सहर्षं,
नैशाऽशनाऽऽदि-कृति-वर्जनमादरेण ॥ ३४० ॥

शिखरिणी

चतुर्मासे तस्मिन्नगर उपतस्थेऽतिकुपिता,
महामारी तस्यां ख-जैलधि-नभो-वाँरिधि-जनाः ।

अहो ! मर्तुं लग्नाः प्रतिदिवस-मेकोऽपि मनुजो,
मृतिं नाऽगाज्जैनः सुगुरु-जिनराजाऽतिकृपया ।३४१।

उपजातिः

तीर्थान्तरीया अपि सर्वलोकाः,
सज्जैन-धर्माऽतिशय-प्रभावम् ।
विलोक्य लग्ना अनुकर्तुमेनं,
चमत्कृतिं चेतसि सन्दधानाः ॥ ३४२ ॥

इत्थं हि जीमूत इव प्रवर्षन्,
सद्देशनाऽम्बूनि गुरुः प्रकामम् ।
अध्युष्य मासान् कतिचिच्च तस्मि--
न्नशीशमत्सर्व-मुपद्रवं सः ॥ ३४३ ॥

प्रादीदिपच्छासनमार्हतं हि,
व्यतीतनच्चाऽऽत्म-विशेष-कीर्तिम् ।
अवीभवद्धर्म-दृढानशेषान्,
सर्वांश्च तत्त्वं समवीविदच्च ॥ ३४४ ॥

निर्विघ्न-भूयांसि तपांसि लोकै--
रचीकरच्चारु-महामहेन ।
व्यतीतरद्भूरि वसूनि तस्मिन्,
महेभ्यवर्गैः शुभनैककार्ये ॥ ३४५ ॥

प्रावृण्-निवृत्तावुमतादि-नाना-
पुरेषु भव्यान् सकलान् सुविज्ञान् ।

व्याख्यान-पू(पी)यूषमजस्रमेष,
सम्पाययन् प्राज्ञतमः स आसीत् ॥ ३४६ ॥

अत्यादरात् पट्टण वासि-संघ
श्री-हेमचन्द्राऽऽदिमहर्द्धिकानाम् ।
आयातुमस्मिन्नगरे मुनीश
पार्श्वे सुविज्ञप्ति-दलं समागात् ॥ ३४७ ॥

अह्नाय तस्मात्कृत-संविहारः,
कियत्प्रयाणैर्मुनिराजवर्यः ।
सर्वैर्यतीन्द्रैः सह मोदमानः,
समाययौ पट्टण-पत्तनं सः ॥ ३४८ ॥

वसन्ततिलका।

गुर्वागसो(मो)ल्लसित-मानस-पौरलोकै-
र्नानद्यमान-युगपत्पटहाऽऽदि-वाद्यैः ।
अत्युग्र-रूप-ललनाजन-रम्य-गीतैः,
प्रावेशि तत्र नगरे मुनिनायकाऽग्र्यः ॥ ३४९ ॥

उपजातिः

मेघागमे बर्हिगणा इवाऽस्मिन्,
विवस्वतीवाऽभ्युदिते च कोकाः ।
प्रामोमुदुस्तत्र समस्त-पौराः,
समागते श्रीमति सद्गुरौ हि ॥ ३५० ॥

पञ्चचामरम्

अथाम्बुवाह–निस्वनोपमान–धीर नादतः,
सुधर्म–मर्म बोधिकाः समुज्ज्वला अतिस्फुटाः ।
भवाटवी–चिर–भ्रमज्जनैक–मार्गदर्शिकाः,
समस्त-कर्मबन्धन-च्छिदाऽतितीक्ष्ण–कर्तरीः॥३५१॥
कषाय–पङ्क शोषणे विकर्तन–प्रभायिता,
भवाऽन्धकूप–सम्पतज्जनाऽतिरोधकारिकाः ।
समिन्धनौघ–मग्निवत्कृताऽघराशिदाहिकाः,
सुधायमानदेशना ददौ चरित्रनायकः ।३५२।(युग्मम्)

वंशस्थवृत्तम्

सुराः सुधांशोरिव सर्वसज्जनाः,
तदाननाऽब्ज च्युत–सत्कथाऽमृतम् ।
निपीय कामं परिहर्ष–वारिधौ,
न्यमाङ्क्षुरत्यन्तमकल्मषीकृताः ॥ ३५३ ॥
ततः समादाय विशेष–भावना
प्रभावना ााागत–भक्तिमज्जनाः ।
विधाय भक्त्या सुगुरोश्च सन्नतिं,
निजं निजं गेहमुपाययुः समे ॥ ३५४ ॥

वसन्ततिलका—

श्रीसङ्घवीपद–विभूषित–हेमचन्द्रः,
उद्यापनीय–परमोत्सवमुज्ज्वलं सः ।

स्व-स्वापतेय-बहुल-व्ययतोऽष्टघस्रान्,
प्राचर्करीच्छुभविशेष-धिया महर्द्धिः ॥ ३५५ ॥

वंशस्थवृत्तम्

प्रभावनां नित्य-विशेष-वस्तुभि
र्जिनेन्द्रपूजां विविधां सुभावतः ।
स्वधर्मि-वात्सल्यमनेक-मेषकः,
प्रशस्यमेतत्सकलं व्यधत्त सः ॥ ३५६ ॥

उपजातिः

स प्राणिरक्षाऽऽदिक-धर्मकार्ये,
रायं ददौ भूरि कृती महेभ्यः ।
सर्वं किलैतन्मुनिरत्न नीति
गुरूपदेशात्सुकृतं प्रचक्रे ॥ ३५७ ॥

शार्दूलविक्रीडितम्

अत्रैत् सूर्यपुरात् प्रवृत्तिरनघा यत्सिद्धिसूरीश्वरः,
श्रीमान् सम्प्रति वर्तते भगवतीयोगस्य संसाधने ।
श्रुत्वैतां चपलं विहृत्य नगरात्तस्मादियायाऽसकौ,
श्रीमत्सूर्यपुरं ततः पुरजनैः प्रावेशि चारूत्सवैः ॥३५८॥

वसन्ततिलका

तत्रत्य सर्वजनता-प्रचुराऽऽग्रहेण,
वाजीषु-नन्द रजनीकर-सम्मिताऽब्दे[१९५७] ।

वर्षानिवासमकरोदतुलोत्सवेन,
सम्प्रैदिधद्विपुल-मार्हतधर्ममेषः ॥ ३५९ ॥

तत्रैव माधव-सिते कुसुमेषु-तिथ्यां,
प्रख्यात-पट्टण-निवासि-पिता सुतश्च ।
चुन्यादिलाल-दलसाधुत-राम-नाम
धेयौ विरक्तमनसौ भव-तुच्छ-सौख्यात् ॥ ३६० ॥

पन्यास-भावविजयो महतोत्सवेन,
संदीक्ष्य तत्क्रमिक सुन्दर-नाम चक्रे ।
चारित्र-पूर्व-विजयं जनकस्य तस्य,
श्रीमद्दया-विजय इत्यपरस्य सूनोः ॥३६१॥(युग्मम्)

स्रग्धरा

चातुर्मास्याऽवसाने सकलमुनिवरैः सार्धमस्माद्विहारं,
कृत्वा शैलेषु-नन्द-क्षिति-विमित (१९५८) समायां सुमासे च मार्गे ।
शुक्ले पक्षे कतिथ्यां भव-वहुविमुखं सूत्सवैर्दीक्षयित्वा,
वीशा-श्रीमालि-वीजापुर-कृत-वसतिं श्रीछगनूलालपुत्रम् ३६२

डाहाभाईत्युपाख्यं ह्यकृत गुरुवरो दाननामान-मेष,
श्रीमच्चैतच्चरित्राऽधिपति-मुनिवरस्याऽऽदिशिष्यायितोऽभूत् ।
पश्चाच्छाण्याख्य-पुर्यामगमदयमितः संविहृत्याऽऽशु धीरः,
तत्रत्याः सद्गृहस्था अति-सुकृत-समासक्तिभाजः किलाऽऽसन्
॥३६३॥ ( युग्मम् )

वसन्ततिलका

तत्राऽभ्युपेत-वर-मालवदेश-सङ्घ
विज्ञप्तिमाप्य चपलं यमिनां वरिष्ठः ।
पन्यास-भावविजयो गुरुवर्य एषु,
एतच्चरित्र-वरनायक-कान्तिकाऽऽद्यैः ॥ ३६४ ॥

शिष्यैरनेक-मुनिभिः सह सत्वरं हि,
तरगाद्विहारमकृत प्रतिमालवं सः ।
गन्धार-कावि-कतितीर्थ-विशेष-यात्रां,
मार्गे विधाय पुनरेष ततश्चचाल ॥३६५॥ (युग्मम्)

उपजातिः

सन्तस्थिवांस्तत्र हि हीरसूरि-
गान्धार-पुर्यामतिशान्तमूर्तिः ।
वर्षर्तुकालं प्रथमं तदाऽऽसीत्,
सुश्रावकाणां वसतिः सहस्रम् ॥ ३६६ ॥

तत्राऽधुना द्वे रमणीयचैत्ये,
स्तः श्रावकाणामुभके च गेहे ।
प्रायोऽन्यधर्मीय-जनाऽऽलयानां,
विभाति संख्या शतमेव सर्वा ॥ ३६७ ॥

महीयसस्तस्य पुरस्य यातैः,
सम्वत्सरैर्द्वित्रिशतैः किलेदक् ।

विपर्ययः कालकृतो बभूवान्,
कालो बलीयान् दुरतिक्रमो यत् ॥ ३६८ ॥

वसन्ततिलका

आगत्य वेजलपुरं सुजनान् प्रबोध्य,
सम्प्रस्थितस्तत उपागतवान्मुनीशः ।
सद्गोदराऽऽख्यनगरं तत आजगाम,
दाहोद्-नाम-नगरीं महतीं महीयान् ॥ ३६९ ॥

उपजातिः—

तत्र(त्रै)व बीजापुर-वासि-वाडी-
लालं तथा मारव-थावलीयम् ।
दलाऽऽत्मजं तं हकमाऽभिधानं,
चारित्रवेषैः समलङ्करोत्सः ॥ ३७० ॥

प्रियम्वदा

प्रथम वीर-विजयाऽभिधं शुभं,
तदनु हर्षविजयाऽभिधानकम् ।
अकृत सद्गुण-विभूषितो महान्,
अवनिमण्डल सुपावनो गुरुः ॥ ३७१ ॥

वैतालीयम्—

स वीरविजयो बभूव तन्मुनेः, कान्तिविजयस्य शिष्यकः ।
स हर्षविजयस्तु सद्गुरो-रमुष्य चरित्र-नायकस्य वै ॥३७२॥

द्रुतविलम्बितम्

कृत-विहार इतः प्रभुराययौ,
प्रथित-राजगढाऽभिध-सत्पुरम् ।
पुरजनैर्विविधोत्सव-सत्कृतः,
पुनरितो गतवान् गुरुभिः समम् ॥ ३७३ ॥

विपुल-धारपुरं पुरवासिभी,
रचित-चारु-महामहतः पुरम् ।
प्रमुदितः प्रविवेश ददौ मुदा,
सदसि चारु-गिराऽमृत-भाषणम् ॥३७४॥

इत इयाय विहृत्य महामति-
र्वितत-माण्डव-पूर्वगढाऽभिधम् ।
नगरमत्र विधाय सुयात्रिकां,
भविकवृन्दमनल्पमुपादिशत् ॥ ३७५ ॥

भुजङ्गप्रयातम्

क्रमादिन्दिराऽऽलयां पुरीमाससाद,
सुगुर्वी महर्द्धिं महाराजधानीम् ।
ततः पौरलोका अशेषाः प्रहर्षात्,
ध्वनद्भिः समुच्चैः समैरेकदैव ॥ ३७६ ॥

सुबेण्डानकाद्यैरनेकैः सुवाद्यैः,
तडिद्गौर-विद्याधराणां सुगानैः ।

प्रवेशं गुरूणां समाचीकरन्त,
पुरे तोरणाद्यैः सुसज्जी-कृते हि ॥ ३७७ ॥
( युग्मम् )

उपजातिः—

मेघोऽम्बुधारामिव सद्गुरुः स,
धर्मोपदेशं ह्यमृतायमानम् ।
विद्वत्प्रकाण्डः सुचिरं ववर्ष,
स्वर्गाऽपवर्गप्रदमात्मनीनम् ॥ ३७८ ॥

देशे च तस्मिन् विहरन्मुनीनां,
सुश्रावकौकोविरहेण मार्गे ।
क्लेशो विशेषः समभूदनेको,
न वेत्ति देशो मुनिपद्धतिं यत् ॥ ३७९ ॥

सन्तो हि जैना मुनिराजवर्या,
भृशं यदस्मिन्ननभिज्ञदेशे ।
पर्यट्य धर्मं परमार्हतं वै,
व्याचक्षते नैव पुनः पुनस्ते ॥ ३८० ॥

अतश्च हेतोः प्रतिपत्तने हि,
सम्यक्त्व-हीना विनयाऽनभिज्ञाः ।
श्राद्धा अशेषा गुरुभक्तिरिक्ता,
भवन्ति दृश्याः खलु मालवीयाः ॥ ३८१ ॥

ईदृक्प्रदेशे विकटे मुनीनां,
विहारणा या खलु बोभुवीति ।

शाणायते सा जगतीतलेऽस्मिन्,
श्रामण्य-याथार्थ्य-परीक्षणाय ॥ ३८२ ॥
परिषहाणां सहनं सदैव,
शास्त्रावगाहो श्रमणं विदेशे ।
सद्भव्यजीव-प्रतिबोधदानं,
श्रामण्यभाजां हितमस्ति नूनम् ॥ ३८३ ॥
अध्युष्य मासं पुरि विस्तृतायां,
तस्यां जिताऽऽत्मा मुनिराजवर्यः ।
चरित्रनेता प्रतिघस्रमेष,
सहस्र-संख्याऽधिक-सज्जनानाम् ॥ ३८४ ॥
उपस्थितौ संसदि मेघनादैः,
सुधोपमाऽमोघ-महोपदेशान् ।
प्रदाय सर्वानकरोदनल्प-
प्रज्ञात-सद्धर्मविशेष-तत्त्वान् ॥३८५॥ ( युग्मम् )

मन्दाक्रान्ता

धर्मोन्नत्यं परममभवत्सद्गुरूणाममीषां,
सद्व्याख्यानैः श्रवणसुखदैः शृण्वतां पापहारैः ।
घोरं चक्रे बहलजनता सत्तपः कायिकं वा-
ऽङ्गीचक्रुर्विविध-नियमान् प्राणिनस्तत्र भव्याः ॥३८६॥

उपजातिः

प्रस्थाय तस्मान्नगरीं प्रशस्ता
मवन्तिकामागतवान् वरीयान् ।

पोपूयमानः पृथिवीमघौघं,
लुम्पञ्जनानां क्रमशो मुनीशः ॥ ३८७ ॥

वसन्ततिलका

दन्ध्वन्यमान-विविधाऽऽनक-काहलाऽऽदि
वादित्र-तार-निनदैः परिपूरिताऽऽशैः ।
पीयूषधाम-तुलिताऽऽनन-सुन्दरीणां,
सद्राग-पूर्ण-कमनीयतरैश्च गीतैः ॥ ३८८ ॥
उच्चैस्तरोद्गत-जयध्वनि-शङ्खनादैः,
सम्प्राविशन्नगरमेष गुरुस्ततोऽसौ ।
धर्मोपदेशमददाद् घन गर्ज-जेत्रा,
नादेन सर्वमनसा-मतितर्पणं सः ।३८९। (युग्मम्)
एतद्गुरोर्ललित-धार्मिक-देशनां हि,
तत्रत्य-लुम्पकजना अपि जातरागाः ।
जैनेतराश्च सुजना बहवः सभायां,
श्रोतुं समेतुमलगन् नियमेन नित्यम् ॥ ३९० ॥
व्याख्यान-लाभमधिकं समवापुरेते,
ते लुम्पक-प्रमुख-पौरजनाः समग्राः ।
तौ कासरीय-पुखराज-समाह्व-कृष्ण-
लालाऽभिधौ गुरुवरस्य महोपदेशात् ॥ ३९१ ॥
सम्यक्त्व-दार्ढ्यमुपनिन्यतुरेतदन्ये,
ते लुम्पका बहुजना अनुचक्रुरेतौ ।

सर्वेऽप्यमी प्रतिदिनं जिनपूजनादि,
कर्तुं प्रसक्त-मनसस्त्वथ जज्ञिरे हि ॥ ३९२ ॥
(युग्मम्)

आर्या

चन्नासा-लालचन्द-वाला श्रेष्ठिवरोऽधिकश्रद्धालुः ।
उद्यापनं बहुल-धन-व्ययेन कृतवान् गुरूपदेशात् ॥३९३॥
इहाऽपि भागाऽऽधिक्यं, प्रपेदिरे लुम्पका बाहुल्येन ।
दुष्कर-तपांस्यभूवन्, मास-क्षपणाद्यनेकानि ॥ ३९४ ॥
पर्यूषणतः पश्चात्, निरगाच्चैत्यपरिपाटिका रम्या ।
सज्जिताऽमित-नर-तुरगै-रग्रेसरीकृत-महाध्वजैः ॥ ३९५ ॥
लुम्पका अपि सह चेलु-रतिमोद-पाथोनिधि-कृत स्नाताः ।
पूजा-प्रभावनाऽऽदौ, भागमपि लेभिरेऽधिकं ते ॥ ३९६ ॥

उपजातिः

प्रसङ्गतोऽहं नगरीमवन्तीं,
तामत्र किञ्चित् परिचाययामि ।
एषा पुरा भोजनरेश्वरस्याऽऽ-
सीद्राजधानी महती प्रशस्ता ॥ ३९७ ॥
वर्वर्त्ति तस्मिन्नगरेऽधुनाऽपि,
तद्राजकालीन-घटी किलैका ।
अत्यन्तगुर्वी सततं चलन्ती,
कदाऽपि वैकृत्यमुपैति नैषा ॥ ३९८ ॥

आर्या

आलोक्य यामिदानी -तना वैदेशिकाः कलाऽतिकुशलाः ।
आसीद्भारते कियती, कला तदानीमित्यनुमान्ति ॥ ३९९ ॥
विलसति सम्प्रति तस्या-मवन्ती-पार्श्वनाथ-विभुचैत्यमपि ।
प्राचीनतरमपूर्वं, यदुदीक्ष्य जना विस्मयन्ते ॥ ४०० ॥

मन्दाक्रान्ता

तस्यां पुर्यां ससुखमनघो वर्धयन् भूरि धर्मं,
चातुर्मास्यं वसु-शर-नवै-ग्लौमिते विक्रमाऽब्दे ।
संसाराऽब्धौ चिर-निपतितान्मोह-रज्जु-प्रबद्धान्,
नॄनुद्धर्तुं ह्यकृत विबुधः सद्गुरुर्विश्ववन्द्यः ॥ ४०१ ॥

गीतिः

राजनगरसुखवासं, परमर्द्धिक-लल्लूभाइ-तनूजम्
श्रीमच्छोटालालं, ह्युपदिदेश पुरैकदा गुरुरित्थम् ॥ ४०२ ॥

आर्या

भविक ! महाधनशालिन् !, सिद्धाचलीयमतिसुन्दरं संघम् ।
निष्काशय निजलक्ष्मी-मुपयुङ्क्ष्व महामते चैवम् ॥ ४०३ ॥

गीतिः -

सोऽवक् मालवदेशं, व्रजसि कथमेतासि ? पुनरेतस्मिन् ।
आरण्यचारित्रनेता, श्रेष्ठिन्नवसरेऽवश्यमैष्यामि ॥ ४०४ ॥

आर्या

इति दत्तां गुरुवाचं, स्मृत्वा गुरुमानेतुमुपागतवान् ।
उज्जयिनीपुरि झवेरी, लल्लूसुत-च्छोटालालः ॥४०५॥

वसन्ततिलका

आगत्य तं गुरुवरं कथयाञ्चकार,
स्वामिंस्त्वदुक्त-वचसा गमयामि सङ्घम् ।
सिद्धाचलीयमधुना तत एहि तस्मिन्,
कामञ्च नः परिपिपूर्हि कृपां विधाय ॥ ४०६ ॥

स्वीकृत्य तस्य सुधियः परमार्हतस्य,
विज्ञप्ति-माशु तत एष गुरुर्विहृत्य ।
आगत्य राजनगरं सुदिने सहस्र-
संख्याऽन्वितैः सममसौ विजहार संघैः ॥ ४०७ ॥

आगच्छदेष कुशली सह सर्वसंघैः,
शत्रुञ्जयं परम-पावन-तीर्थराजम् ।
भक्त्या ददर्श ऋषभं प्रभुतीर्थनाथं,
तीर्थङ्करं सकलसृष्टिकरं तमाद्यम् ॥ ४०८ ॥

दादाभिधं सकल-शिल्पकला-प्रकाशं,
भिक्षाचराऽऽद्य-मवनीपति-मादिमं हि ।
आदीश्वरं समवलोक्य भवाब्धि-पोतं,
जातोऽद्यनेक-भव-सञ्चित-पापमुक्तः ॥ ४०९ ॥

भूमीतल-प्रथित-दिव्य-महामहिम्नः,
श्रीपादलिप्त-जगदुज्ज्वल-कीर्तिभाजः ।
सूरीश्वरस्य जन-पावन-संज्ञयैतत्,
प्रख्यातिमाप नगरं प्रथमं जगत्याम् ॥४१०॥

सङ्घाऽधिप-स्त्विह युगादिजिनेश्वरस्य,
सन्दर्शनेन सफलं निजजन्म मत्वा ।
तत्पूजनाऽऽदि विधिवत्प्रचुर-व्ययेन ।
कृत्वा बभूव कृत-कृत्यतरः सुजन्मा ॥ ४११ ॥

गीतिः

इह पाद-लिप्तनगरे, राजनगर-डेलोपाश्रय-मुख्याः ।
श्रेष्ठी मनसुखनामा, परमर्द्धिको भगुनन्दनः श्रीमान् ॥४१२॥

आर्या

श्रीमांश्रीमनलालो, महेभ्य-नगीनदास-सत्पुत्रश्च ।
सच्छ्रेष्ठि-कालिदासः, उमाभाइ-नन्दनो धीमान् ॥४१३॥

गीतिः

इत्यादिसद्गृहस्थाः, श्रीगुरु-पार्श्वमुपगता विज्ञप्त्यै ।
ऊचुः स्वामिन् ! डेलो-पाश्रये ज्ञानाऽऽशातना महती ॥४१४॥
भवति कृपालो ! तस्मात्, तूर्णमागत्य विलोकयतां सर्वम् ।
सम्प्रति यानि सटितानि, प्रागेव तानि समुद्धरणीयानि
॥ ४१५ ॥ ( चतुर्भिः कलापकम् )

इत्थं तद्विज्ञप्तिं, स्वाकर्ण्य चरित्रनायको धीमान् ।
विविच्य सर्वं गुरुभिः, तेषामभ्यर्थनमुररीकृतवान् ॥४१६॥

औपच्छन्दसिकम्

इति गुरुवचसा मुदिताऽऽशयास्ते,
ह्यभिवन्द्य गुरून् भक्ति–पूर्ण–चित्ताः ।
सकल–महेभ्याः स्वकीय–गेहं,
प्रतिचेलुः कृतकृत्यतां नयन्तः ॥ ४१७ ॥

अथ चरित्रनायकोऽतितूर्णं,
सह गुरुवर्यैः पादलिप्तपुर्याः ।
शुभदिवसे प्रस्थितः प्रविद्वान्,
तारङ्गातीर्थं समाययौ सः ॥ ४१८ ॥

वसन्ततिलका

चैत्रे सिते शशितिथौ परिपूर्ण–भक्त्या,
श्रीवीतराग–मजित–प्रभुमत्र दृष्ट्वा ।
कामं चिरं जिनवरं मृदु–हारि–पद्यैः,
संनुत्य धन्यममत स्वमसौ सुधर्मा ॥ ४१९ ॥

श्रीमान् कुमारयुत–पाल उदार–कीर्ति–
स्तीर्थेऽतिभव्य–गगन–स्पृश–चैत्यमस्मिन् ।
चक्राण आर्हत–वरः पृथिवी–पतीन्द्र–
स्तत्तुल्यमन्यदधुना न हि वर्त्ततीति ॥ ४२० ॥

मालिनी

तदनु विहित-यात्रः सद्यतीन्द्रैः समेतो,
वडनगरमयासीच्छुद्ध चारित्र-शाली ।
पुर-जन-कृतशोभां भूयसीं वीक्षमाणः,
सुरव-विविध-वाद्यैः प्राविशत्तत्पुरान्तः ॥४२१॥

तदनु सदसि रम्योदार-पीयूषकल्पै-
रखिल-भविकवृन्दं शुद्ध-धर्मोपदेशैः ।
सुर-गुरुरिव देवान् बोधिबीजं प्रदाय,
सुखिनमकृत धीमान् मद्गुरुश्चारुकीर्तिः ॥४२२॥

स्वागता

आससाद तत एष विहृत्य,
भव्य-राजनगरं सुविशालम् ।
निर्जिताऽमरपुरं निजलक्ष्म्या,
पूत-भूमितल-वासि-जनौघः ॥ ४२३ ॥

तत्र सर्व-जन-निर्मित-नाना-
वाद्य-गीत-रुचिरेण महेन ।
श्रेष्ठिवृन्द-परिजुष्ट-पदाब्जः,
प्राविशत्पुरवरं स महीयान् ॥ ४२४ ॥

शार्दूलविक्रीडितम्

नन्देषु-ग्रह-शीतरश्मि-विमिते संवत्सरे वैक्रमे,
डेलोपाश्रय आग्रहेण महता चक्रे चतुर्मासिकाम् ।

ज्ञानाऽऽशातन-कारिणां जनिजुषां जाजायते श्रावकाः !,
बुद्धेर्जाड्यमनेकजन्मसु महापापं च निःश्रीकता ॥४२५॥

तस्माच्छीघ्र-मिहत्य-सर्वसुजना ज्ञानस्य संरक्षणं,
नैजं द्रव्यमपि प्रवीत्य नियतं श्वः श्रेयसायाऽऽत्मनः ।
कुर्वन्तु त्वरया तदीय-सकला आशातना रुन्धतां,
भाण्डागारिक-जीर्णपुस्तक-मशेषं लेखनीयं पुनः॥४२६।

जीर्णोद्धारकरा नरा इह भवे कीर्तिं परामियूरति,
बुद्ध्याधिक्यमपि व्रजन्ति नियतं लक्ष्मीं चिरस्थायिनीम् ।
स्वर्गीयाऽनुपमं सुखं च सुचिरं सम्भुञ्जते तेऽनघा,
इत्थं सर्वजनानुवाच सदसि श्रीमांश्चरित्राऽधिपः ॥४२७॥

उपजातिः

इत्थं चरित्राऽधिपतिर्गरीयान्,
प्रौढप्रतापः सकल-व्यवस्थाम् ।
समस्तसंघैर्भाविकैरुदारै-
रचीकरत्पुस्तकसद्मनः सः ॥ ४२८ ॥

प्राचीन-भूयांसि सुपुस्तकानि,
सत्तालपत्रोपरि लेखितानि ।
जीर्णानि शीर्णानि च भूय एव,
प्रावीवृतँल्लेखयितुं तदैव ॥ ४२९ ॥

तत्राऽऽगमत् सूर्यपुराऽधिवासी,
मच्छ्रेष्ठि-मच्छू-कुलनन्दनो हि ।
नगीनदासो गुरुवर्य-पार्श्वे,
झवेरिकः सौवपुरं निनीषुः ॥ ४३० ॥

व्यजिज्ञपन्नाथ ! भवत्कृपातो,
जैनाऽऽलय-चैत्ये भगवत्प्रतिष्ठाम् ।
वाञ्छामि कर्तुं तत एव तत्र,
समेत्य सर्वं कृपया विधत्स्व ॥ ४३१ ॥

विज्ञप्तिमित्थं परमार्हतस्य,
सच्छ्रेष्ठिनः श्रीमुनिराज एषः ।
स्वीकृत्य शीघ्रं नगराच्च राज-
पूर्वाद् व्यहार्षीदखिलाऽऽगमज्ञः ॥ ४३२ ॥

शिखरिणी

अविच्छिन्नैः श्रीमान् कृत-बहुविहारै रसुमतां,
प्रतिग्रामं मार्गे ददधिक-बोधं सुभविनाम् ।
सुखेनाऽऽगात्सूर्य-प्रयुत-पुर-मह्राय मुनिराट्,
सतां मान्यो धन्यो धृत-निरघ-चारित्र-महिमा ।४३३।

पञ्चचामरम्

पुरीजनाः समागतान् गुरूनमून् महामुदा,
कियत्सुबेण्ड-काहलाऽऽदिक-प्रवादनाऽऽरवैः ।

जयध्वनिं समुच्चकैर्वदद्भिरार्हतैर्जनै-
र्वीविवि(वीवि)शन् पुरं स्वकं सुतोरणादि-सज्जितम् ॥४३४॥

उपाश्रये समागतो मुनीश्वरो महास्वनै-
र्विनिर्जिताऽम्बुदाऽऽरवैः सुधामयीं सुदेशनाम् ।
चिरं ददौ समुज्ज्वला-मनेक-जन्म-सञ्चिताऽ-
घराशि-शीघ्रनाशिनीं सुबोधिबीजदायिनीम् ॥४३५॥

अतिष्ठिपत्ततोऽसकौ दिनाऽष्टकीय-सूत्सवैः,
समुद्धृते सुमन्दिरे जिनेश-मूर्तिमुत्तमाम् ।
पुरातनीं सुनिश्चिते दिने शुभे सुलग्नके,
बभूव तत्र भूरिशो वसुव्ययो महोत्सवे ॥ ४३६ ॥

गीतिः—

गोपीपुराविभागे, सुश्रावक-मुख्य-सद्गृहस्थानाम् ।
झवेरी नगीनदास-झवेरचन्दाऽऽदि-महेभ्यवर्गाणाम् ॥४३७॥

अत्याग्रहेण गोपी-पुरायां "जेमु" नाम्न्याः श्रेष्ठिन्याः ।
उपाश्रयेऽधिकरम्ये, निश्चित्य चतुर्मासिकाऽवस्थानम् ॥४३८॥

ख-रस-नव-शशाङ्कवर्षे (१९६०), शुचि-सित-षष्ठीतिथ्यां पन्न्यासः ।
चरित्रनायकमेनं, श्रीअनुयोगाऽऽचार्य-भावविजयः ॥४३९॥

१ मुहल्ला.

भगवतीसूत्रयोगं, प्रवेशयामास कर्मठो विद्वान् ।
सोऽनुष्ठानं चक्रे, चाऽऽहारशुद्धिं विशेषतः पश्यन् ॥ ४४० ॥
( चतुर्भिः कलापकम्)

श्रीमद्गुरुवर-भक्तिं, कुर्वाणस्त्रिकरणशुद्ध्या नित्यम् ।
प्रावृषि मेघ इवाऽसौ, सदा ववर्ष देशनाऽमृत-धाराम् ॥४४१॥

भव्यान् प्राणिन इत्थं, प्रतिबोधयन् साधयन्नपि योगम् ।
सूर्यपुरेऽकृत चातु-र्मास्यं षष्टि-नवैकमिते वर्षे ॥ ४४२ ॥

वसन्ततिलका

तत्रैव चन्द्र-रस-नन्द-महीमिताब्दे,
मार्गे सिते फणितिथौ विबुधाय चाऽस्मै ।
पन्न्यास-भावविजयः सह सर्वसंघैः,
प्रायच्छदुत्तम गणीति पदं महीयान् ॥ ४४३ ॥

रांदेर-वासि-बहुभावुक-सर्वसंघाऽऽ-
हूत्या पुनः पुनरुपागतया मुनीशः ।
तस्माद्विहृत्य सगुरुर्जलदाऽवसाने,
रांदेर-पत्तन-मुपागतवान् गणी सः ॥ ४४४ ॥

आपौषमत्र निवसन्नुपधाननाम,
स्त्रीपुंसकैर्बहुभिरेष तपोविशेषम् ।
आरीरधद् गणिवरोऽधिक-दीप्तिशाली,
चारूत्सवेन विधिना गुरुणा च सत्रा ॥ ४४५ ॥

तस्मिन्नवश्यकरणीयमनन्त-पुण्य-
सन्दायि सर्व-वृजिनौघ-विलोपकारि ।
सद्भक्तितो नवपदार्चनमादरेण,
प्राचीकरच्च सकलैर्विधिवद्गणी तैः ॥ ४४६ ॥

सर्वा क्रिया जनिजुषां विधिना कृतैव,
जाजायते फलवती नियतं जगत्याम् ।
नो चेद्ध्रुवं विफलतामुपयाति सा हि,
वन्ध्याऽङ्गना-भरण-पोषणवन्नराणाम् ॥ ४४७ ॥

आष्टाहिकः समभवद्रुचिरः प्रशस्य-
स्तत्रोत्सवो विहित-सत्तपसां समेषाम् ।
मालाऽर्पणं गुरुवरस्य सुपाणि-पद्मात्,
जातं ह्यविघ्नमखिलं कृपया गुरूणाम् ॥ ४४८ ॥

उपजातिः

प्रभावना-पूजन-सप्त-धर्म-
क्षेत्र-प्रदानं सुजनैरकारि ।
सुस्वामि-वात्सल्यमपि प्रशस्तं,
नैकं गुरूणामुपदेशतोऽभूत् ॥ ४४९ ॥

ततो विहाराऽवसरेऽमदावा-
द-वासि-चुन्नीसुत-लाल-सूनोः ।

सेनाऽभिध–श्रेष्ठिवरस्य तत्र,
विज्ञप्तिरायातुमुपाजगाम ॥ ४५० ॥

श्रीभोयणीजी–वर–तीर्थमध्ये,
सुस्थापनीये परमोत्सवे हि ।
जज्ञन्यमाने विविधे ह्यपूर्वे,
नानापुरीयाऽऽगत–लोकपूर्णे ॥ ४५१ ॥

स्वीकृत्य तां श्रीगुरुभिः सहैव,
विहृत्य तस्मादचिरं मुनीन्दुः ।
मार्गाऽऽगताऽनेकपुरीषु भव्यान्,
समुद्धरन् संसृति–कूपमध्यात् ॥ ४५२ ॥

कियत्प्रयाणैः समियाय मङ्क्षु,
श्रीभोयणीनामपुरीमनीहः ।
तदागमोत्थाऽधिकहर्षपूर्णाः,
सर्वे महेभ्या गुरुदर्शनोत्काः ॥ (त्रिभिर्विशेषकम्)

वादित्रवृन्दैर्युगपन्नदद्भिः,
पूर्णीकृताऽशेष–दिगन्तरालैः ।
सुधामयूखाऽऽनन–कामिनीनां,
चेतोहरै राग–निबद्ध–गानैः ॥ ४५४ ॥

जयध्वनिं श्राद्धगणेषु तार–
स्वरेण कुर्वत्सु चलध्ध्वजेषु ।

श्रीपादलिप्ते नगरे चतुर्मा-
सीं तस्थिवानेष विशेष-विद्वान् ॥ ४६४ ॥

उपजातिः

व्याख्यान-पीयूष-सदाऽतिवृष्ट्या,
धाराधरीयाऽनुकृतिं प्रकुर्वन् ।
जनानशेषान् निजधर्म-रक्तान्,
विधूत-पापानकरोदनंहाः ॥ ४६५ ॥

तपांसि भूयांसि महान्त्यभूवन्,
प्रभावना-पूजन-जीव-रक्षाः ।
सदैविक-ज्ञानिक-रिक्थ-भूरि-
चयो बभूवाऽत्र गुरूपदेशात् ॥ ४६६ ॥

वसन्ततिलका

अत्रैव पक्ष-शर-नन्द-मृगाङ्क[१९५२]वर्षे,
ऊर्जेऽसिते दिनकरेऽहनि विश्व-तिथ्याम् ।
पन्न्यास-भावविजयो गुरुदेव-वर्यो,
विद्वत्तमो वरद-दक्ष-कराऽम्बुजेन ॥ ४६७ ॥

सत्साधुभिः सकल-संयमिनीभिरस्मै,
श्राद्धै-रशेष-वर-भूषण-भूषिताभिः ।
सुश्राविकाभिरितरैरपि सद्गृहस्थैः,
श्रीसिद्धिसूरि-मुनिराज युग-प्रधानैः ॥ ४६८ ॥

उपजातिः—

स्वीयाऽपरीयाऽखिल–शास्त्र–वार्धि
पारङ्गतायाऽमित–सद्गुणाय ।
चरित्रनेत्रे सह चारु–लग्ने,
प्रादात्सुपन्न्यासपदं सभायाम् ॥ ४६९ ॥
( त्रिभिर्विशेषकम् )

महोत्सवं सूर्यपुराऽधिवासी,
झवेरिकः श्रीफुलचन्दनामा ।
चक्रे महेभ्यः शुभ–भावयुक्तः,
श्रीमद्गुरूणां पदवीप्रदाने ॥४७०॥

गीतिः

जनपद इह सौराष्ट्रे, जैनौ परमपावकौ गुरुतीर्थौ ।
भव–भयमोचनकारौ, शत्रुञ्जय–रैवताऽचलावुभकौ ॥४७१॥

वसन्ततिलका

तीर्थं ब्रुवन्ति मुनयः खलु तारकं तत्,
सत्क्षेत्रमत्र परिपावनमुत्तमा हि ।
यत्राऽऽत्म–कर्मदलकं सकलं प्रणाश्याऽ—
क्षय्यं सुखं समधिजग्मुरसंख्यजीवाः ॥ ४७२ ॥

यत्स्पर्शनेन मनुजा इह सर्वपापै–
र्मुक्ता भवन्ति परमं सुखमाप्नुवन्ति ।

आनिन्यिरे स्वं पुरमादरेण,
श्रीमन्तमेतं गुरुराजवर्यम् ॥ ४५५ ॥ ( युग्मम् )

सा भोयणी ग्रामटिका किलैका,
दैवाच्च कूपात्कुकवाय-पुर्याम् ।
श्रीमल्लिनाथ-प्रतिमाऽऽविरासीत्,
तदर्थमेतत्पुरयोर्विवादे ॥ ४५६ ॥

अनःस्थिता सा प्रतिमा स्वयं हि,
चचाल तस्माद्वृषभं विनाऽपि ।
तद्भोयणी-पत्तनमेत्य तस्थौ,
तीर्थायते तद्दिवसात्किलैतत् ॥ ४५७ ॥

साध्व्यः कियत्यः श्रमणा अपीह,
भूयांस एवाऽऽगतवन्त आसन् ।
चरित्रनेतुः शुभ-पाणिपद्माद्,
विधिः समग्रः समभूदमुष्मिन् ॥ ४५८ ॥

याते च पूर्णत्वमपूर्व-चारू-
त्सवे तदीये मुनिराज एषः ।
विहृत्य तस्मान्निजमण्डलीयुक्,
तत्पादलिप्तं नगरं समागात् ॥ ४५९ ॥

शालिनी

अस्मादर्धक्रोश-दूरे महीयान्,
उच्चैः शैलः सिद्धनामा विभाति ।

संख्याऽतीताः सन्मुनीन्द्रा हि तस्मिन्,
सिद्धिं प्रापुः संसृताऽब्धि-प्रतीर्णाः ॥ ४६० ॥

उपजातिः

सूच्यग्रमात्रोऽपि न सोऽस्ति देशो,
न यत्र जीवाः खलु सिद्धिमायन् ।
वेविद्यतेऽस्मिन् रसकूपिकाऽपि,
सुवर्ण-सिद्ध्यादिकमौषधञ्च ॥ ४६१ ॥

भुजङ्गप्रयातम्

वरीवृत्यतेऽसौ क्षितौ तीर्थराजो,
महापाप-गोत्राऽशनिश्चाऽद्वितीयः ।
अतीवोपयोगी जगत्यास्तिकानां
सदध्यात्मतत्त्वं विवेक्तुं जनानाम् ॥ ४६२ ॥

उपजातिः

स्वकर्मबन्धात्परिमोक्तुकाम-
श्चरित्रनेता गुरुभिः सहैषः ।
अमुष्य तीर्थस्य विशेषयात्रां,
विधाय निःसीममुदं प्रपेदे ॥ ४६३ ॥

इन्द्रवज्रा

अत्रत्य-पौराऽतिशयाऽऽग्रहेण,
भू-तर्क-नन्देन्दु-मिते सुवर्षे [१९६१] ।

मृत्युं जयन्ति सुचिरं दिवि संवसन्ति,
कीर्तिं श्रियञ्च परमामुपयन्त्यवश्यम् ॥ ४७३ ॥

यत्राऽभवत्परम-तीर्थकृतामुदारं
कल्याण-पञ्चकममर्त्यकृतं जगत्याम् ।
यत्राऽप्यसंख्य-मुनयः परिलेभिरे वा,
सिद्धिं तदत्र कथयन्ति सुतीर्थमेव ॥ ४७४ ॥

आदीश्वरो हि भगवानिह सिद्धशैले,
ह्येकोन-चन्द्र-ख-खँ-वारमुपैच्च जीवन् ।
तत्पाद-पद्म-रजसा परिपूतमेनं,
शत्रुञ्जयं सकल-तीर्थपतिं गदन्ति ॥ ४७५ ॥

तद्वच्च रैवतनगोपरि नेमिनाथ
द्वाविंशति-प्रमित-तीर्थकृतः प्रभोर्हि ।
कल्याणक-त्रिकमभूदत एव सोऽपि,
पापौघमाशु दहतीन्धनमग्निवद्धि ॥ ४७६ ॥

सन्त्यत्र नैक-परमौषधयो विशिष्टा
स्तीर्थान्तरीय-मुनिमण्डल-सन्निवासः ।
ईदृक्-पवित्र-रमणीय सुतीर्थयात्रां,
कर्तुं ह्ययं चरितनायक आजगाम ॥ ४७७ ॥

तीर्थेश-नेमिजिनराजमुदीक्ष्य भक्त्या
बाढं प्रणूय रमणीय-पदस्तवाद्यैः ।

निष्कल्मषत्वमधिगम्य महामनीषी,
मन्वान एष निज-जन्म कृतार्थमित्थम् ॥४७८॥

जूनागढं तत उदारमनाः समागात्,
हिन्दूनरेश-परिरक्षितमेतदासीत् ।
पश्चाज्जगाम यवन-क्षितिपाल-हस्ते,
ह्यद्यापि यावन-सुशासनमस्ति तस्मिन् ॥४७९॥

उपजातिः

अस्याः पुरः सूत्सवतो विहृत्य,
स राजकोटं नगरं जगन्वान् ।
सौराष्ट्र-मध्ये बहुशोभमानं,
क्षीरोद-कन्या-निलयायमानम् ॥ ४८० ॥

मालिनी—

तदनु सकल-पौरा वेण्ड-शङ्खाऽऽदिवाद्यै-
र्युगपदतिनदद्भिः पूरयद्भिः समन्तात् ।
प्रतिदिशमपि नादैः श्राविका-गीत-मिश्रै-
र्मुनिगणमुपनिन्युः सज्जितं स्वं पुरं ते ॥ ४८१ ॥

उपगतवति मेघे नीलकण्ठाऽऽवलीव,
प्रमदमतिशयं ते नागरा लेभिरेऽस्मिन् ।
जगति जयकरिष्णौ वादि-मातङ्गसिंहे,
कुमति-तिमिरपुञ्जं हर्तुमुद्यद्दिनेशे ॥ ४८२ ॥

अथ गुणगरिमाणं सन्दधच्चारुकीर्ति-
र्घन-सम-निनदेनाऽऽरब्धवान् सद्गुरुः सः ।
प्रवचन-गदित शुद्धाऽशेष-धर्मोपदेशं,
श्रवण-पुट-निपेयं श्रोतृ-पाप-प्रणाशम् ।४८३।

उपजातिः

उत्साहवृद्ध्या श्रुतदेशनास्ते,
पौरा वितेनुर्गुरु-गौरवाय ।
दिनाऽष्टकं चारु महामहं तत्-
सम्यक्त्व नैर्मल्य-विधित्सयाऽस्मिन् ॥ ४८४ ॥

वैतालीयम्

आदिशन्ति शास्त्रकारका, वर्षतुं प्रविहाय मासतः ।
अधिकमार्हतास्तपस्विनो, लघु-गुरु-नगरे जात्वपि ध्रुवम् ।४८५।

गीतिः—

न ह्येकत्र तिष्ठेयु-रिति शिष्टाऽऽचाराऽनुसृत्यैव सः ।
पन्न्यास-"नीति" विजयो, विजहार मासकल्पं कुर्वाणः ॥४८६॥
( युग्मम् )

प्रतिपुरमयमुपकुर्वन्, सुपाययन् देशनाऽमृतं भव्यान् ।
सेवक-जन्मस्थानं, वांकानेर-नगरदिशि स विजहार ॥४८७॥

दीक्षा ग्रहणात्पश्चा-दसौ न कदाऽपि तत्र पुरा गतवान् ।
इत्यौत्सुक्याज्जनता, दशदशक्रोशाद्रष्टुमायाति ॥४८८॥

शार्दूलविक्रीडितम्

इत्थं सर्वजनानमन्दमतिमानानन्दयन् नित्यशः,
 पन्न्यासः स हि नीतिनामविजयः सन्तारयन् प्राणिनः ।
वाँकानेर–महाविशालनगरी–मागच्छदच्छाऽऽशयः,
 श्रीमच्छ्री गुरुवर्य–भावविजयाऽऽधैर्मु(धैर्व मु)नीन्द्रैः समम्
पौरा नैकविधैर्मृदङ्ग–पटहैः सद्वेण्ड–शङ्खाऽऽदिभि
 र्वादित्रैः परिपूरयद्भिरखिला आशाः स्वनैरुच्चकैः ।
गायन्ती रमणीजनैरतितरां चन्द्राऽऽस्य–बिम्बाऽधरै
 रित्थं चारुमहोत्सवेन नगरीं प्रावेशयन् सद्गुरून् ॥४९०॥
संख्याऽतीत-जनैः समं गुरुवरं मार्गे व्रजन्तं मुदा,
 द्रष्टुं सौध–शिरःस्थिताः सुनयनाः सम्पूर्णचन्द्राऽऽननाः।
देवानां ललना इमा उपगताः ? किं नागकन्या ? इति,
 तारा वा पतिता दिवः क्षितितले ? ऽशङ्कन्त केचिज्जनाः।४९१।
सर्वे तत्पुरवासिनः सभविनो नार्यः पुमांसस्तथा,
 मूर्धुत्काः शशिशीतलं नयनयोः कर्पूर–पुञ्जायितम् ।
दर्शं दर्शममुं भृशं मुमुदिरेऽमाङ्क्षुश्च हर्षाऽम्बुधौ,
 धन्यश्चाऽस्य (पिता) जनन्यपि महाधन्येति तं तुष्टुवुः ॥
इत्थं नागर–सत्कृतोऽखिल-जनैर्वावन्द्यमानो गुरु–
 र्वैराग्याऽमृतवाहिनीं मधुरिमोद्गारं परं तन्वतीम् ।
संसाराऽखिल–भीति–नाशनकरीं सद्बोधि–बीज–प्रदां,
 मोह-ध्वान्त-निराकरिष्णुमनघां रम्यामदाद्देशनाम् ॥४९२॥

श्रीमत्केवलि–सत्प्रमूदित–वचः–प्रोल्लासिनीमुज्ज्वलां,
पुत्र-स्त्री-धन-मन्दिराऽऽदि-विषय-व्यामोह-पाश-च्छिदाम् ।
आत्माऽऽनन्दरस–प्रवाहजनिकामुल्लासिकामंहसां,
दौर्मत्यादिकवारिकामसुमतां सम्प्रापिकां श्रेयसः ॥ ४९४ ॥
( युग्मम् )

उपजातिः

तद्ब्रह्मचर्यव्रतमत्र भव्याः !,
शर्मप्रदं कामगवीव लोके ।
विभाति नानाऽऽत्मकमुत्तमानां,
पुंसामनन्ताऽऽत्म–बलप्रदायम् ॥ ४९५ ॥

आजन्म ये तत्परिपालयन्ति,
तेऽनन्तशक्तिं मतिवैपुलञ्च ।
कीर्तिं प्रशस्यामभि ( स्यां प्रति ) पद्य चाऽन्ते,
मोक्षं लभन्तेऽखिल–बन्ध–मुक्ताः ॥ ४९६ ॥

भवाऽन्ध–कूपाद्बहिरेतुमस्मा–
दितोऽधिकं साधनमस्ति नैव ।
सत्यं किलैतत्परिवच्मि वोऽहं,
दुराप–मानुष्यमुपेयुषां भोः ! ॥ ४९७ ॥

महत्तमा नैकपुमांस एतत्,
आजन्म सम्पाल्य गता हि सिद्धिम् ।
अद्याऽपि तत्कीर्तिरिहाऽस्ति शुभ्रा,
भव्या ! भजध्वं तदवश्यमेव ॥ ४९८ ॥

उपगीतिः

हा हा ! सम्प्रति काले, विंशतितम-शताऽब्धामस्याम् ।
तस्याऽत्यन्ताऽभावोऽभोदिह भारते वर्षे ॥ ४९९ ॥

गीतिः

स्त्रैणाः प्रायः सर्वे, श्वायन्ते काम-किङ्करीभूताः ।
अनुरक्तामपि पत्नीं, परिहाय सम्भजन्ते परदारान् ॥५००॥

गणिका-मुखमपि पूतं, कामाऽन्धाः सत्कुलजा अपि जीवाः ।
नीचैरपि परिपीतं, मत्वा चुम्बन्ति सादरं धिक्तान् ॥५०१॥

जीवनमपि दुरवापं, क्षणिकैरौपस्थिकैः सुखाभासैः ।
व्यर्थमेव गमयन्तो, भवन्ति च विविधरोग-परिपीडिताः ॥५०२॥

रुग्णा अपि तत्तृष्णां, न जहति दिनकर-गताऽऽगतैर्नित्यम् ।
क्षीणं भवदपि चाऽऽयु-र्जानन्ति नैव मूढतरा जीवाः ॥५०३॥

मेथ्रीयन्ते कष्टा-दनुभवन्ति च नरकयातनां घोराम् ।
इत्थं जनिमृतिदुःखं, सहमानाः सुचिरं भवे बम्भ्रमति ॥५०४॥

उपजातिः

यामेष कामी मनुतेऽनुरक्तां,
शेश्रीयते सा कमपीह जारम् ।
तस्मादिदं मादनमादिरम्यं,
विहाय सौख्यं भज ब्रह्मचर्यम् ॥ ५०५ ॥

येनाऽऽशु संसार-समुद्रपारं,
यातासि नूनं भव-भीत-जन्तो ! ।
योगीन्द्र-दुष्प्रापमनश्वरं यत्
तदप्यवश्यं सुखमेष्यसि त्वम् ॥ ५०६ ॥

ईदृङ्मनोहारि-भवाऽपहारि-
सद्देशनां भूरि चरित्रनेतुः ।
आकर्ण्य नैके सुजनास्तदैव,
तद्ब्रह्मचर्याऽऽदिक-मग्रहीषुः ॥ ५०७ ॥

सम्वत्सरे विक्रम-पक्ष-तर्क
ग्रहेन्दु-संख्ये[१९६२] शमनीय-तिथ्याम्[१०] ।
माघे सुमासे धवले च पक्षे,
विरच्य तरिगन् कमनीयनाणम् ॥ ५०८ ॥

तत्पत्तनीयो भवबन्धुरस्य,
श्रीफूलचन्द्रात्मज-भाइचन्द्रः ।
श्रेष्ठी सुधर्मा सह भूरिलोकै
र्व्रतं तुरीयं जगृहे सभायाम् ॥ ५०९ ॥ ( युग्मम् )

सुदुष्कराण्यत्र तपांसि भूरि-
प्रभावना-पूजन-संघसेवाः ।
भक्त्या महत्या सुजनाः प्रचक्रुः,
पन्यास-नीत्याख्य-गुरूपदेशात् ॥ ५१० ॥

इत्थं चरित्राऽधिपतिर्महात्मा,
स्वमुद्धरन् संसृति सागरात्तान् ।

स्वीयान् कुटुम्बानतिभव्यजीवान्,
अप्युद्धारैष जगद्धितैषी ॥ ५११ ॥

प्रौढ-प्रतापाऽतुल-शक्तिभाजा-
मीदृक् स्वभावो भवतीह पुंसाम् ।
तरन्ति लोकानपि तारयन्ति,
दुष्पार-संसार-समुद्रमध्यात् ॥ ५१२ ॥

शठास्तु नित्यं सुजनाऽतिपीडां,
कुर्वन्ति पापानि समाचरन्ति ।
स्वयं महाऽन्धे भवकूपमध्ये,
पतन् परेषामपि पातयन्ति ॥ ५१३ ॥

द्रुतविलंबितम्

समय-मत्र कियन्तमसौ स्थित,
उपचकार विशेषतया सुधीः ।
भविक सर्वजनांस्तत एषकः,
प्रविजहार जगाम च मोरवीम् ॥ ५१४ ॥

तदनु विश्व-सुपूज्य-मुनीश्वरः,
सुजनता-रचितै-र्विततोत्सवैः ।
जय-जयाऽऽरव-मुच्चतर-स्वरै
र्वदद्शेष-सुपौर-जनैः समम् ॥ ५१५ ॥

१ अत्रैकवचनं चिन्त्यम् ।

हरिणलोचन-कान्त-नितम्बिनी-
जन-मनोहर-गीत-सुधारसम् ।
परिपिबन् गुरुमण्डल-मण्डितो,
न्यविशदेष पुरं बहुशोभितम् ॥५१६॥ (युग्मम्)

गुरु-मुखेन्दु गलद्वर-देशनाऽ
मृतमलं परिपीय जनाः समे ।
प्रमद-वारिधि-मज्जित-विग्रहा,
गुरुवरं प्रशशंसुरतीव ते ॥ ५१७ ॥

शार्दूलविक्रीडितम्

अत्र स्थानकवासिनो बहुतरास्तिष्ठन्ति मूर्तिद्विषो,
वर्षैरेव चतुःशतैः प्रचलितं जैने विभागद्वयम् ।
तत्रैकः प्रतिमार्चनं जिनवराऽभेदेन चेक्रीयते,
नैवाऽर्चेत्यपरः कदाऽपि जडधीर्ध्यानं विधत्ते परम् ॥ ५१८ ॥

बिम्बोपासनकारकस्तु निरघः श्रीत्रैशलेयप्रभोः,
पट्टानुक्रमगः सनातनतरः पक्षो दरीदृश्यते ।
अर्हन्मूर्ति-समर्चनैकनिरताः सन्तः कियन्तो जना,
याताः सिद्धिमकल्मषाः क्षितितले यास्यन्ति चाऽग्रे पुनः ५१९

भू-विख्यात-कुमारपाल-वसुधापालः पुरा सम्प्रती,
राजाऽन्येऽपि कियज्जना नरवरा भूपा महेभ्यास्तथा ।
सद्रत्नोत्कर-भासुराऽमित-महाचैत्यानि निर्माप्य ते,
सर्वामेव वसुन्धरामपिपरुश्चैत्यैरिमामार्हतैः ॥ ५२० ॥

अद्याऽपि प्रतितीर्थमार्हतजनैः सम्यग्धनवद्भिर्महाऽ-
मात्याद्यैः कृत-मन्दिरेषु गगनालिङ्गित्वसंख्येषु वै ।
पूज्यन्ते जिनमूर्तयः प्रतिदिनं श्रद्धालुकैः श्रावकैः,
शास्त्राणि प्रतिपादयन्ति शतशस्तन्मूर्त्ति-पूजाविधिम् ॥५२१॥

शालिनी

आसीत् कान्फ्रेन्साऽधिवेशो महीयान्,
लुम्पाकानां तत्र पुर्यां तदानीम् ।
तस्मिन्नागुर्भारतीयास्तदीयाः,
सर्वे मुख्याः प्रायशो धीधनाऽऽढ्याः ॥ ५२२ ॥

वैतालीयम्

अजमेर-पुराऽधिवासकृत्, श्रीढड्ढा-शुभनाम-धारकः ।
जनता-बहुमानितः सकः, सच्छ्रेष्ठि-प्रवरोऽभ्युपाययौ ॥५२३॥
राजकोट-वासकारको, मुरारि-नन्दन-भीमजित्तथा ।
श्रीमज्जन-मुख्यतामित-स्तदवसरे समुपस्थितोऽभवत् ॥५२४॥

उपजातिः

ततान तत्राऽवसरे ह्यमोघा-
च्चरित्रनेतुर्विपुलोपदेशात् ।
तत्रत्य-शुक्लाम्बर-सर्वसंघ-
श्चाऽऽष्टाहिकं चारु-महामहं सः ॥ ४२५ ॥

तत्रोत्सवे श्रीभगवद्रथेन,
महीयसा चारु-सुमण्डितेन ।
पुरःसरेण भ्रमितुं नगर्यां,
निःसीम-लोकैर्वर-वस्त्र-भूषैः ॥ ५२६ ॥

मातङ्गराजैः-वर-वाजिपुञ्जैः,
प्रसाधनैर्मण्डित-सर्व-गात्रैः ।
संह्रेषमाणैः कतिपत्तिभिश्च,
बन्दूकहस्तैः पुरतश्चलद्भिः ॥ ५२७ ॥

परिस्फुरन्नील-सुपीत-रक्त-
शुभ्राऽन्य-वस्त्रैरमित-ध्वजैश्च ।
वियल्लिहद्भिः कति-बेण्ड-भेरी-
मृदङ्ग-शङ्खाऽऽदिक-सर्ववाद्यैः ॥ ५२८ ॥

नानद्यमानैर्युगपत्समस्त-
दिवं भुवं चाऽधिकमश्नुवानैः ।
सिताऽऽतपत्रैः शशिमण्डलाभैः,
सुवर्णदण्डैः सितचामरैश्च ॥ ५२९ ॥

सुधामयूखाऽऽनन-कामिनीनां,
मृगीदृशां पीन-पयोधराणाम् ।
यूथैरनेकैर्मधुर-स्वरेण,
गायद्भिरत्यन्तमुदा सरागम् ॥ ५३० ॥

वैताली

वरघोडा साकमुत्तमाऽऽ–डम्बरेण निरगान्महीयसी ।
सह चचाल लुम्पकाऽग्रणी–मण्डली तत्र मोदमेदुरा ॥५३१॥
( कुलकं )

उपजातिः

ढड्ढाऽभिधः श्रेष्ठिवरोऽजमेर–
पुराऽधिवासी सहगो बभूवान् ।
मुरारि–सूनुः स हि भीमनामा,
सद्राजकोटस्थ उदारचेताः ॥ ५३२ ॥

महोदयः श्रेष्ठिवरोऽपि तस्यां,
समुत्सहिष्णुः सह जग्मिवांश्च ।
सहस्रशः स्थानकवासिनोऽन्ये,
चेलुः सहैवं ददृशुर्जिनेशम् ॥ ५३३ ॥

शार्दूलविक्रीडितम्

श्रुत्वा गौरव–देशनां सुरुचिरां पीयूष–धारायितां,
श्रीमज्जैनिक–मूर्ति–पूजनपरां नैकाऽऽगमाऽऽपादिताम् ।
ध्यानाऽऽलम्बन–दायिनीं सुविदुषां संसार–वार्धौ महा
नावं भूरि–सुयुक्ति–सूक्ति–सहितामादेयभूतां सताम् ॥५३४॥

ऊचुस्ते प्रतिमार्चनं जिनविभोश्चैत्य–प्रतिष्ठाकृतिः,
शास्त्रेष्वस्ति परं मदीयगुरवस्तन्नोररीकुर्वते ।

तत्तत्पाठ-विलोम-मर्थमसकृत्संश्रावयन्ते च नः,
तस्मादेव महाभ्रमे निपतिता वर्तामहे साम्प्रतम् ॥ ५३५ ॥
( युग्मम् )

वसन्ततिलका

चक्षुर्न पश्यति मनो न हि याति यत्र,
वाचामगोचरतया प्रतिभाति यच्च ।
यत्केवलं मनसि पश्यति केवली तद्,
ध्यायेदृते प्रतिकृतिं न हि नाऽत्र मूढः ॥ ५३६ ॥

भुजङ्गप्रयातम्

जले मज्जतां देहभाजां सुनाव-
मिवाऽऽलम्बनं चाऽत्र मूर्तिर्जिनानाम् ।
अतीवोपयुक्तं वरीवर्ति नूनं,
स्वमुद्धर्तुमेतद्भवाऽब्धेरयत्नात् ॥ ५३७ ॥

इन्द्रवज्रा

अज्ञानि-जीवा जिनमूर्तिसेवां,
कुर्वन्त उच्चैरुभयत्र सिद्धिम् ।
अर्हन्ति लब्धुं तदवश्यमेव,
सर्वैरुपास्या प्रतिमा जिनानाम् ॥ ५३८ ॥

मन्दाक्रान्ता

तत्त्वज्ञानाऽवधिकमखिल-प्राणिनामत्र लोके,
सद्भक्त्योपासन-मतिसुख-प्रेप्सुकानां प्रकामम् ।

स्वर्ह-मूर्तेः परमसुखदा-या महापापहन्त्र्याः
पूर्वाऽऽचार्यैः कथितमनघैर्जैन-सर्वागमेषु ॥ ५३९ ॥

उपजातिः

ज्ञानादृते मुक्तिमिवैष जीवः,
कषाय-दौर्गुण्य-विशेषयुक्तः ।
जिनेन्द्र-बिम्बाऽर्चनमन्तरेण,
शक्नोति कर्तुं न हि भक्तिमेषाम् ॥ ५४० ॥

शार्दूलविक्रीडितम्

इत्थं विश्वजनीन एष वरधीः पन्न्यास-नीतिर्मुनिः,
श्रीमद्वीर-सुशासनं कमलिनीवृन्दं विवस्वानिव ।
स्वीयाऽमोघ गिरोपदेशपटलैरानन्दयन् प्रत्यहं,
साकं श्रीगुरुभिर्महेन महता मौर्व्या विजह्रे मुदा ॥५४१॥

स्वागता

जामपूर्वनगरं तत आगात्,
यत्र जैन-जन-मुख्य-सुधाम ।
चैत्यमस्ति जगतामतितुल्यं,
पश्यतां दृगतितर्पण-दक्षम् ॥५४२॥

विश्व-वासि-जनता-हृदयानि,
शश्वदाकृषति भासुर-चैत्यम् ।
मेघ-वर्त्म-परिचुम्बि-विशालं,
कारु-चारु-पटुता-कृत-चित्रम् ॥५४३॥

आकुलाः शतश ऐत्य महिष्ठा,
वीक्ष्य तत्प्रतिकृतिं परिलाय ।
यान्ति देशमित उत्तमधीराः,
संस्तुवन्त इदमुत्तमचैत्यम् ॥५४४॥

आर्या

विंशतिशताऽब्दिकायां, यन्त्रेण लघु नृणामिव चैत्यादेः ।
प्रतिमानं मित-मूल्यैः, कुर्वन्ति दक्षजनाः शतशः ॥५४५॥

गीतिः

अत एव वैदेशिका, दैशिकाश्च तत्राऽऽगता महेभ्याः ।
निरुपम तच्चैत्यस्य, प्रतिकृतीः प्रतिदिनं पातयन्ति ते ।५४६।

उपजातिः

श्राद्धाश्च तस्मिन्नति धर्मनिष्ठा,
वसन्ति सम्यक्त्वमुपेतवन्तः ।
सौवे गुरौ देववरे च भक्ति
सदा विधातार उदार-चित्ताः ॥ ५४७ ॥

गुरून् समेतान् विबुधाग्रगण्यान्,
निशम्य सर्वे मुदिताश्च पौराः ।
बेण्डाऽऽदिवाद्यैर्युगपद्रणद्भिः,
प्रवेशयामासुरिमान् स्वपुर्याम् ॥ ५४८ ॥

चरित्रनेता जलमुक्-स्वनाऽनु
कारि-स्वनेनैव जगद्धितैषी ।
अमेय-लोकान् परिषत्समेतान्,
अशुश्रवद्धर्मकथाः पवित्राः ॥ ५४९ ॥

वसन्ततिलका

हे भव्यवृन्द ! जगतीतल एतकस्मिन्,
स्वप्नोपलब्ध सुखवन्नियतं विभाति ।
स्त्री-पुत्र-बन्धु-धन-धान्य-गृहाऽऽदिसौख्यं,
नैकोऽप्यमीषु हितकृद्भविताऽऽत्मनो हि ॥५५०॥

पानीय-बुद्बुदगणायित-सर्वमेत-
दस्तीति चेतसि निजे परिचिन्त्य तेषु ।
मोहं जहीत सकलाः कुरुताऽऽत्मशान्त्या,
धर्मे मतिं भजत तीर्थकृदङ्घ्रिपद्मम् ॥ ५५१ ॥

देहोऽपि योऽस्ति परम-प्रिय आत्मनो हि,
पुत्रस्तमेव मम तात इति ब्रवीति ।
भार्या च मे पतिरसाविति भाषतेऽमुं,
गृध्रादयोऽपि मम भक्ष्य इति ब्रुवन्ति ॥ ५५२ ॥

मोमुह्यते च सकला जनता यकस्मिन्,
पोपुष्यते च सततं यमिहाऽऽत्मबुद्ध्या ।
तत्राऽपि कालवशगः सकलो जहाति,
रोरुद्यमान-वनितादिकमीक्षमाणः ॥ ५५३ ॥

इत्थं विशेष-परमार्थ-हितोपदेशै-
स्तत्रत्य-सर्व सुजनानतिधर्मरक्तान् ।
कुर्वन्नसौ परमकारुणिको जितात्मा,
व्याख्यान-लाभमधिकं ददमान आसीत् ॥ ५५४ ॥

स्वागता

तावदाययुरनेकमहेभ्या, राजकोट-नगराद् गुरुपार्श्वे ।
प्रावृषं गमयितुं निज-पुर्याम्, आग्रहं विदधिरे वहुभक्त्या ॥

मालिनी

तदनु सगुरुरस्याः सन्नगर्या विहृत्य,
ललित-विपुल-पुर्यां राजकोटाऽभिधायाम् ।
सकल-वृजिन-नाशी स्वागमत्सद्गुरुः स,
सुजन-कृत-महेन प्राविशत्पत्तनाऽन्तः ॥ ५५६ ॥

उपजातिः

वकील-सब्जीत्यभिधान-वाल-
जीत्याख्यकस्तत्र चकार रम्यम् ।
धस्नाऽष्टकीनं परमोत्सवं स,
प्रवर्धमानाऽधिक-भावतो हि ॥ ५५७ ॥

मालती

समवसृते रचना महीयसी,
सकल-समागत-चित्त-हारिणी ।

अजनि महाघ-विलोपकारिणी,
वितत समुज्ज्वल-चारुमहोत्सवे ॥ ५५८ ॥

उपजातिः

दूराऽन्तिकाऽनेकपुराऽऽगतानां,
संख्या जनानां महती किलाऽऽसीत् ।
तेषां समेषां बहुमानपूर्वं,
सम्भोजनायाऽकृत पाकशालाम् ॥ ५५९ ॥

प्रभावनाः श्रीफल-मिष्टकाद्यै-
र्जिनेन्द्रपूजा विविधप्रकाराः ।
सत्स्वामिवात्सल्यमनेकमेष,
चक्रे प्रशस्यं विपुल-व्ययेन ॥ ५६० ॥

इन्द्रवज्रा

लोका असंख्याः प्रतिघस्रमत्र,
श्रीमद्गुरूणाममृतायमानम् ।
नानारसाढ्यं विविधोपदेशं-
भक्त्या महत्या सम्पुः सभायाम् ॥ ५६१ ॥

भुजङ्गप्रयातम्

चतुर्मासिकामेषकोऽस्मिन्नकार्षीत्,
समेषां जनानां विशेषाऽऽग्रहेण ।
सुवर्षेऽक्षि-तर्क-ग्रहेन्दु-प्रमाणे [१९६२],
वितन्वन्नजस्रं यशः सौवमुच्चैः ॥ ५६२ ॥

चतुर्मास-पश्चात्ततो राजकोटात्,
विधाय प्रयाणं गतश्चोटिलायाम् ।
जनाऽऽरब्ध चारूत्सवैरत्यपूर्वैः,
पुरान्तः-प्रवेशं गुरुः संव्यधत्त ॥ ५६३ ॥

ततोऽदत्त नादैः पयोदाऽनुकारैः,
सभायां महत्यां गुरुर्देशनां सः ।
उदारां महाऽर्थां सतां बोधिबीज-
प्रदात्रीमपापां सुधामुद्गिरन्तीम् ॥ ५६४ ॥

उपजातिः

तत्राऽऽगमद्राधनपुरीयः,
सौभाग्यचन्द्राऽऽत्मज-बोडिदासः ।
महेभ्यवर्यः पुरि चोटिलायां,
चरित्रनेतुः सुगुरोः समीपम् ॥ ५६५ ॥

सिद्धाऽद्रिसंघे गमयिष्यमाणो,
निनीषुरेतं मुनिराजवर्यम् ।
व्यजिज्ञपन्नाथ ! तवोपदेशात्,
सिद्धाऽद्रिसंघं परिचालयिष्ये ॥ ५६६ ॥

प्रयाहि तस्मिन् मयि सुप्रसीद,
कुरु प्रयाणं सह साधुवर्गैः ।
पिपूर्हि नः काममम्मुं सुधर्म्य,
विना भवन्तं भविता न चैतत् ॥ ५६७ ॥

१ समासोऽयं चिन्त्यः, एवमन्यत्रापि कुत्रचित् स्खलना दृश्यते.

तदाग्रहादाशु ततो विहृत्य,
मार्गे प्रति ग्राम्य-जनान् सुभव्यान् ।
बहूपकुर्वन्नचिरं प्रधीमान्,
सद्राधनाद्यं पुरमाजगन्वान् ॥ ५६८ ॥

अथाऽऽगतान् विश्वजन-प्रपूज्यान्,
पौरा विशेषोत्सवमाशु कृत्वा ।
वेण्डाऽऽदिनानाविध-वाद्यनादैः,
प्रावीविशन् भूरिजनैः पुराऽन्तः ॥ ५६९ ॥

अथाऽसकौ निश्चित-सौम्यघस्रे,
संघाऽनुकूले जयकारिलग्ने ।
तीर्थस्रजा संघपतिं विभूष्य,
चतुर्विधं संघमचीचलत्सः ॥ ५७० ॥

मसालियोपाधिक एष खोडी
दासो महेभ्यः स हि राजवंश्यः ।
चतुर्दिशुद्गीत-विशेषकीर्ति
र्महासमुद्ध्या प्रथितः किलाऽऽसीत् ॥ ५७१ ॥

तमेष नेता चरितस्य पन्न्या
सोपाधिभाङ् नीतिमुनिर्महीयान् ।
सत्तीर्थमालां परिधाप्य लोके,
विशाल-संघाऽधिपतिं प्रचक्रे ॥ ५७२ ॥

सम्प्रस्थितश्चैष गरिष्ठसंघ
श्चतुर्विधश्चारु-महामहेन ।
मार्गे सुविद्गुरु-दत्त-धर्मो-
पदेश-पीयूष-मलं पिबन् हि ॥ ५७३ ॥

निर्विघ्नमागत्य समस्तसंघैः,
साकं पवित्रं स हि सिद्धशैलम् ।
विधाय यात्रां विधिवन्मुनीन्दुः,
कार्यं स्वकीयं पुपुवे महर्षिः ॥ ५७४ ॥

अभ्युष्य काश्चिद्रजनीरिहैष,
संघाऽधिपस्याऽतिशयाऽऽग्रहेण ।
संघेन सार्धं पुनराधनाऽऽख्यं,
पुरं समागात्सह शिष्यवर्गैः ॥ ५७५ ॥

वसन्ततिलका

तत्पौर-मुख्य-जनताऽतिशयाऽऽग्रहेण,
श्रीविक्रमार्क-गुण-तर्क-नवैकवर्षे[१९६३] ।
पन्न्यास-भावविजयैर्गुरुभिः सहैष,
प्रावृष्युवास नगरेऽत्र महामहेन ॥ ५७६ ॥

शत्रुञ्जयाऽऽदि-बहुपावन-सर्वतीर्थ
माहात्म्यमेष सकलानतिविस्तरेण ।
तद्यात्रया च भविनामिह यानि यानि,
जायन्त उत्तमफलानि परत्र चाऽपि ॥ ५७७ ॥

प्राऽशिश्रवत्तदखिलानि सुदेशनायां,
श्रीमानयं तरण-तारण-कारिदक्षः ।
सन्त्युत्तमाश्च पुरुषाः स्वयमेव तीर्था,
जीवेष्वभीतिमनिशं ददते च ये हि ॥ ५७८ ॥
( युग्मम् )

तत्पाद्-पद्म-परिपूत-वसुन्धरैषा,
तद्रेणवोऽपि नियतं भुवि तीर्थरूपाः ।
तत्स्पर्शनेन विधिवत्परिपूजनेन,
निष्पापिनोऽत्र मनुजाः सकला भवन्ति ॥ ५७९ ॥

तत्सेवया च सकलाऽनुपमा गुणा हि,
तेषामिवाऽऽत्मनि निजे ह्युदिता भवन्ति ।
तान् पर्युपास्य सुचिरं भुवि तत्समत्वं,
सम्प्राप्नुवन्ति सुजना न हि संशयोऽत्र ॥ ५८० ॥

पृथ्वीच्छंदः

अनन्त-गुणसम्पदां सकल-रोमकूपेषु वै,
महामहिम-शालिनां वसति शुद्धता गौरवम् ।
नृणामिह महीयसामतुल-शक्तिमाबिभ्रतां,
दयामय-सुचेतसामखिल-जीवमारक्षताम् ॥५८१॥

महापुरुष ईदृशो व्रजति यत्र यत्राऽवनौ,
विभूतिरखिलोज्ज्वला भवति तत्र तत्र ध्रुवम् ।

य एनमुपसेवते परमया च भक्त्या सदा,
ह्यपार-भवसागरात्तरति नूनमस्मात्सकः ॥५८२॥

वसन्ततिलका

यो बम्भ्रमीति बहुभक्तियुतः सुतीर्थे,
नाऽटाट्यते स हि कदापि भवाऽटवीषु ।
यो व्येति वित्तमनघः प्रतिपद्य तीर्थे ।
जञ्जन्यते पर-भवे स हि सम्पदाऽऽढ्यः ॥ ५८३ ॥

जीर्णोद्धृतिं चरिकरीति सुमन्दिराऽऽदेः,
सर्वोऽप्युपाधिरभियाति लयं तनुस्थः ।
तस्मात् सुजीर्ण-जिन-चैत्य-समुद्धृतिर्हि,
कार्या धनाऽऽढ्यपुरुषैरखिलैरवश्यम् ॥ ५८४ ॥

पोपूज्यते प्रतिदिनं जिनराजबिम्बं,
यो ना विशुद्ध-मनसाऽचलया च भक्त्या ।
बोभूयते सकल-लोक-सुपूजनीयो,
जन्मान्तरे नियतमेव समस्त-सम्पत् ॥ ५८५ ॥

उपजातिः

व्याख्यानमित्थं ददमान एष,
चरित्रनेता परमोपकर्ता ।
जीमूत-निस्वानजिता स्वरेण,
वर्षर्तुकालं गमयाञ्चकार ॥ ५८६ ॥

श्रीमद्गुरोरस्य मुखारविन्दात्,
सत्तीर्थमाहात्म्य-फलं निशम्य।
सहोऽसिते भोगितिथौ दिवान-
श्रीधर्मचन्द्रः परमार्हतः सः ॥ ५८७ ॥

श्रीकेशरीयाजि-विशेष-तीर्थ-
पद्गं सुसंघं निरजीगमत्तैः ।
पद्रीमवद्भिर्गुरुभिः सुसंघै-
श्चचाल सत्रा मुनिराज एषः ॥ ५८८ ॥
( युग्मम् )

तीर्थो ह्ययं प्राच्यतमो गरीयान्,
श्रीपाल-भूमीपति-पूजिताऽस्मिन् ।
तीर्थङ्कर-श्रीमुनिसुव्रताऽऽख्य-
स्वामि-प्रमूर्तिः प्रथमाऽस्त्यपूर्वा ॥ ५८९ ॥

भुजङ्गप्रयातम्

अधिष्ठातृदेवैः कृता सप्रभावा,
जनाऽशेष-कामं प्रदातुं जगत्याम् ।
ध्रुवं कामधेनुर्वरीवृत्यमाना,
चमत्कारिमूर्तिः समैः पूज्यमाना ॥ ५९० ॥

वसन्ततिलका

हालाहलोप(म)कलौ समयेऽप्यमुष्मि-
न्नस्त्येव देवमहिमा जगति प्रधानः ।

श्रद्धाऽधिका अपि जना अमिता लसन्ति,
कुर्वन्ति भूरि-वसुभिर्बहुतीर्थयात्राम् ॥ ५९१ ॥

उपजातिः

देवा गताः शैल-शिरःसु पौरा,
मक्कामिताश्चाङ्गलराज-राज्ये ।
जयन्ति नीचाः सुजनानपीति,
लोकोक्तिमेषा वितथीकरोति ॥ ५९२ ॥

प्रायः सहस्राऽवधिकः स संघः,
सुखेन तद्धाम समाजगाम ।
यात्रां विधायैष ततश्चलित्वा,
स राधनाऽऽह्वं पुरमाजगन्वान् ॥ ५९३ ॥

श्रीसंघ-बह्वाग्रहतो मुनीन्दुः,
स चास्थितवान् प्रावृषि तत्र पुर्याम् ।
वेदाऽङ्ग-नन्द-क्षितिविक्रमाऽब्दे, [१९६४]
पन्न्यास-नीत्याख्यमुनीश्वरोऽयम् ॥ ५९४ ॥

अवाचयत् प्रत्यहमुत्तराध्य--
यनाऽऽख्यसूत्रं परमं पवित्रम् ।
तच्छ्रोतुकामाः पुरुषाः स्त्रियश्च,
संख्यानहीना उपतस्थिरे हि ॥ ५९५ ॥

आर्या

विनयाऽध्ययनं प्रथमं, तत्र मुनि-गृहिणोर्विनय गुणोऽदर्शि ।
अमुना भवति च विद्या, जायतेऽनया श्रुतज्ञानम् ॥ ५९६ ॥

प्राप्नोत्यनेन विरतिं, बोभवीति तयाऽऽश्रवाणां रोधः ।
सम्वर उदेति तस्मात्, तदुदित-तपसा भवति निर्जरा ॥५९७॥

इत्थं हि परम्परया, विनयगुणोऽत्रीह मुक्तिफलदायी ।
अत एव सर्व जीवै-रसकौ मुख्यतया धर्तव्यः ॥५९८॥

गीतिः

तदितराऽध्ययनीयमपि, कथानकं सम्यगबूबुधल्लोकान् ।
प्रमुदित-मनसः सर्वे, धर्माऽनुष्ठाने बहूत्सेहिरे ॥५९९॥

वर्षाकालेऽतीते, मसालिया खोडीदासः श्रेष्ठी ।
सौभाग्यचन्द्र-तनयोऽ-चीकरदुपधानतपोऽधिक-भावैः ॥

तस्य प्रधानमङ्गं, नवपद्याराधनमपि सम्बभूव ।
यदकृताञ्जनशलाका, प्रतिमेव तद्विना न फलति तदत्र ॥

आसीत्तदनुष्ठाने, स्त्रीपुंसाना-मुपस्थितिर्बृहती ।
गुरुदेव-प्रसादेन, समपादि तत्सकलमपि निर्विघ्नम् ॥६०२॥

उपधाने परिपूर्णे, मालां पर्यदीधपत्सर्वांस्तान् ।
महता महेन विधिवत्, गुरुवर्यैः पन्न्यास-नीतिविजयः

उपजातिः

चैत्योपरिष्टात्कलशाऽर्पणं हि,
चेक्रीयते भक्तिभरेण लोकैः ।
यथा तथाऽनुष्ठित-सूपधानाऽ-
वसान-मालापरिधापनं वै ॥ ६०४ ॥

मेघो मयूरानिव सर्वपौरान्,
आजिह्लदच्छासन-कैरवेन्दुः ।
चतुर्विधं धर्ममवीवृधच्च,
चरित्रनेता पुरि सम्यगस्याम् ॥ ६०५ ॥

एकत्र तिष्ठन् सुचिरं हि साधुः,
स्वाऽऽचार-वैरुद्ध्यमवश्यमेति ।
समेधते वाऽधिकराग इत्थं,
ध्यायन् स्वचित्तेऽवसरे विहर्तुम् ॥ ६०६ ॥

स्वाचार-सम्पालन-तत्परो य-
स्तिष्ठत्यजस्रं श्रमणः स एव ।
चारित्र-शाली जनता तमेव,
पोपूज्यते सादरमिद्ध-भक्त्या ॥ ६०७ ॥

देशे च यस्मिन् विचरन्ति नैव,
मुनीश्वरा धार्मिक-शिक्षणार्थम् ।
तत्रैव देशे मयकाऽधुना हि,
विहृत्य लोकाः प्रतिबोधनीयाः ॥ ६०८ ॥

यथा दरिद्रस्य धनप्रदानं,
बुभुक्षितस्याधिक–भोज्यदानम् ।
तृषावतां पायनमम्बुनो हि,
तथाऽबुधानां प्रतिबोधदानम् ॥ ६०९ ॥

तत्रत्य–लोका अबुधा अवश्यं,
ज्ञास्यन्ति धर्मं परमं च जैनम् ।
स्वजीवितस्याऽपि सुधारकास्ते,
नूनं भविष्यन्ति कलावपीह ॥ ६१० ॥

अमूल्य–सम्यक्त्वमिदं सुरत्नं,
पनीपदिष्यन्ति किलाऽऽशु तेऽपि ।
इत्थं चिरं स्वाऽऽत्मनि संविमृश्य,
ततो विजह्रे नगरान्मुनीशः । ॥ ६११ ॥
( षड्भिः कुलकम् )

अखण्ड सच्छील–सुशोभमानः,
क्रमेण वावं स्थिर–पादसंज्ञम् ।
चरित्रनेता भरिलाऽभिधानं,
साचोर इत्यादि–कियत्पुराणि ॥ ६१२ ॥

लुम्पाक–लोकैः प्रतिमाद्विषद्भि–
र्व्याप्तानि तेष्वेष विहृत्य बाढम् ।

१ थराद

अमोघ सौवाऽधिक-शुद्ध-धर्मो-
पदेशदानैः प्रतिबोध्य भव्यान् ॥ ६१३ ॥

सम्यक्त्व-सद्वासित-भाव-पूर्णान्,
अङ्गीकृतार्हत्प्रविशुद्धमार्गान् ।
चक्रे सुजीवान् कियतो महीयान्,
देवे गुरौ चाऽपि विशेष रक्तान् ॥ ६१४ ॥
( त्रिभिर्विशेषकम् )

नो मेनिरे ये प्रतिमार्चनं प्राक्,
तेऽप्यस्य विद्वत्तम सद्गुरोर्हि ।
महोपदेशैरमृतीभवद्भिः,
स्वीचक्रिरेऽर्हत्प्रतिमा-समर्चाम् ॥ ६१५ ॥

इत्थं पुनानो वसुधां क्रमाऽब्जै-
र्बहूपकुर्वञ्जनतामशेषाम् ।
अज्ञान-गाढाऽन्धमरं निरास,
सद्देशनोस्रै रविवत्किलैषाम् ॥ ६१६ ॥

वसन्ततिलका

साचोरतः प्रचुर-शिष्य-सुसेव्यमानः,
प्रस्थाय मार्ग-परिवर्ति-कियत्पुराणि ।
अभ्युध्य भव्यजनताः प्रतिबोधयन् स,
आयिष्ट राजपुरमेष जगज्जनाऽर्च्यः ॥ ६१७ ॥

आयातमेन-मतिचारु-महामहेन,
प्रावीविशन् निजपुरं सकलाश्च पौराः ।
वेण्डाऽऽदिनैक-वर वाद्य-महास्वनेन,
सुश्राविका-निकर सुन्दर गायनेन ॥ ६१८ ॥

आष्टाहिकं निरुपमं परमोत्सवं हि,
सङ्घश्चकार गुरुराज उपागतेऽस्मिन् ।
अष्टापदीय-रचना जनताऽतिहृद्या,
तत्रोत्सवे विरचिताऽखिल-लोक-नुत्या ॥ ६१९ ॥

जातं प्रभावनमुदारधिया सदैव,
सुश्रीफलैः पुटकबद्ध-सितोपलाऽऽद्यैः ।
नानोपचार-जिनराज समर्चनानि,
जीवाऽनुकम्पन-पुरस्सर-संघभक्तिः ॥ ६२० ॥

पूर्णे महे सक इतः सगुरुर्विहृत्याऽ-
गादर्बुदाऽचल सुपावन-तीर्थयात्राम् ।
सद्धी-विनेय-निकरैर्विबुधैरशेषै
र्माननीयमान-पद-पङ्कज इद्ध-तेजाः ॥ ६२१ ॥

वेविद्यते विमलमन्त्रिक वस्तुपाल-
श्रीतेजपाल-परिकारित-दिव्य-चैत्यम् ।
कोटिव्ययेन रचितं जगदद्वितीयं,
विश्वाऽद्भुताऽस्ति रचना प्रतिशैलखण्डे ॥ ६२२ ॥

अत्यन्त सूक्ष्म-रचिताऽनुपमैतदीया,
लोकोत्तरा विविध-शिल्पकला विचित्रा ।
साऽपीह दक्ष-वर-कारु-सुकौशलस्य,
सीमेव भाति सकले जगतीतलेऽस्मिन् ॥ ६२३ ॥

यामीक्षितुं प्रतिदिनं शतशः सहस्रं,
गौराङ्ग-पारसिजनाः समुपेत्य दृष्ट्वा ।
मुग्धीभवन्ति सकला बहु संस्तुवन्ति,
जल्पन्ति नेदृगपरं भुवि चैत्यमस्ति ॥ ६२४ ॥

यात्रां विधाय विधिवद्गुरुभिः सहाऽस्य,
कर्तुं ययौ स हि मरुस्थित-पञ्चतीर्थीम् ।
पन्न्यास-नीतिविजयः कति-शिष्यजुष्टः,
प्रक्षीण-मोह-पटलः परिपूतविद्यः ॥ ६२५ ॥

आगत्य राणकपुरं प्रविलोक्य तीर्थ--
नाथं विशुद्ध-मनसा स्तवनं तदीयम् ।
कृत्वा जनान् सुभविकानिह सम्प्रबोध्य,
नाडोल-पत्तनमगादयमर्हणीयः ॥ ६२६ ॥

शार्दूलविक्रीडितम्

सत्कारं जनताकृतं बहुतरं सम्प्राप्य तत्राऽसकौ,
यात्रामुज्ज्वल-भावतो मुनिवरः सम्पाद्य विद्योदधिः ।
धर्म्याऽमोघ-सुदेशनाऽमृतरसं सम्पाय्य पौरानितो,
घाणेरावपुरं गतः पुरजनैः प्रावेशि चारूत्सवैः ॥६२७॥

सानन्दं जिनबिम्बमुज्ज्वलतरं सम्प्रेक्ष्य बह्वादरात्,
सत्पद्यैः सुचिरं प्रणुत्य मतिमाञ्छ्रीमान् जिनेशम्प्रभुम् ।
संसाराऽब्धि–तरिं श्रवःसुखकरीं दत्त्वा च सद्देशना
मायातः पृथु–नारलाइनगरीं तीर्थं विधित्सुर्गुरुः॥६२८॥

संघाऽऽरब्ध–महामहेन सगुरुः संघैः समं प्राविशत्,
सज्जीभूत–पुरं विधाय परया भक्त्या महायोगिराट् ।
यात्रां भक्तिभराऽवनम्र–सुजनान् सारोपदेशाऽमृतैः,
कृत्वा धर्म-दृढव्रतान् वरकणा-तीर्थं समागाऽऽदितः॥६२९॥

उपजातिः

तत्राऽसकौ तीर्थपतिं प्रणम्य,
दृष्ट्वा मुहुस्तं बहुधाऽभिनुत्य ।
अमान–मोदं ह्यविभः कृतार्थ–
ममन्यताऽऽत्मानमदभ्र–बुद्धिः ॥ ६३० ॥

गीतिः––

घाणेराव–नगर्याः, क्रोशोपरि वने चरम–जिनचैत्यम् ।
मूछारा-महावीर–नाम्ना प्रसिद्ध–मतिभव्यं चकास्ति॥६३१॥

आर्या––

प्रतिमा तस्मिन् दिव्या, गृहवासिनः प्रभोर्महावीरस्य ।
कारिता नन्दिषेणा–ऽभिधेन भूभुजा प्रभु–भक्त्यै ॥६३२॥

इन्द्रवज्रा।

नाडोलपुर्यामपि सन्ति तस्यां,
चत्वारि चैत्यानि विभासुराणि ।
आकाशचुम्बीन्यतिसुन्दराणि,
प्रायः शताऽब्द्याः परतः कृतानि ॥ ६३३ ॥

गीतिः

नारलाइ-नगरेऽपि, चैकादश विलसन्ति जिनचैत्यानि ।
रैवतगिरि-सिद्धाद्री, स्थापितौ स्तस्तेषु तपोमहिम्ना ॥६३४॥

सिद्धाचलीययात्रां करवाणि यर्हि तर्ह्येव किमपीह ।
स्वादानि वा पिबेय-मित्युररीकृतघोराऽभिग्रहस्य ॥ ६६५॥

पुरा कस्याऽपि पुंसो-ऽभीष्टसिद्धये शासन-देवतया।
रचिताविमौ च शैला-वद्याऽपि तस्मिन् दरीदृश्येते ॥६३६॥
( युग्मम् )

एतानशेषतीर्थान्, परिपश्यंश्चरितपतिः पृथुतेजाः ।
उपदेशामृतधारा घन इव वर्षन् सादडीमुपपेदे ॥ ६३७ ॥

इहाऽऽगू राजनगरी-याऽखिल-डेलोपाश्रयाऽधिपतयः ।
चिकारयिषया चातु-र्मास्यममुं बहु विज्ञपयामासुः ॥६३८॥

शिखरिणी

ततस्तद्विज्ञप्त्या शम-दमवतामग्र्यमुनिपोऽ-
चिरं प्रस्थायेतोऽप्रतिहत-विहारैः कतिपयैः ।

समायातः श्रीमान् सगुरुरनघो राजनगरं,
सदा शान्ताकारो भविकजनतारः श्रुतधरः ॥६३९॥

नदद्भिर्वेण्डाऽऽदिप्रमुखवर-वादित्र-निकरै-
र्नयद्भिर्वाधिर्यं सकलजनमुच्चैर्निजरवैः ।
वधूनां सङ्गीतै-रमित-पुरलोकै-रभिमुखं,
समायातैः साकं गुरुरयमविक्षत्पुरवरम् ॥ ६४० ॥

अविच्छिन्नां धारां प्रवचन-सुधानामनुपमां,
गुरोरास्याद्ब्जादधिकनिपतन्ती-मतिरसाम् ।
सुधर्म्यां संसारोदधि-तरणिरूपां श्रुतिसुखां,
समे पीत्वा पीत्वा समगुरतितृप्तिं खलु जनाः ॥६४१॥

समस्त-श्रीसंघ-प्रचुरतर-जाताऽऽग्रहवशा-
च्छराऽङ्गाऽङ्क-क्षोणी-प्रमित-शुभेवर्षे [१९६५] गुरुवरः ।
चतुर्मासीं चक्रे पृथुतर-सुडेलोपसदने,
महालक्ष्म्या देव्याः परमवसतौ राजनगरे ॥६४२॥

असंख्याः श्रोतारः प्रतिदिनमुपायन्नधिसभं,
ह्यपूर्व-व्याख्यानाऽमृतरस-पिपासाऽऽकुलतराः ।
उरीचक्रुः केचिन्नियम-मपरेऽभक्ष्यमखिलं,
जहुर्धर्मे दार्ढ्यं सकल-नर-नार्योऽभ्युपगताः ॥६४३॥

गीतिः—

चतुर्दश-पूर्वाऽऽदीनि,
बहु-दुष्कर-तपांसि भविका जीवाः ।

विधिनाऽऽराधितवन्त-
श्चैतद्गुरुराज-वर्यकाऽस्याऽशे ॥ ६४४ ॥

स्रग्धरा

पुर्यां तस्यां तदानी-मनलकृत-महोपद्रवः प्रादुरासीद्,
एतस्मात्सर्वे-पौरा अनवरत-महात्रस्यमानाः किलाऽऽसन् ।
हानिर्जाता धनानां कियदपि सदनं भस्मसात्सम्बभूव,
भाव्यं किङ्कस्य कर्हीत्यनुपलमधिकं संशयानाः स्वचित्ते ।६४५।

इन्द्रवज्रा

तत्राऽस्ति हेतुर्बलवान् किलैष,
धाष्टेलकस्याऽधिकसम्प्रचारः ।
अस्यां शताब्द्यां नख-सम्मितायां,
पीपीयते यच्च जनो हि बीडीम् ॥ ६४६ ॥

उपजातिः-

हेतोरमुष्माद्बलवत्तराद्धि,
लग्नो हुताशो बहुशो जगत्याम् ।
नोनुद्यमानः पवनेन चाऽऽशु,
क्षणेन सर्वं किल दन्दहीति ॥ ६४७ ॥

एतर्हि काले विषमे स्वकीयं,
सज्ज्ञान-कोशं विपुलं चिरेण ।
चिरन्तनाऽऽचार्यवरैः कियद्भिः,
सुसञ्चितं ज्ञानममूल्यरत्नम् ॥ ६४८ ॥

स्वधार्मिकाऽसंख्यसुपुस्तकानि,
विलिख्य हस्तैर्बहुना श्रमेण ।
सल्लेखकैर्भूरिधनव्ययेन,
संलेख्य चैतत्परिवर्धितं यत् । ॥ ६४९ ॥

धक्ष्यत्यवश्यं तदशेषमेव,
हुताशनश्चेप पुरि प्रलग्नः ।
अतोऽधुना तत्परिरक्षणाय,
यत्नो विधेयो मयकाऽऽशु कोऽपि ॥ ६५० ॥
( त्रिभिर्विशेषकम् )

नो चेदशेषं द्रुतमेव तद्धि,
विनाशमायास्यति तर्हि लोके ।
सर्वस्वनाशे सुधनीव नूनं,
शोच्या भविष्याम इह प्रकामम् ॥ ६५१ ॥

रक्षा च तेषां भवनं किलैकं,
दृढं विना नो भविता कदापि ।
अह्नाय तस्मात्सकला महेभ्या-
स्तद्योग्यमेकं भवनं कुरुध्वम् ॥ ६५२ ॥

शार्दूलविक्रीडितम्

इत्थं संसदि देशना गुरुवरस्यौजस्विनी श्रीमतां,
श्रोतॄणां हृदये प्रभावमधिकं सौवं तदाऽपातयत् ।

सङ्घीभूय ततः समस्त–सुजनाः श्रद्धालवस्तत्क्षणं,
टीपं संविदधुस्तदर्थमनघा इभ्याः समुत्साहिनः ॥६५३॥
नव्यं शैलमयं सुभव्यसदनं श्रीमज्जनैः सर्वकै-
र्ज्ञानीयं निरमीमपद् दृढतरं श्रीज्ञान–रक्षाकृते ॥
अर्हत्स्थापित–शुद्ध–धर्म–जलज–प्रोल्लासकर्ता दिवा–
नाथः श्रीमुनिराज एष वरधीः प्रादिद्युतच्छासनम्॥६५४॥

पृथ्वी

गरिष्ठ–गुरुराजके वसति तत्र मेधाऽऽगमे,
तपोऽप्यधिकदुष्करं नियममप्यनेके ललुः ।
अभक्ष्य–लशुनाऽऽदिकाऽशनमपीह केचिज्जहु–
र्नवीन–सदनं धियः समभवच्च भव्यं महत् ॥६५५॥
निशम्य सुचिरं गुरोः प्रबल–मोह–पाश–च्छिदं,
सुधासम–जरा–विपज्जनन–मृत्यु–दुःखाऽपहम् ।
मुदा समुपदेशनं भव–समुद्र–पोतायितं,
बभूवतुरिमौ परं विषय–वासना–वर्जितौ ॥ ६५६ ॥

गीतिः

अमदावाद–झवेरी–वाडास्थित–नीशापोल–निवासी ।
मोहनलालो धाँची–नामपोल–वासी ऋषभचन्द्रश्च ॥ ६५७ ॥

उपगीतिः

षड्रस–निधि–शशिवर्षे (१९६६), तपसि सिते दिनेश्वरतिथ्याम् ।
ज्येष्ठे रतिपतितिथ्यां, कृष्णे ललतुर्दीक्षामेतौ ॥ ६५८ ॥

आर्या

मोहनलालं मुनि--विजयनामानं कृतवान् गुरुराजः ।
तश्चाऽपि ऋषभचन्द्रं, राजविजय–शुभसंज्ञावन्तम् ॥ ६५९ ॥

गीतिः

परिजन–सहाऽनुमत्या–ऽयोभूयत वसु–दिवस–महामहोऽपि ।
आडम्बरेण महता, वरघोटकोऽचलदुभयदीक्षायाम् ॥६६०॥

उपजातिः

चारित्रमेतद्धरिवर्त्ति लोके,
स्वं सद्गुणाऽऽढ्यं सुधियां विधातुम् ।
सुसाधनं दिव्यगतिं च नेतुं,
निर्भीकयानं चित–कर्मजालम् ॥ ६६१ ॥

छेत्तुं महाऽस्त्रं दुरवाप–मुक्ति
वधू समालिङ्गन कारकं च ।
चारित्रमेतौ परिगृह्य धीरौ,
संसेवमानौ गुरुवर्यमेनम् ॥ ६६२ ॥

डेलाऽभिधोपाश्रय एव तस्याऽ–
धिकारि–पुंसामधिकाऽऽग्रहेण ।
१९६६ षडङ्करन्ध्रैक–मितेऽपि वर्षे,
तत्रैव स प्रावृषमध्यवात्सीत् ॥ ६६३ ॥

मध्येचतुर्मासमुपाश्रयस्थ-
धीकोशकीयाऽखिल-सुव्यवस्थाम् ।
विधाय सूचीदल-मप्यशेष-
सत्पुस्तकानां समचीकरत्सः ॥ ६६४ ॥

अनुक्रमाऽङ्कं प्रतिपुस्तकेषु,
संलेखयामास बहुश्रमेण ।
येनाऽऽशु लभ्येत सुखेन कार्य-
काले समेषामिति हेतुना हि ॥ ६६५ ॥

उपाश्रयोऽसौ वरिवर्ति तत्र,
श्रीराजपूर्वे नगरेऽद्वितीयः ।
संवेगिनामन्य उपाश्रया हि,
साम्यं किलैतस्य न यन्ति जातु ॥ ६६६ ॥

लुवार-पोले स्थितिमीयुषी या,
विद्याऽऽदि-शाला वर-धर्मशाला ।
उपाश्रयो वा स हि वीरपूर्वः,
परेऽपि रथ्यान्तर-संस्थिता ये ॥ ६६७ ॥

उपाश्रयस्याऽस्य गरीयसो हि,
जगत्प्रसिद्धस्य वियद्विहस्य ।
अग्रे तथा ते सकला विभान्ति,
यथा प्रदीपाः खलु चित्रभानोः ॥ ६६८ ॥

भुजङ्गप्रयातम्

क्रियोद्धारकारी सुपन्न्यास-धारी,
सुधीः सत्यसंज्ञो मुनीशो महीयान् ।
डहेलाऽधिवासं पुरा यद् व्यधत्त,
ततोऽभूदसौ तेन नाम्ना प्रसिद्धः ॥ ६६९ ॥

चतुर्मासिकायाममुष्यां महीयां-
श्चरित्राऽधिनाथो महायासतो हि ।
भृशं ज्ञानभक्तिं प्रशस्यामकार्षीत्,
सदा बोधिबीजं ददत्सज्जनानाम् ॥ ६७० ॥

गीतिः

शान्तिविजयमुनिवर्यः, पन्न्यास-मोहनविजय-वर-शिष्यः ।
मासक्षपणं कृतवां-स्तदर्थमजनि महामहो वसुधस्नान् ॥६७१॥

मन्दाक्रान्ता

शान्तिस्नात्रं सकल-सुजनाश्चक्रिरे तत्र रम्यं,
तन्माहात्म्यं प्रथयितुमिहाऽशेषपुर्यामनल्पम् ।
सम्रक्षेत्र्यामधिकमददुः स्वापतेयं महेभ्या,
धर्मोद्योतं व्यतनिषु-रमन्द-प्रमोदं दधानाः ॥६७२॥

उपजातिः—

संश्रावयामास जनानसंख्यान्,
असौ पवित्रं सुकृताङ्गसूत्रम् ।

आकर्ण्य लोकास्तदपूर्वमर्थं,
प्रमोदवार्धौ सकला ममज्जुः ॥ ६७३ ॥

धी-सद्म-निर्माण-कृतेऽवशिष्टं,
लोकेषु टीपं परिपूर्णमेषः ।
व्यचीकरत्सर्वजनैरमोहः,
सर्वाऽऽगमाऽऽराधनमप्यभूच्च ॥ ६७४ ॥

शार्दूलविक्रीडितम्

आत्म-ध्यानपरो महाश्रुतधरः पन्न्यास-नीतिः प्रभुः,
सत्रा श्रीगुरुणा बहूपकृतवानत्रत्य-भव्यात्मनः ।
उद्धृत्याऽखिल-पुस्तकानि महताऽऽयासेन विद्वत्तम-
श्चातुर्मास्यमलञ्चकार बहुभिः शिष्यैः सुविज्ञैः समम् ॥६७५॥

चातुर्मास-निवर्तने मनसुखः पुत्रो भगुश्रेष्ठिनः,
श्रीशङ्खेश्वर-पार्श्वनाथ-विधिवत्संस्थापनाय प्रभोः ।
विज्ञप्तिं कृतवानमुष्य सुगुरोः सत्तीर्थ-शङ्खेश्वरे,
तन्नुन्नः सकलैः सुशिष्यनिकरैः साकं विजह्रे ततः ॥ ६७६॥

वैतालीयम्

अचिरादयमागमद्गुरुः, श्रीशङ्खेश्वर-तीर्थमुत्तमम् ।
एषकोऽत्र नागरैर्जनैः प्रावेशि पुरं सुन्दरोत्सवैः ॥६७७॥

पुरा जरासन्ध-भूभुजा,
युधि सैन्येषु स्वापितेषु वै ।

स्वापनाऽस्त्र–मोचनात्तदा,
तद्विहन्तुं जनार्दनः स्वयम् ॥ ६७८ ॥

नेमिनाथ–बोधितो हरिः,
पार्श्वनाथ–विभु–बिम्ब–पित्सया ।
पतितोऽधिक–सङ्कटेष्वसौ,
पद्मावतीं सुरीमपूजयत् ॥ ६७९ ॥

त्रिदिनं समुपोष्य तोषिता,
चरमे दिवसे सम्मुखाऽऽगता ।
बिम्बमदात्केशवाय तत्,
स्वस्थानं पुनराजगाम सा ॥ ६८० ॥

दोधकवृत्तम्

तावदशेष–चमूमयमेको,
नेमि–जिनेश्वर एव हि तत्रे ।
निस्तुल–शक्तिधरो जगदीशः,
सर्व-सुराऽसुर–मानव–जेता ॥ ६८१ ॥

उपजातिः

प्रध्माय शङ्खं पुरमत्र शङ्खे
श्वरं विनिर्माय विधाय चैत्यम् ।
बिम्बं प्रतिष्ठाप्य तदम्बुनाऽसौ,
सैन्यं विनिद्रं कृतवान्मुरारिः ॥ ६८२ ॥

द्वाविंश-तीर्थङ्कर-नेमिनाथ
जिनेश-काले रचिता पुरीयम् ।
कृष्णेन चैषा प्रतिमाऽपि रम्या,
चिरन्तनाऽत्यन्त-चमत्कृताऽस्ति ॥ ६८३ ॥

ज्योतिष्क-देवैरपि पूज्यमाना,
लोके तदीये चिरकालमासीत् ।
लोकैरसंख्यैरधुनाऽपि भूरि-
चमत्कृतिः सन्ततमीक्ष्यते हि ॥ ६८४ ॥

भुजङ्गप्रयातम्

अधिष्ठातृ-देवी-सदाऽधिष्ठितेयं,
समाराधिता सा ददाना समेषाम् ।
अमुष्मिन् नृलोके ध्रुवं कामधेनू-
यिता भाति शश्वत् समर्च्याऽतिभक्त्या ॥६८५॥

अपत्यैर्विहीनाः कियन्तो हि सन्तः,
समाराध्य भक्त्या लभन्ते सुपुत्रान् ।
दरिद्राः प्रभूतं धनं चाऽऽशु यन्ति,
भजन्ता किलैतां पनीपद्यते शम् ॥ ६८६ ॥

पञ्चचामरम्

अयं चरित्रनायको हयाऽङ्ग-नन्द-चन्द्रमः- [१९६७]
समा-तपः-सिते दले विलेशयीय-सत्तिथौ ।

तदेव बिम्बमुत्तमं बहिः स्थितं निजासने,
स्वतिष्ठिपन्महामहैः शुभेऽह्नि–शुद्धलग्नके ॥६८७॥

तदर्थ उत्सवो महानवोमत्रीदिनाऽष्टकं,
समस्त–सङ्घ-जेमनं बसूत्तराऽभिष(षे)चनम् ।
कियत्सहस्रमागमञ्जना विदेशतस्तदा,
दिदृक्षया महोत्सवं गुरूनमूंश्च वन्दितुम् ॥६८८॥

समाप्य सञ्जितेन्द्रियः समस्त–कृत्यमेषकः,
स्वकीय–मौन-मण्डलीश्रितो विहृत्य तत्पुरात् ।
पथि क्रमादुपागतान्यनेकसत्पुराण्यसौ,
पुनञ्जनाननारतं प्रबोधयन् गुणोज्ज्वलः ॥६८९॥

शार्दूलविक्रीडितम्

तारङ्गाजिकमुत्तमं क्षितितले संसार–तारं परं,
तीर्थं प्रापदकल्मषो मुनिवरः कामाऽऽदि–षड्काऽरिजित् ।
दृष्ट्वा तीर्थपतिं प्रणम्य परया भक्त्या प्रणुत्याऽऽदरा–
दात्मानं पुपुवे बभूव मुनिराडत्यन्त–हर्षाऽऽकुलः ॥ ६९०॥

मालिनी

विहित–सविधि–यात्रः प्रस्थितश्चैतकस्माद्,
विसनगर–मगच्छन्नागरास्तत्र सर्वे ।
अतिशय–निनदद्भिर्वण्ड–भेर्यादि–वाद्यै–
र्युवतिजन सुगीतैश्चाऽऽनयंस्तान् पुराऽन्तः ॥६९१॥

जलद-निनद-जेत्रा तारनादेन विद्वान्,
परिषदि गुरुराजो देशनाममृताऽऽभाम् ।
श्रुति-युगल सुपेया-माकुर्वन्तीं जनानां,
सदय-हृदय-मंहोहारिणीं स-ददान: ॥ ६९२ ॥

भुजङ्गप्रयातम्

इहस्था गृहस्थाश्चतुर्मासहेतो-
र्भृशं चाऽऽग्रहीषुर्गुरूनेतकांस्ते ।
मणीभाइनामा तथा गोकलाऽऽख्यो,
महेभ्या जनाऽग्र्याः सुधी-मूलचन्द्रः ॥ ६९३ ॥

गुरुश्चाऽप्यमीषां समेषां तदानी-
मुरीकृत्य बह्वाग्रहं सादरं सः ।
पयोदर्तु वासं प्रभुर्निश्चिकाय,
पुरे तत्र रम्ये जगत्तापहारी ॥ ६९४॥

मालिनी

तिलक-विजय-नाम्ने साधवे ज्येष्ठ-शुक्ले,
१९८७
फण-धर-वरतिथ्यां वाजि-तर्काङ्क-भूम्याम् ।
शरदि गुरु सुदीक्षा-मेतकस्मै प्रदाय,
ह्यकृत सुमुनि-दानाऽन्तेसदन्तत्र पुर्याम् ॥६९५॥

घन इव जलधारां धर्म-पीयूष वर्षां,
कृतवति मुनिराजे नीति-पन्न्यासवर्ये ।

अधिसमुपयाताऽपूर्वचारूपदेशाऽ-
मृत-वहल-पिपासु-प्राणिसंख्या गरिष्ठा ॥६९६॥

वसन्ततिलका

स्वाऽऽचार-कर्म-जिन-भाषित-शुद्ध-जैन-
धर्मानजानत इमान् पुर-वासिलोकान् ।
शैथिल्यवद्यतिजनाऽधिकसङ्गदोषा(षान्),
तानेष धर्मरसिकानकरोच्छ्रमेण ॥ ६९७ ॥

व्याख्यान-पद्म-मकरन्द-पराग-लुब्ध-
भृङ्गीभवत्सकल-जैन-तदन्यलोकाः ।
अत्युत्सुकाः प्रतिदिनं समये समेत्य,
संश्रुत्य चैकमनसा वहुलाममीयुः ॥ ६९८ ॥

चक्राण एष जनता-परमोपकर्ता,
भूम्ना श्रमस्य शनकैः सकलांश्च पौरान् ।
धर्मेषु कर्मसु सदाचरणेषु लोकान्,
सद्रागिणः कुयति-सङ्गतिमुज्झयित्वा ॥६९९॥

निर्दोष-संयम-दुराप सुरत्न-भासा,
प्रद्योतयञ्जगदिदं सकलं महात्मा ।
सम्प्रैदिधत्परममार्हत-धर्ममेष,
योगीश्वरश्चरितनायक आर्यवर्यः ॥ ७०० ॥

आर्यागीतिः

तत्रत्याः कतिमुख्याः, सह नवपदाराधनेनोपधानम् ।
कारयितुं तप उग्रं, सद्गुरुमेनं प्रार्थयाञ्चक्रुरनघम् ॥ ७०१ ॥

गीतिः

नाथ ! इहाऽधिकलोकाः, समुशन्ति तदाराद्धुं बहुभक्त्या ।
अत एव गुरो ! प्रसीद, पूरय सकल-मनोरथं तदवश्यम् ॥७०२॥

औपच्छन्दसिकम्--

तदधिकभावं विलोक्य तेषां,
गुरुरथ शुभदिवसे यथाविधानम् ।
बहुभिः स्त्रीपुंसकैस्तदर्हैः,
प्रारम्भत महामहेन तद्धि ॥ ७०३ ॥

परिपूर्णत्वं गते च तस्मिन्,
सुचारु-मालारोपणोत्सवोऽभूत् ।
वसुदिवसीयः प्रभावनाऽर्चाऽ-
कारि भगवतो भक्तितो गरिष्ठा ॥ ७०४ ॥

शार्दूलविक्रीडितम्

पादोन-द्विशत-प्रमाण-गणिताः सुश्रावक-श्राविकाः,
आसंस्तत्र महोपधानतपसि प्राप्तप्रवेशाः समे ।
शश्वद्धर्मे गुरूपसेवनरताः स्वाचार-पूतीकृताः,
साऽवद्याऽखिल-कर्मणा विरहिता धर्मे च नित्यं रताः॥७०५॥

पूर्णे कर्मणि संविहृत्य नगरात्तस्मादसौ सद्गुरु-
र्बीजापुर-निवासि-संघनिकराऽत्यन्ताऽऽगृहीतः प्रभुः ।
तत्राऽऽगात् पुरवासिनश्च सुजनास्तौर्याऽऽरवैर्नैकधै-
रत्युच्चैः पुरमानयन्त विबुधं श्रीमन्तमेनं गुरुम् ॥ ७०६ ॥

उपजातिः -

अत्राऽपि लोकैरुपधान-नाम,
साङ्गं तपः कारितवान् क्रियद्भिः ।
स्त्रीभिश्च पुम्भिर्महता महेन,
तदन्त-मालापरिधापनञ्च ॥ ७०७ ॥

आष्टाहिकेनाऽतिमनोहरेण,
नैकप्रकारी जिनराज-पूजा ।
प्रभावना श्रीफलकादिनाऽभूत्,
जीवाऽनुकम्पादिषु भूरिदानम् ॥ ७०८ ॥

भूयिष्ठ लोका उपतस्थिरेऽस्मि-
न्नभूच्च शान्तिस्नपनं प्रभूणाम् ।
श्रीस्वामि-वात्सल्यमनेकमत्राऽ-
भवत्प्रशस्यं ववृधे च धर्मः ॥ ७०९ ॥

आकर्ण्य कामं सकलाश्च पौरा,
व्याख्यानमेतस्य महाप्रभावम् ।

सम्यक्त्व-सन्दार्ढ्यकरं प्रशस्यं,
धर्मं सुरागं दधिरे नितान्तम् ॥ ७१० ॥

प्रागार्हतीया धनमन्तरेण,
नानाविधं धर्ममकुर्वताऽत्र ।
एतच्छताऽब्द्यां नख-संख्यकायां,
धर्मोऽपि जातो व्यवहार एव ॥ ७११ ॥

अष्टोपवासाऽऽदि-तपःस्वपीह,
प्रजागरा-सांधिक-भोजनाऽऽदेः ।
कर्तव्यता या प्रससार लोके,
सैषा कुरीतिर्घटते न धर्मे ॥ ७१२ ॥

अर्हं विना क्रेतुमना अपीह,
क्रीणाति नो क्रय्यमकिञ्चनो ना ।
यथा तथा सम्प्रति निर्द्धनोऽपि,
कर्तुं न शक्नोति कदापि धर्मम् ॥ ७१३ ॥

एतत्कुरीत्यै खलु धर्मगेहे,
स्थान-प्रदानं बहुहानिकारम् ।
पत्न्या असत्या इव सर्वलोकैः,
सोच्छेदनीया तत आशु यत्नात् ॥ ७१४ ॥

सत्यां हि तस्यां रुजि शक्तिवृद्धि,
धर्मश्चतुर्धाऽऽत्मक एष लोके ।

वर्धिष्यते नैव कदापि देहे,
नुः सत्यमेतन्न हि संशयोऽस्मिन् ॥ ७१५ ॥

आर्यागीतिः—

नवपदमन्त्राऽऽदीना-
माराधनेऽपि तत्तत्कर्तव्यत्वम् ।
निपतति शिरसि यदेवं,
तदपि हापयितुं सर्वथा यतनीयम् ॥ ७१६ ॥

एवं सदसि महीयान्,
सकल कुरीति-विलोपनाय बहुयुक्तिम् ।
चरित-पतिः परमर्षिः,
सम्प्रदर्श्य समाकृषज्जनता-चित्तम् ॥ ७१७ ॥

इन्द्रवज्रा।

कृत्वा विहारं तत एष सर्वैः,
सत्साधुभिः सार्धमुदार-कीर्तिः ।
तीर्थं परं केशरियाजि-नाम,
पापाऽद्रि-दम्भोलिमुपाजगाम ॥ ७१८ ॥

कृत्वा च यात्रां विधिवन्महत्या,
भक्त्या भृशं तीर्थपतिं प्रणम्य ।
काव्यैरनेकैः सुचिरं प्रणुत्य,
प्रामोमुदीत्तत्र मुनीन्दुरेषः ॥ ७१९ ॥

निवृत्य तस्मात् पुनराजगन्वान्,
बीजापुरं श्रीमुनिराजवर्यः ।
अस्योपदेशादिह सम्बभूवान्,
उद्यापनीयः परमोत्सवश्च ॥ ७२० ॥

महोत्सवाऽनन्तरमेतकस्मात्,
सम्प्रस्थितो वीरम-गामनाम ।
पुरं प्रति श्रीगुरुभिः समेतः,
सच्छिष्य-वृन्दश्रितपादपद्मः ॥ ७२१ ॥

वसन्ततिलका

शैलाऽङ्ग-रन्ध्र-विधु-सम्मित-विक्रमाब्द- (१९६७)
वैशाख-कृष्ण-मकर-ध्वज-सत्तिथौ सः ।
भौमेऽह्नि राधनपुरस्थितचुन्निलालः
संसार-दुःख-दहनाऽधिकतप्तचेताः ॥ ७२२ ॥

वैराग्य-पूर्णहृदयः सदयो विनीतः,
सांसारिकं सकलसौख्यमतिप्रतुच्छम् ।
सौदामिनी-लसितव-च्चपलं च जानन्,
सुश्रावकश्चरितनायक-पाणिपद्मात् ॥ ७२३ ॥

श्रीभोयणी-परम-पावन-सिद्धतीर्थे,
दीक्षां भवाऽब्धि-तरणिं शिवसौख्यदात्रीम् ।

नाना-भवीय-निचिताऽखिल-कर्महर्त्रीं,
लात्वा वमौ धृत-सुवीर-पवित्रवेषः ॥ ७२४ ॥
(त्रिभिर्विशेषकम्)

दीक्षार्थिनं प्रथममेत्य तदीयपत्नी,
वारद्वयं गुरुवरान्तिकतो गृहीत्वा ।
गेहं निनाय चतुरा बहुधा विलप्य,
माया-प्रपञ्चमधिकं विरचय्य तन्वी ॥ ७२५ ॥

भुजङ्गप्रयातम्—

तदाऽसौ कृपालुर्गुरुस्तामुवाच,
सुशीले ! पतिस्ते समेता पुनश्चेत् ।
तदाऽवश्यमस्मै प्रदास्यामि दीक्षा-
मिति त्वं मदुक्तं विजानीहि सत्यम् ॥७२६॥

अतस्तं ह्युपेतं तृतीये च वारे,
गृहीत-प्रदीक्षं प्रचक्रे महात्मा ।
ग्रहीतुं तमागत्य भार्याऽपि पश्चात्,
समैक्षिष्ट कान्तं गतं साधुवेषम् ॥ ७२७ ॥

उपजातिः

शोशुच्यमाना गुरुसन्निधौ सा,
रोरुद्यमाना कति-विज्ञ-लोकैः ।

प्रबोधिता धैर्यमुपेत्य पश्चा-
दाभाष्य तं स्वीयपुरं समागात् ॥ ७२८ ॥

औपच्छन्दसिकम्

चन्दनविजयेति नाम चक्रे, दीक्षानन्तरमेतकस्य रम्यम् ।
सद्गुणताऽम्भोनिधिर्गुरुर्हि,विश्वजनीनो योगिराजवर्यः ॥७२९॥

उपजातिः

समुत्सहिष्णुः परमं किलैष, दुग्धं घृतं तैल-गुडौ दधीनि ।
तैलेन पक्वं सकलं च खाद्यं,जहौ षडेतद्विगयानि धीमान्॥७३०।

गृहीतदीक्षो मुनिचन्दनोऽसौ,
चारित्र-सम्पालनतत्परः सन् ।
वैराग्यपूर्णः क्रमशः स्वशास्त्राऽ-
ध्यायं समारब्ध गुरोः समीपे ॥ ७३१ ॥

ततो विहृत्यैष समेत्य वीर-
मग्राममस्मिन्नकरोन्मुनीशः ।
वर्षर्तुवासं समशुश्रुवच्च,
व्याख्यानकाले सुकृताङ्गसूत्रम् ॥ ७३२ ॥

अत्युत्सुका नित्यमशेष-पौरा,
जैना अजैनाः पुरुषाः स्त्रियश्च ।

समामुपेता बहुनाऽऽदरेण,
संशुश्रुवुस्तेऽधिकमोदमानाः ॥ ७३३ ॥

शार्दूलविक्रीडितम्--

एतस्याऽद्भुत-देशना निरुपमाः पीयूषधारायिता,
जीवैः सादर-संश्रुता बहुभवोद्भूत-प्रभूताऽवहाः ।
नित्याऽनन्त-सुखप्रदा भवततेरुच्छेदिकाः प्राणिना-
माकर्ण्याऽखिल-सज्जनाः प्रमुदिताः सन्तु(न्तुष्टु)वुः सद्गुरुम् ॥

प्रत्याख्यानमनेक-तीव्र-नियमाऽऽदानं प्रभोः सद्गुरो-
र्गृह्णन्तः प्रतिवासरं सुभविकाः श्राद्धास्तथा श्राविकाः ।
चक्रुर्दुष्कर-सत्तपांसि परया भक्त्या कियन्तः परे,
सम्यक्त्वं प्रतिपेदिरे कति जना यद्दुर्लभं देहिनाम् ॥ ७३५ ॥

श्रीमच्छ्रीजिनपूजनं कतिविधं नैकोत्सवं प्रत्यहं,
तत्राऽचर्करुरुत्सहिष्णुसुजनाः सद्भक्तिमन्तः समे ।
दानं चाऽपि निर्गलं बहुविधं संस्थासु नानास्वपि,
कृत्वा नैजधनं व्यधुश्च सफलं सर्वे समुत्साहिनः ॥ ७३६ ॥

उपजातिः

तत्रोपधानं द्विशती जनानां,
स्त्रीपुंसकानां परया च भक्त्या ।
चकार चैतद्वसु-वार्धि-धस्रै-
राराध्यते सन्तत-पौषधस्थैः ॥ ७३७ ॥

उपोषणं चैकदिने द्वितीये,
धत्ते पुनः षड्विकृति-प्रहीणम् ।
सञ्जायते भोजनमेकवार-
मायंबिलं रुद्रदिनानि चान्ते ॥ ७३८ ॥

रीत्याऽनया भक्तिभरेण सर्वे,
चाऽऽराधयामासुरिहोपधानम् ।
श्रीमद्गुरूणां कृपया ह्यमीषां,
समापिपंश्चैतदविघ्नमेते ॥ ७३९ ॥

प्रान्ते च तेषां समुपासितस्यो-
पधाननाम्नस्तपसश्च तत्र ।
मालासमारोपण-जायमान-
श्चाऽऽष्टाह्निकोऽकारि महामहश्च ॥ ७४० ॥

श्रीमान् गुरुः स्वीय-शुभङ्करेण,
पाण्यम्बुजेनोत्तम-मालिका हि ।
शुभे मुहूर्त्ते व्रतिनां समेषां,
समर्पयामास महाऽनुकम्पः ॥ ७४१ ॥

उपस्थितिश्चाऽऽगत-सज्जनानां,
गरीयसी तत्र महामहेऽभूत् ।
प्रभावनाऽर्चाऽ-खिल-संघ-सेवा,
प्रशंसनीया जनतासु जज्ञे ॥ ७४२ ॥

वस्वङ्ग-रन्ध्र-क्षिति-विक्रमाऽब्दे,
माघे वलक्षे सुतिथौ दशम्याम् ।
मुन्योस्तयोश्चन्दन-मान-नाम्नो-
र्दीक्षां च गुर्वीं ददिवान् महीयान् ॥ ७४३ ॥

तामेव लोकाः कथयन्ति छेदो-
पस्थापनीयामिति पूर्वमेव ।
व्याहारि तस्मादिह तत्प्रपञ्चं,
न चर्करीमीति सुधीभिरुह्यम् ॥ ७४४ ॥

भुजङ्गप्रयातम्

बभूवान् विनेयो मुनिश्चन्दनाऽऽह्वयः,
सभायां प्रवक्तुः सुपन्न्यासि-जिष्णोः ।
चरित्राऽधिभर्तुर्मुनीन्दोरमुष्य,
सुधीवृन्द-चित्ताऽम्बुज-भ्राजि-भानोः ॥७४५॥

मुनिर्माननामाऽभवच्चैतदीय-
विनेय-प्रधानस्य हर्षस्य साधोः ।
विनीतः सुशिष्यो भविष्यत्सुसूरे-
र्महोदारकीर्तेर्विपश्चिद्वरस्य ॥ ७४६ ॥

शार्दूलविक्रीडितम्

धर्म-प्रेमणि गुर्जरे गुरुवरो नीवृत्यसौ पर्यटन्,
सद्विद्याविषयोपरि प्रतिपुरं चौजस्विनीं देशनाम् ।

ज्ञानौन्नत्य-विधित्सयाऽमृतगिराऽदादेच्च गम्भीरया,
यत्तेनैव विजेजयीति सुमना मोहाऽऽदिषड्वैरिणः ॥ ७४७ ॥

वसन्ततिलका--

नाऽनेन मोक्षमतिदुर्ल(र्लभ)मभ्युपैति,
जानाति भूतमथ भाव्यमशेषवृत्तम् ।
पोपूज्यते च सकलैरिह मर्त्यलोकै-
रानन्दमात्रमनघं परिपश्यति स्वम् ॥ ७४८ ॥

ज्ञानं विना भवति ना पशुवन्नृलोके,
नो वेत्ति किञ्चिदपि धर्म-मधर्मकं वा ।
शिश्नोदरार्थ-सतताऽऽकुलतां प्रपन्नः,
संवम्भ्रमीति चिरमत्र विमूढजीवः ॥ ७४९ ॥

तज्ज्ञानमाप्तमुचिताऽखिल-सुप्रबन्धं,
विद्यालयाऽऽदि न हि चैकमपीह देशे ।
वर्वर्त्ति तेन मुनयः परिपूर्णविद्यां,
नैवाऽऽप्नुवन्ति विचरन्त इह प्रदेशे ॥ ७५० ॥

एतत्त्रुटिं परिजिहापयिषुः कृपालु-
रेतच्चरित्र-वर-नायक आयतिष्ठ ।
प्राबूबुधच्च सकलानिति देशनायां,
सुज्ञानमेव सकलोन्नतिहेतुरस्ति ॥ ७५१ ॥

भुजङ्गप्रयातम्-

ध्रुवं वीरपुत्रा इमे शासनेऽस्मिन्,
समस्ताऽऽगमज्ञा भवेयुश्च यर्हि ।
अवश्यं हि तेष्वेव तीर्णा भवाऽब्धेः,
समुत्तारयेयुः परांश्चाऽपि जीवान् ॥ ७५२ ॥

उपजातिः

प्रत्येकवीराऽऽश्रित-धीर-पुम्भि-
द्रव्येण भावेन च नित्यमेव ।
सैद्धान्तिकाऽऽराधनमस्ति कार्यं,
हिताय चाऽन्यैरपि कारणीयम् ॥ ७५३ ॥

धी-निर्मलत्व-प्रत्ति(ति)पत्तये यो,
जिनाऽऽगम-ग्रन्थमनेकमत्र ।
विलेख्य कोशे क्षिपतेऽथवा यो,
संलेख्य जीर्णं मुनये ददाति ॥ ७५४ ॥

इत्यादि कृत्यैरिति शुद्धसत्तया,
ज्ञानं समभ्यर्चति भव्यजीवः ।
तद्बुद्धिजाड्यं परिणश्यतीह,
जञ्जन्यते निर्मलभूरिबुद्धिः ॥ ७५५ ॥

ज्ञानाऽर्चनादत्र हि चक्रवर्ती,
राजायते शक्रपुराऽधिपत्यम् ।

लोकान्तरे प्राप्य तदीयसौख्यं,
चिराय सम्भुज्य ततोऽत्र लोके ॥ ७५६ ॥

उच्चैः कुले जन्म समेत्य भूयः,
सम्पाल्य चारित्रमदूषितं सः ।
कैवल्यमापद्य समुज्ज्वलं हि,
लालभ्यते सौख्यमनश्वरं च ॥ ७५७ ॥
( युग्मम् )

शिखरिणी

श्रुतज्ञानात्प्राणी स्वहितमहितं वेत्ति नियतं,
तथा जीवाऽजीवाऽऽदिकमपि सुतत्त्वं निजधिया ।
स तत्त्वज्ञो भूत्वा विरतिमपि चेयर्त्ति परमां,
विरत्यां जातायां झटिति लभते मोक्षमनघः ॥ ७५८ ॥

मालिनी

कृत-वृजिन-रुजानामौषधं रामबाणं
सुकृत-तति-निदानं साधनं सर्वसिद्धेः ।
शिव-नगर-सुमार्गाऽऽलोकने दिव्यचक्षु-
र्भवति नरवराणां ज्ञानमेतच्चकासत् ॥ ७५९ ॥

उपजातिः

कर्मौघ शुष्केन्धन-पुञ्जमेत-
न्निमेषमात्रेण च दन्दहीति ।

सतां समिद्धोऽग्निरिवाऽत्र लोके,
कान्तेव शश्वद्धितकारि जन्तोः ॥ ७६० ॥

ज्ञानप्रदाता सुचिरं मनुष्यो,
भुंक्ते च वैमानिक–दिव्यसौख्यम् ।
तद्भव्य ! जन्तो ! द्रविणं स्वकीयं,
विद्यालयादावुपयोजयाऽऽशु ॥ ७६१ ॥

यदत्र जीवः कुरुते विशुद्ध–
भावेन दानाऽऽदिक–धर्मकृत्यम् ।
देहान्तरे तस्य तदेव पुण्यं,
फलानि भूयांसि ददात्यवश्यम् ॥ ७६२ ॥

औपच्छन्दसिकम्

चरितपते–रास्य–फुल्ल–पद्मा–
दतिविदुषः सुगुरोरमुष्य रम्यम् ।
बहुधाऽऽकर्ण्योपदेशमेव–
मिभ्य उजमसी वीरचन्दनामा ॥ ७६३ ॥

उपजातिः

श्रीसाधु–विद्यालय–हेतवेऽसौ, मुद्रासहस्रं तिथि–सम्प्रमाणम् ।
महेभ्यवर्यः प्रवितीर्य चन्द्र–वदुज्ज्वलां कीर्तिमवाप लोके ॥७६४॥

वैतालीयम्

नवरस-निधि-चेन्द्र[१९६९]हायने, तपसि शुक्ले चतुर्दशी-तिथौ ।
चोटीला-ग्राम-वासिनम्, उजमसी पाठकं विरागिणम् ॥७६५॥

गीतिः

सूत्सवैर्दीक्षयित्वा, मुनिरुदय-विजयेति-शुभाऽभिधानम् ।
धृत्वा स्वैरं विहरन्, राधनपुर-मुपाययौ मुनिराजः ॥७६६॥
(युग्मम्)

पञ्चचामरम्

समागतान् गुरूनमून् दिगन्त-यात-कीर्तिकान्,
ध्वनन्मृदङ्ग-दुन्दुभि-प्रभेद-नैक-वादनैः ।
जयध्वनिं वदज्जनैः स्फुरद्ध्वजैर्महापटै-
रशेष-नागरा मुदा पुराऽन्त-रानयन्त ते ॥ ७६७ ॥

गुरु-प्रदत्त-देशनामशेष-पाप-मोचनां,
निगूढ-तत्त्व-दर्शनां समस्त-दुःख-भञ्जनाम् ।
निपीय सर्वसज्जना उदार-चित्तभावनाः,
सुदुर्वचां स्वमानसे मुदं ययुश्च कामपि ॥ ७६८ ॥

मालिनी

उदय-विजयसाधोरत्र मासे तपस्ये,
प्रतिपदि सितपक्षे सूत्सवैर्ज्येष्ठ-दीक्षाम् ।

अदित गुरुवरोऽयं तत्र धर्मसाऽप्रकीयं,
    ह्यकृत महमतुच्छं सर्वसंघोऽतिहर्षात्   ॥७६९॥

वसन्ततिलका

पापापुरी-सुरचना-रचिताऽतिहृद्या,
    प्रत्याहिकं जिनवराऽर्चनमद्वितीयम् ।
नित्यं प्रभावनमकारि सितोपलाऽऽद्यैः,
    श्रीसंघ-जेमनमपि प्रबभूवनैकम्   ॥ ७७० ॥

शङ्खेश्वरस्थ-भगवत्प्रभु-पार्श्वनाथ-
    यात्रामसौ सह सुशिष्यगणैर्विधाय ।
तद्राधनादिपुरतः कृतसम्प्रयाणः,
    श्रीराजपूर्वनगरं सुपुरं समागात्   ॥ ७७१ ॥

आडम्बरेण महताऽखिल-तूर्यनादै-
    र्लोकं नयद्भिरखिलं बधिरत्वमुच्चैः ।
सीमन्तिनी-श्रवण-तर्पणकारि-गीतै-
    रभ्यागतै-रभिमुखं जनतासहस्रैः   ॥ ७७२ ॥

उपजातिः

कृत्वा प्रवेशं पुरि सर्वलोकैः,
    स्त्रीभिश्च पुम्भिः परिवन्द्यमानः ।

लूवार-पोलीय उपाश्रयेऽसौ,
सन्तस्थिवान् साकमशेषशिष्यैः ॥ ७७३ ॥
( युग्मम् )

वसन्ततिलका.

श्रीमान् प्रतापविजयोऽस्ति महारुजार्तः,
पन्न्यास-भागनिशमत्र भवन्तमेकम् ।
ऊंझापुरे स्मरति तत्त्वरया त्वमेही-
त्याबुद्ध्य वैद्युतदलेन तदागतेन ॥ ७७४ ॥

तत्कालमेव विजहार च वीरमादे-
ग्रामादसौ तमवलोकितुमुत्क-चेताः ।
तद्धोयणीनगरमागतवानिहाऽस्य,
चक्रे स कालमिति वैद्युतपत्रमागात् ॥ ७७५ ॥

उपजातिः

अतः परावृत्य पुनः समागात्,
स वीरमग्राम-मतिप्रशोचन् ।
हा हन्त ! कालो बलवत्तरोऽस्ति,
कमप्यसौ मुञ्चति नैव काले ॥ ७७६ ॥

परन्तु जीवो न हि नाशमेति,
सदैकरूपोऽस्त्यजरोऽमरश्च ।

नाशस्तु देहस्य विजायतेऽतो,
न शोचनीयः खलु कोऽपि विज्ञैः ॥ ७७७ ॥

इत्यादि वाक्यैर्हृदि धैर्यमाशु,
सम्प्राप्य तच्छोकमसौ मुमोच ।
अज्ञा इवाऽत्यन्तमपेत-मोहा,
विज्ञा न शोचन्ति चिरं कदापि ॥ ७७८ ॥

दिवं प्रयातस्य गुरोः प्रताप-
नाम्नो हि पन्यास-वरस्य हेतोः ।
उपाश्रये तत्र लुवारपोले,
श्रीराज-पूर्वे नगरे विशाले ॥ ७७९ ॥

आष्टाहिकोऽपूर्व-महामहो हि,
प्रारम्भि सङ्घेन गरिष्ठभावैः ।
अष्टोत्तर-स्नात्र-समर्चनाऽऽदि,
यथोक्तरीत्या समकारि तेन ॥ ७८० ॥
( युग्मम् )

पुष्पिताग्रा—

समवसरणनिर्मितिं सुदृश्या-
मुपगतदर्शक-लोचनाभिरामाम् ।
अतिशय-रमणीय-भूरि-चित्रा-
मकृत विशेष-महोत्सवे प्रशस्ये ॥ ७८१ ॥

उपजातिः

प्रभावनायां प्रतिवासरेषु,
समागतेभ्यः सकलाऽर्हतेभ्यः ।
सितोपलानां पुटकानि नालि-
केरांश्च भक्त्या परया वितेरुः ॥ ७८२ ॥

बह्व्या च भक्त्या जिन-पूजनानि,
नानोपचारैरभवन्नजस्रम् ।
स्वधर्मि वात्सल्यमपि ह्यनेकं,
चक्रुर्महेभ्याः क्रमवृद्ध-भावैः ॥ ७८३ ॥

तत्रोत्सवे तैरतिमानपूर्व-मामन्त्रितश्चैष चरित्रनेता ।
उपाश्रये तत्र विराजमानः, सारोपदेशैर्बहुभिश्च तेषाम् ॥७८४॥

दिवं प्रयातस्य गुरोर्गरिष्ठ-
शोकाऽपनोदं कृतवान् समेषाम् ।
पश्चाड्डेहलाऽभिधया प्रसिद्ध-
स्योपाश्रयस्याऽखिल-नेतृवर्गाः ॥ ७८५ ॥

अत्याग्रहेणैनमुपाश्रये स्वे,
डेहलनाम्ना नगरप्रसिद्धे ।
वितत्य चारूत्सवमानयन्त,
श्रीमन्तमत्यन्त सुकान्त-कीर्तिम् ॥ ७८६ ॥
( युग्मम् )

भुजङ्गप्रयातम्

[१९६९] नवाऽङ्क-ग्रहेन्दु-प्रमाणे सुवर्षे,
मधौ मासि कृष्णे दले सत्यकस्य ।
तिथौ स व्यहार्षीदितोऽशेषशिष्यै-
रदभ्र-प्रभावः क्षितावद्वितीयः ॥ ७८७ ॥

कलोलाऽभिधानं पुरं चाऽऽजगाम,
जनाऽऽरब्ध-चारूत्सवैः प्राऽविशच्च ।
पुराऽन्तर्मुनीन्दुर्ददौ शुद्ध-धर्मो-
पदेशं प्रशस्यं भवाऽऽब्धि-प्रतारम् ॥ ७८८ ॥

उपजातिः

तस्माद्विहृत्याऽऽगमच्चैव पान-
सरं पुरं पौरजनैश्च तत्र ।
प्रावेशि वेण्डाऽऽदिक-वाद्य-गीतै-
रदादसौ धीर-गिरोपदेशम् ॥ ७८९ ॥

इन्द्रवंशा

प्रस्थाय तस्मादपि सर्वसाधुभिः,
सत्रा स मित्रायित एष तेजसा ।
तद्भोयणीनाम पुरं समाययौ,
लोकांश्च भव्यान् प्रतिबोधमाददत् ॥ ७९० ॥

तत्राऽपि पौरैर्विविधोत्सवै-रसौ,
प्रावेश्यताऽत्यन्त-सुसज्जितं पुरम् ।
पीयूष-धारायित-देशनामसौ,
कामं प्रवर्षन् घन-साम्यतामगात् ॥ ७९१ ॥

सम्प्रस्थितश्चैष ततोऽपि वीरम-
ग्रामं समायात इहाऽपि नागराः ।
प्रावीविशन्नम्बर-पूर्ण-निस्वनै-
र्बैण्डाऽऽदि-नानाविध-वादनैः पुरम् ॥ ७९२ ॥

शिखरिणी.

सहाऽऽसन् सद्विद्वान् गुरु-विनय-कृद्देवविजयो,
गुरोः पादाऽम्भोज-भ्रमर-तुलितो राजविजयः ।
कियन्तश्चाऽन्येऽपि प्रचुर-मतिमन्तो मुनिवराः,
समे शान्ताऽऽकारा गुरुवचन सेवा-कृति-पराः ॥७९३॥

गीतिः

इह हि वीरमग्रामे, मुनि-श्रीदेवविजयमहाराजम् ।
श्रीमान् मुनिवर एष, प्रावेशयच्च योगाऽनुष्ठाने ॥ ७९४ ॥

आपातलिका

नव-रस-निधि-चन्द्र[१९६९]मिताऽब्दे,
राध-मासि धवले गुरुदीक्षा ।

पशुपति-जाया-तिथि-जाता,
कल्याणविजय साधुवरीया ॥ ७९५ ॥

उपजातिः

शिष्यश्च जातः स हि हर्षसूरे-
राचार्यवर्यस्य विदां वरस्य ।
सद्धीः सुधर्मोजमसीतिनामा,
श्रीवीरचन्द्रस्य सुतो झवेरी ॥ ७९६ ॥

अतिष्ठिपत्संस्कृत-पाठशालां,
तत्रैव धस्ते परमोत्सहिष्णुः ।
सत्साधु-साध्व्यादिक-पाठनाय,
पन्यास-नीत्याख्य-गुरूपदेशात् ॥ ७९७ ॥

इत्यादि-नाना-शुभकार्यमेष,
विधाय लोकान् प्रतिबोध्य भव्यान् ।
प्रस्थाय तस्मात् सह भूरिशिष्यै-
राजग्मिवान् माण्डलपत्तनं सः ॥ ७९८ ॥

पौरा अशेषा विपुलोत्सवेन,
समेत्य तस्याऽभिमुखं सहर्षाः ।
आनिन्यिरे स्वं पुरमादरेण,
प्रादायि तेनाऽपि च देशनाऽत्र ॥ ७९९ ॥

ततश्चलित्वा जगतीं पुनानः,
शङ्खेश्वरं तीर्थमुपेत्य धीमान् ।
तत्रत्य-यात्रां विधिवद्विधाय,
तद्राधनाऽऽह्वं पुरमाययाऽसौ ॥ ८०० ॥

वसन्ततिलका

आडम्बरेण महता पुरवासिलोका,
भेरी-मृदङ्ग-वरकाहल-वेण्डकाऽऽद्यैः ।
व्योमाऽनुवान-स्वणैरखिलैः सुवाद्यै-
रभ्यागतां सुजनतां बधिरामशेषाम् ॥ ८०१ ॥

कुर्वद्भि-रद्भुत-विशाल-तनु-श्रियाऽऽढ्य-
चन्द्राऽऽनना-मधुरे-सुस्वर गायनैश्च ।
श्राद्धोत्करैर्जयजयाऽऽरवमुच्चरद्भिः,
प्रावेशयन् गुरुवरं स्वपुरं सुशोभम् ॥ ८०२ ॥
( युग्मम् )

पन्न्यासवृन्द-मुकुटायित-नीतिनामा,
नेता किलाऽस्य चरितस्य महाप्रभावः ।
धर्मोपदेशममृतं परिषद्यमन्दं,
संवृष्य सर्वजनतामतृपन्नितान्तम् ॥ ८०३ ॥

तत्रत्य-संघ-बहुलाऽऽग्रहतः किलैष,
नन्दाऽङ्ग-रन्ध्र-शशि-सम्मित-विक्रमाऽब्दे (१९६९) ।

मासानुवास चतुरः शर-राम-संख्यैः,
पन्यास-भावविजय स्वगुरु-प्रमुख्यैः ॥८०४॥

श्रीबुद्धिसागर-मुनीश्वर-सूरि-शिष्य-
सूरिः समृदजितसागर-नामधेयः ।
आराधितुं च वरयोगममुष्य पार्श्वे,
सार्धं त्रिभिर्मुनिवरैरनवैस्तपिष्ठैः ॥ ८०५ ॥

मालिनी

जितविजय-मुनेः सच्छिष्य आगात् सुविद्वान्,
कनकविजयसूरिः श्रीमदाचार्यवर्यः ।
सममिह मुनिनैकेनाऽतिशान्ताऽऽत्मनैत-
च्चरितपतिसमीपं योग-संसाधनाय ॥८०६॥

गीतिः

पन्यास-श्रीप्रताप-विजय-शिष्य-मुनि-देव बुद्धिविजयौ ।
समनुष्ठातुं योगं, तावुपतस्थाते वुद्धिवरिष्ठौ ॥ ८०७ ॥

शार्दूलविक्रीडितम्

इत्थं सन्मुनिमण्डलीपरिवृतः श्रीमानसौ सद्गुरु-
र्व्याख्याने घन-गर्जित-प्रजयिना नादेन गोष्ठ्यां मुदा ।

सर्वाऽघौघ-विघातकं भगवतीसूत्रं पवित्रं महद्,
विस्पष्टं समशुश्रुवत् सुविदुषामग्रेसरस्तारकः ॥ ८०८ ॥

इन्द्रवज्रा—

तच्छ्रोतुमुत्कीभवतां सभायां,
स्त्रीपुंसकानां समुपस्थितिश्च ।
आसीदगण्या प्रतिवासरीया,
सद्भक्तिरागात्परमार्हतानाम् ॥ ८०९ ॥

सर्वैश्च पादोन-शतप्रमाणैः,
सत्साधु-साध्वीभिरुदारचेताः ।
तत्सौत्रिकाऽऽराधनरूपयोगं-
प्राचीकरत्सम्यगशेषमेषः ॥ ८१० ॥

यत्सूत्रयोगोद्वहनं यतीन्द्राः,
कुर्वन्त आसन् विधिवच्च जैनाः ।
तदेव सूत्रं सुगुरोश्च तस्याऽ-
भ्यासे समध्यैषत पूर्वकाले ॥ ८११ ॥

पुरातनी पद्धतिरित्थमासीत्,
परन्त्विदानीं कलिकालदोषात् ।
व्युच्छित्त रीतिः पठनस्य लोके,
प्रकुर्वते केवल-योगमात्रम् ॥ ८१२ ॥

योगोद्वहोऽयं ध्रुवमस्ति जन्तो-
र्ज्ञानाऽवरोधाऽखिल-कर्म-नाशे ।
हेतुस्तदेतस्य यथावदाग-
मनं विशुद्ध्या करण-त्रयस्य ॥ ८१३ ॥

कुर्वन्ति ये ते नियतं भवन्ति,
सज्ज्ञानवन्तः क्षिति-कीर्तिमन्तः ।
विशुद्ध-चित्ताः क्रमशः किलैवं,
भूत्वा लभन्ते पदमव्ययं हि ॥ ८१४ ॥
( युग्मम् )

योगं विधायैव भवन्ति तानि,
सूत्राणि संश्रावयितुं किलार्हाः ।
इत्येव शास्त्राणि समादिशन्ति,
जैनानि सर्वाणि मुनीनशेषान् ॥ ८१५ ॥

अनिर्जिताऽशेष-हृषीकका ये,
क्रमेण लोके शिथिलीभवन्तः ।
विनाऽपि योगोद्वहनं कियन्त-
स्तद्वाचयन्ति श्रमणा इदानीम् ॥ ८१६ ॥

कुबुद्धयस्ते जिनशास्त्र-मर्या-
दोत्थापनानारक-यातना हि ।

भोक्ष्यन्त एवाऽत्र कदाऽपि केऽपि,
न संशयीरन् परमाऽऽर्हतास्ते ॥ ८१७ ॥

श्रामण्य-शैथिल्यमियर्ति वृद्धिं,
यथा यथा सम्प्रति साधुमध्ये ।
तथा तथा वीर-विभूदितोऽय-
मनाद्यविच्छिन्न-विशुद्ध-धर्मः ॥ ८१८ ॥

लोलुप्यतेऽतो जगदेकधर्म-
त्राता चरित्राऽधिपतिः सुधर्मा ।
संवेगि-शैथिल्य-निराचिकीर्षु-
स्तदर्थमासीद्यतमान एषः ॥ ८१९ ॥
( युग्मम् )

मालिनी

तिलकविजयसाधुः श्रावणे मासि तस्मि-
न्नुपवसनमकार्षीन्मासमेकं महात्मा ।
तदितर-मुनिवर्गा अप्यनेकोपवासा-
नकृषत बहुरेवं तत्र जाता तपस्या ॥ ८२० ॥

तदधिक-महिमाऽर्थं वासराण्यष्ट याव-
दकुरुत रमणीयं सूत्सवं पौर संघः ।

प्रतिदिन-जिन-पूजा नैकधाऽत्यन्तरम्या,
सकल-सुजन-चित्ताऽसीम-मोद-प्रदात्री ॥८२१॥

वसन्ततिलका

पावापुरीय-रचना कमनीयरूपाऽ-
रीरच्यताऽखिल सुदर्शक-चित्तदश्या ।
स्तुत्या सतामतितरां नवकारसीह,
नैका कृता पुरजनैर्विविधप्रकारा ॥ ८२२ ॥

शार्दूलविक्रीडितम्

शान्तिस्नात्रसमर्चनं भगवतोऽष्टोभोच्च चारूत्सवैः,
नानादेह-कृताऽघ-राशिदहनं विघ्नौघ-विच्छेदकम् ।
सर्वाऽभीष्ट-फलप्रदं जनिमतां स्वर्गाऽपवर्गप्रदं,
सानन्दं निरुपद्रवं गुरुवराऽसीमाऽनुकम्पोदयात् ॥ ८२३ ॥
श्रीमद्देव-दयाऽऽरण्य-दानविजय-श्रीहर्ष-भक्तीनमून्,

पश्चाऽपि प्रगुणान् विशेष-विदुषः प्राऽधीत-नैकाऽऽगमान् ।
ग्रामेऽस्मिन् मुनिराडसौ भगवतीसूत्रीय-योगोद्वहान्,
चक्रे प्राज्ञतमः समस्तजनता-पोपूज्यमानोऽनिशम् ॥८२४॥

वसन्ततिलका

तेष्वेष देवविजयो मुनिराट् प्रताप-
पट्टयासिनः समभवद्वरधीः सुशिष्यः ।

श्रीमान् दयाविजय ईड्यवरस्य तस्य,
पन्न्यास-भावविजयस्य बभूव शिष्यः ॥८२५॥

श्रीदान-हर्षविजयौ सुधियौ विनीतौ,
प्रज्ञाऽऽकरावभवतां चरितस्य पत्युः ।
शिष्यौ च भक्तिविजयो वर-सिद्धिसूरे-
रन्तेसदो विनय-साधुवरस्य शिष्यः ॥ ८२६ ॥

वर्वर्ति सम्प्रति स एव हि भद्रसूरि-
राचार्यतामुपगतो जनताऽऽदृतश्च ।
भव्याञ्जनानतितरां प्रतिबोधयन् हि,
श्रीवीर-शासन-वने च विजर्हरीति ॥ ८२७ ॥

इत्थं ह्यनेक-शुभकृत्यमसौ वितन्व-
न्नुत्साहसम्पदमशेष-महाजनानाम् ।
संवर्धयन् हृदि सुखेन चरित्रनेता,
वर्षादिनान्यगमयत्सकलानि तत्र ॥ ८२८ ॥

लोकेष्वसाधुजनता परकीयवृद्धिं,
दृष्ट्वा स्वकीयहृदये परितातपीति ।
साधुर्जगद्धितरतः सततं परेषां,
तां वीक्ष्य सौवहृदये परिजर्हृषीति ॥ ८२९ ॥

एकोन्नतौ भवति यत्र परस्य हानि-
रीर्ष्याऽग्निराशु नियतं समुदेति तत्र ।

तेनैव नित्यनियमेन जगज्जनाना-
मत्रापि राधनपुरे घटना बभूव ॥ ८३० ॥

उपजातिः—

अक्षान्ति-वह्नौ परितः प्रदीप्ते,
स्वधर्म्मिणां तत्र विधर्मिणोऽपि ।
लब्धाऽवकाशाः सकला हसन्ति,
क्षिपन्ति सम्प्रेरणमाज्यमाशु ॥ ८३१ ॥

तमेष दौर्जन्य समिन्धनेन,
जाज्वल्यमानं शमताऽम्बुनैव ।
शान्तं प्रकर्तुं नितरां प्रयेते,
परीषहांस्तानसहिष्ट सर्वान् ॥ ८३२ ॥

आत्मार्थिनस्ते सकलाः खलिष्ठाः,
शान्तिं किलैतस्य विहन्तुकामाः ।
यथाबलं ते ह्ययतन्त तत्र,
प्रान्ते बभूवुर्वितथ-प्रयत्नाः ॥ ८३३ ॥

महीयसः केसरिणः पुरस्ताद्,
विकुण्ठिता शक्तिरिव द्विपानाम् ।
तार्क्ष्यस्य वाऽग्रे पवनाऽशनाना-
मग्रेऽस्य तेषां द्विषतां बभूव ॥ ८३४ ॥

शिखरिणी

असावासीत्तस्मिञ्छर-दहन-संख्यैर्मुनिवरै-
श्चतुर्मास्यां श्रीमानमित-महिमा राधनपुरे ।
तदा वीरः सूरिर्जलधि-मुनिभिः साकमवसद्,
द्विपन्नासीद्गाढं चरित-पतिमेनं खलतया ॥८३५॥

वंशस्थम्

व्रजन्तमालोक्य पुरे मतङ्गजं,
भषन्ति कामं शुनकाः समन्ततः ।
बिभेति किञ्चिन्न हि तेन वारणो,
न कोप आयाति च तस्य मानसे ॥ ८३६ ॥

उपजातिः-

स्वाभाविकी रीतिरिति प्रजानन्,
नेता चरित्रस्य वचोभिरेषाम् ।
कुप्यन्न तेभ्यो न च बिभ्यदेष,
शान्त्यैव कार्यं सकलं ससाध ॥८३७॥

शिखरिणी

नभः-सप्ताङ्कोर्वी-प्रमित-शुभ[१८७०]वर्षे मुनिवरः,
सहोमासे शुक्ले कुसुम शरतिथ्यामतिमहैः ।

तदर्ह–श्रीदेव–प्रविनयि–दया–दानविजय–
प्रधी–श्रीहर्ष–श्रीसुगुणि–मुनि–भक्तिभ्य उचितम् ॥८३८॥

प्रदायैभ्यो विद्भ्यो गणिपदमुदारोज्ज्वल–यशाः,
पुना राकातिथ्यां सहसि सितपक्षे गुरुवरः ।
अमीभ्यः पञ्चभ्योऽददत स हि पन्यासपदवीं,
व्यधादष्टाऽह्नीनं परम–महमत्रत्यजनता ॥ ८३९ ॥
(युग्मम्)

भद्रिका

समवसरणमत्र निर्ममा–चतिशय–कमनीयतामितम् ।
उपगत–जनता–मनोहरं, भव–तति–कृत-पापहारकम् ॥८४०॥

उपजातिः––

अष्टोत्तर स्नात्रसमर्चनादि,
बभूव नैकं शुभकार्यमत्र ।
स्वधर्मिवात्सल्यमभूदनेकं,
पदप्रदाने जनताकृतं हि ॥ ८४१ ॥

सुश्रावकाणां सदनं सहस्रं,
पूर्वं किलाऽऽसीदिह राधनाऽऽह्वे ।
पुरेऽधुना तत्कलिकालदोषान्,
न्यूनत्वमासं ह्युपलक्ष्यते हि ॥ ८४२ ॥

अद्याऽपि चैत्यानि समुल्लसन्ति,
भूताऽक्षिदन्नानि विभासुराणि ।
तारापथ श्लेषण कारकाणि,
प्राच्यानि तस्मिन्नगरे महान्ति ॥ ८४३ ॥

मसालियोपाख्यमहाजना ये,
वसन्ति तस्यां पुरि पूर्वमेते ।
महासमृद्धा जनताऽग्र-गण्या,
आसन्निदानीमपचीयमानाः ॥ ८४४ ॥

कृत-प्रयाणस्तत एतकस्य,
नेता चरित्रस्य महासुविद्वान् ।
शङ्खेश्वर-श्रीप्रभु-पार्श्वनाथ-
यात्रां व्यधात् साकमशेष-शिष्यैः ॥ ८४५ ॥

विहृत्य तस्मात् समुपाजगाम,
शत्रुञ्जयं तीर्थविशेषमेषः ।
श्रीमन्तमेनं प्रथमं जिनेशं,
ददर्श भक्त्या परया नुनात्र ॥ ८४६ ॥

इन्द्रवंशा

प्रस्थाय तस्मात् स हि वल्लभीपुरं,
सम्प्राप सर्वैः सह शिष्यमण्डलैः ।

स..ास्थिवांश्चाऽत्र कियत्स वासरं,
श्रीसंघ-वह्वाग्रहतो मुनीश्वरः ॥ ८४७ ॥

उपजातिः

पुराऽत्र देवर्द्धिगणी सुविद्वान्,
क्षमेतिपूर्वक्षमणाऽऽरब्धसूत्रम् ।
संवाच्य कल्पादिकसूत्रमेष,
प्रारब्धवान् वाचयितुं सभायाम् ॥ ८४८ ॥

शारीरिकस्वास्थ्यचिकीरमुष्मिन्,
भैषज्यहेतोः समयं कियन्तम् ।
समस्थिताऽयं चरितस्य नेता,
स्वास्थ्ये च याते विजहार तस्मात् ॥ ८४९ ॥

उपाययौ वीरमगामनाम,
पुरं महात्मा मुनिराज एषः ।
समस्त सङ्घीयमहामहेन,
प्राविक्षदेतन्नगराऽन्तरीज्यः ॥ ८५० ॥

धर्मोपदेशं परिषद्यनल्पं,
द्राक्षाऽऽदिपाकोपमया गिराऽसौ ।
प्रदाय सर्वान् सुजनान् सुवक्ता,
नितान्तमातीवृपदार्हतीयान् ॥ ८५१ ॥

अभ्यर्थयामास ततः समस्त-
संघो गुरुं तारकमद्वितीयम् ।
प्रावृष्यवस्थानमिहैव कर्तुं,
प्रौढप्रतापं करुणानिधानम् ॥ ८५२ ॥

लाभस्य बाहुल्यमुदीक्ष्य तत्र,
तदाग्रहं सादरमग्रहीत्सः ।
मध्ये चतुर्मासमसौ विशेष-
तत्त्वाऽववोधं समजिग्रहत्तान् ॥ ८५३ ॥

मालिनी

तिलक-विजय-धीमच्चन्दनाऽऽख्योदयाऽऽख्याः,
कुशमुखमति-कल्याणाऽभिधानः सुविद्वान् ।
प्रमुख-बहुविनेया गौरवाऽङ्घ्र्यब्ज-भृङ्गा,
गुरुवचन-सुसेवा-तत्पराः पार्श्व आसन् ॥८५४॥

उपजातिः

पञ्चासक-ग्रन्थमशेषतत्त्व-
वेत्ता सुवक्ता सदसद्विवेक्ता ।
व्याख्यातुमारब्ध समस्त-जैनाः,
संश्रोतुमुत्कास्तदुपेतवन्तः ॥ ८५५ ॥

अथैकदा संसदि सर्वलोक-
समक्षमाख्यद्गुरुराज एवम् ।

यत्सिद्धशैलोपरि राजकीयः,
करो नियुक्तः प्रतिवत्सरीयः ॥ ८५६ ॥

मुद्रासहस्रं तिथिदस्रमेता-
वदाय आयाति न यात्रिकेभ्यः ।
अतश्च सर्वैः खलु भारतीयैः,
संगृह्य तावन्ति च रौप्यकाणि ॥ ८५७ ॥

तत्राऽमदावादपुरे विशाले,
चाऽऽनन्दकल्याणिक-पीठिकायाम् ।
सम्प्रेपणीयानि यदेष संघो,
दधाति लोकोत्तरदानशक्तिम् ॥ ८५८ ॥
( त्रिभिर्विशेषकम् )

अलङ्घ्यवाचः सुगुरो-रमुष्य,
सारोपदेशादरमेव संघः ।
चित्वा च मुद्राऽयुतमाशु तत्र,
संप्रेष्य चौदार्यमदीदृशत्सः ॥ ८५९ ॥

शार्दूलविक्रीडितम्

इत्थं वीरम गाम-नामनगरे ख्याते महीमण्डले,
व्योमाऽश्व-ग्रह-यामिनीपति-मिते सम्वत्सरे वैक्रमे । (१०७०)
सानन्दं प्रतिबोधयन्नहरहः श्राद्धांश्च सुश्राविकाः,
व्यत्यैन्मासचतुष्टयं मुनिवरः श्रीमानसौ सद्गुरुः ॥ ८६० ॥

धर्मोपासनमुच्चकैः कतिविधं श्राद्धाश्च सुश्राविकाः,
चक्रुः केचन संललुश्च नियमानत्यादरादत्यजन् ।
यावज्जीवमभक्ष्य-कन्द-लशुनाऽऽदीनां च वल्भामपि,
सावद्यं व्यसनं समस्तमपरेऽत्याक्षुः पर-स्त्रीगमम् ॥८६१॥

सम्प्रस्थाय ततः समस्तमुनिभिः सत्रा जिताऽऽत्मा सकः,
प्रापत्पानसरं सुतीर्थ-मनघो यात्रामकार्षीन्मुदा ।
भक्त्या तीर्थपतिं प्रणम्य सुचिरं संस्तुत्य पद्यैर्नवै-
र्भव्यांस्तत्र बहूपकृत्य विहरन्नागात्पुरं चेडरम् ॥ ८६२ ॥

तत्रत्याः सुजनाः समे गुरुवरानभ्यागतानादरा-
दानिन्युः पुर-मुत्सवेन महता वेण्डाऽऽदितूर्याऽऽरवैः ।
श्रीमान् सद्गुरुरप्यसौ समुचितां रम्यामघौघाऽपहां ।
प्रादाच्चाऽमृत-देशनामतितरां संसार-दुःखच्छिदाम् ॥८६३॥

उपगीतिः

वर्वर्ति चैतन्नगरं विशालं,
सद्भिः प्रशस्यं परमार्द्धिमच्च ।
शैलोपरिष्टादिह चैत्यमस्ति,
श्रीमज्जिनेशस्य विशेषमुच्चैः ॥ ८६४ ॥

वाप्यस्तडाका मधुराऽम्बुकूपा,
अद्याऽपि नानोपवनानि सन्ति ।

तेनाऽनुमानं क्रियते जनानां,
वासोऽपि तत्रैव पुराऽस्ति चेति ॥ ८६५ ॥

अगादितः केशरियाजितीर्थ-
यात्राचिकीः श्रीमुनिराजवर्यः ।
विलोक्य तत्राऽनुपमां जिनेश-
सन्मूर्तिमत्यन्तमुदं बभार ॥ ८६६ ॥

औपच्छन्दसिकम्—

चरित-पतिरसावुदारकीर्तिः,
ससुखमितः प्रविहृत्य भूरिशिष्यैः ।
उदयपुरमियाय राजधानी-
मतिशय-विधूत-(यधूतस)काममोह-रागः ॥८६७॥

वसन्ततिलका

पन्यास-दानविजयः सुगणी विपश्चित्,
पन्यास-शान्तिविजयः सुमतिश्च मुक्तिः ।
श्रीमांश्च राजविजयो बहु-तीक्ष्ण-बुद्धिः,
प्रज्ञाऽऽकरः सविजयस्तिलको मुनिश्च ॥ ८६८ ॥

सच्छेमुषीक-मुनिचन्दन-नामधेयः,
श्रीमांस्तपस्वि-जनताऽग्य उदारबुद्धिः ।

कल्याणनामविबुध-प्रमुखाः सुशिष्या,
आसन्नमुष्य सुगुरोरनुगाः सुभक्ताः ॥ ८६९ ॥

इत्थं सुविद्य-कति-शिष्यदलेन जुष्ट-
श्चन्द्राऽश्व-नन्द-विधु[१९७१]-सम्मित-विक्रमाऽब्दे ।
मार्गे सितेतरदले नवमीसुतिथ्या-
मत्युत्सवेन नगरीं प्रविवेश चैपः ॥ ८७० ॥

उपजातिः

सा मेदपाटीय-सुराजधानी,
पुराऽस्ति तस्मिन् खलु चित्रकूटे ।
मौहम्मदाऽकब्बरबादशाह,
आगत्य यद्वैतदरुद्ध दुर्गम् ॥ ८७१ ॥

तत्रत्यराणोदयसिंहनामा,
विजित्य तद्वैनमकब्बराऽऽख्यम् ।
निवर्तयामास तमाशु देशात्,
परैरजय्यो जगदेकवीरः ॥ ८७२ ॥

पुनः पुनश्चाऽऽक्रमणं विधाय,
नैकोऽपि मौहम्मदराज एत्य ।
प्रान्ते ह्यमाङ्क्षीत्स हि दुर्गमेतत्,
सैन्यैरसंख्यै रण-धीर-वीरैः ॥ ८७३ ॥

रणे च तं जेतुमशक्यमेष,
राणोदयः सिंह उदारबुद्धिः ।
स्वं त्रातुकामो रणतः पलाय्य,
स्वकीय-नाम्ना नगरं विशालम्    ॥ ८७४ ॥

निर्माय तत्राऽकृत राजधानीं,
पुरं तदद्याप्युदयाऽऽद्यमेतत् ।
लोकेऽद्वितीयं विचकास्ति रम्यं,
यशो-गरिष्ठं भुवि विद्यतेऽस्य    ॥ ८७५ ॥
( युग्मम् )

तदुत्तरं श्रीरणवीर-राणा-
प्रतापसिंहो निजदोर्बलेन ।
तत्राऽपि दुर्गं निजसाच्चकार,
भामाऽऽख्यशाहस्य बलेन भूयः    ॥ ८७६ ॥

तद्राजधान्यां समभूदहल्या-
नागरी सुराज्ञी जगदेकवीरा ।
सतीत्व-वीरत्व-मतल्लिकाऽसा-
वादर्शभूता जगदर्चनीया    ॥ ८७७ ॥

नैके च भूपाः खलु भारतीयाः,
सिषेविरेऽकब्बरबादशाहम् ।
स्त्रीरत्नमस्मै समदुस्त्वयं तु,
नाऽदात्सुतां नो नमशिश्रियच्च    ॥ ८७८ ॥

चरित्रनेता निजभूरिशिष्यैः,
सहैव तस्थाविह मासमेकम् ।
विलुम्पकानां महदेव तत्र,
प्राबल्यमुच्चैर्नगरे किलाऽस्ति ॥ ८७९ ॥

देशे ह्यमुष्मिन् खलु मेदपादे(टे),
कुमारपालाऽऽदिनरेन्द्रवर्यैः ।
प्रायः प्रतिग्राममतीव रम्यं,
वेविद्यते स्थापितचैत्यमुच्चैः ॥ ८८० ॥

आकस्मिकोऽस्मिन्नगरे गरीयान्,
ज्वरो बभूवान्मुनिचन्दनस्य ।
सुश्रावका नैक-गरिष्ठ-वैद्यान्,
आनीय चक्रुर्विविधोपचारान् ॥ ८८१ ॥

आयुःक्षयत्वाद्दिवसे द्वितीये,
सद्ध्यान-लीनः परमेष्ठि-मन्त्रान् ।
स्मरन्नजस्रं परिहाय कायं,
स्वर्गं प्रवासी समभूदकाले ॥ ८८२ ॥

वसन्ततिलका।

आसीदसौ चरितनायकशिष्यरत्नं,
सम्यक्-स्वकीय-परकीय सुशास्त्र-पाठी ।
गुर्वङ्घ्रिपद्म-मकरन्द-मिलिन्दभूतो,
वैनीत्यवानखिलसद्गुणता-निधानम् ॥ ८८३ ॥

हा ! हन्त ! निर्दययमो जगदद्वितीय-
तीर्थङ्करान् सुबलिनोऽखिलचक्रिणोऽपि ।
नोज्झाञ्चकार न समुज्झति नोज्झिताऽग्रे,
तस्मादमुं सुमुनिरत्नमपाऽहरद्धि ॥ ८८४ ॥

वर्षद्वयं निरतिचारं सुसंयमं सोऽ-
त्यन्तम्प्रपाल्य गतवान् गतिमुत्तमां वै ।
पुण्याऽर्जनेन समभूत्सफलं तदीयं,
मानुष्यजन्म बहुदुर्लभमत्र लोके ॥ ८८५ ॥

रम्यं विमानमचिरं विरचय्य सर्वे
तस्मिन्निधाय शवमुत्तमभाववन्तः ।
आडम्बरेण महता बहुवाद्यनादै-
र्नीत्वा श्मशानमदहन् विधिवत्सशोकाः ॥८८६॥

उपजातिः

अथैतकस्मान्नगराद्विहृत्य, जोजुष्यमाणः सकलैश्च शिष्यैः ।
स धन्यदेशे विजहार सत्य-धर्मोपदेशं जनतासु कुर्वन् ॥८८७॥

आर्या

हित्वा मन्दिरपूजां, स्थानकवासितामुपगता बहुशः ।
ढुण्ढकीयोपदेशा-च्छ्रावं श्रावमबुधाः श्राद्धाः ॥ ८८८ ॥

गीतिः

अबुधांस्तानपि जीवान्, प्रतिबोध्य शुद्धधर्माऽऽश्रितानकरोत् ।
एतद्गुरूपदेशात्, लेभिरे तेऽपि सम्यक्त्वाऽऽधिक्यम् ॥८८९॥

वैश्वदेवी

शुद्धाऽर्हद्धर्माणां विशेषोपदेशैः,
श्राद्धानां चित्ते धर्मदार्ढ्यं स इत्थम् ।
सञ्चक्राणः श्रीनीतिनामा महात्मा,
पन्न्यासोपाधिर्मेदपाटाऽऽख्यदेशे ॥ ८९० ॥

प्रस्थायैतस्मात् सार्धमेष स्वशिष्यै-
र्विश्वेषां त्राताऽऽगाद्धुआणापुरीं सः ।
श्रद्धालुश्राद्धैः सर्ववाद्यैर्नदद्भिः,
प्रावेशि श्रीमान् सद्गुरुर्भूरिलोकैः ॥ ८९१ ॥

पापेभ्यो लोकांस्त्रातुकामो दयालुः,
श्राद्धानां धर्मान् व्याजहारैष शुद्धान् ।
सर्वे सभ्यास्तान् सादरं दत्त-चित्ताः,
श्रुत्वा सम्यक्त्वे दार्ढ्यमापुः प्रकामम् ॥८९२॥

उपजातिः

ततो विहृत्यैष समाजगाम,
श्रीएकलिङ्गाऽभिधरम्यतीर्थम् ।

प्रस्थाय तस्मादपि देलवाडां,
तीर्थेशमालोक्य ययौ प्रमोदम् ॥ ८९३ ॥

धासापुरीमेष ततः समेत्य,
तत्पौरलोकैः कृत-सत्कृतिं सः ।
प्रपद्य तत्राऽऽर्हत-शुद्ध-धर्मान्,
सुधोद्गिरा चारुगिराऽऽदिदेश ॥ ८९४ ॥

ततो विहृत्याऽऽगतवान् क्रमेण,
स मावलीनामपुरं मुनीन्दुः ।
सच्चक्रुरेतं सकलाश्च पौराः,
सद्देशनामेष ददौ च तत्र ॥ ८९५ ॥

इतश्चलित्वा सणवाडनाम्नी-
माजग्मिवानेष भुवं पुनानः ।
तत्राऽधिकाऽऽरब्ध-महोत्सवेन,
पुरं महीयान् प्रविवेश रम्यम् ॥ ८९६ ॥

प्रौढप्रतापो मुनिराज एष,
श्रीवीर-सम्भाषित-शुद्धधर्मम् ।
व्याहृत्य गोष्ठ्यां भवसिन्धु-पोतं,
लोकानशेषान् बहुधोपचक्रे ॥ ८९७ ॥

ततः करेडामुपयात एष,
सुसत्कृतः श्राद्धजनैरदभ्रम् ।

धर्मोपदेशाऽमृत–भूरिवर्षा,
विधाय सर्वान् सुजनानतर्पीत् ॥ ८९८ ॥

कपासणाऽऽख्यं पुरमाजगन्वान्,
सुश्रावकाऽऽरब्धमहामहेन ।
पुरं प्रविष्टो मुनिराजवर्यः,
प्रदत्तवानत्र महोपदेशम् ॥ ८९९ ॥

जास्माऽभिधानं नगरं ततोऽसा–
वासेदिवान् पौरजनैश्च तत्र ।
सम्मानितोऽमोघसुदेशनां स,
दत्त्वा च लोकान्मुडयाश्चकार ॥ ९०० ॥

प्रहर्षिणी

आकोलानगरमुपेयिवानमुष्माद्,
अत्रत्याः सकल–महाजनास्तमुच्चैः ।
सच्चक्रुर्गुरुवरमेषकोऽतिरम्यां,
व्याचष्टाऽमृतमय–देशनामुदाराम् ॥ ९०१ ॥

ईटाली–मुपगतवांस्ततः प्रयातो,
बेण्डाऽऽदि–प्रमुख समस्त–वाद्यनादैः ।
आनिन्युः स्वपुरममुं समस्तपौराः,
प्रादाच्छ्री–गुरुरपि देशनां सभायाम् ॥ ९०२ ॥

मौक्तिकमाला

विश्वजनीनः प्रथित–सुविधः,
संसृति–वार्धौ दृढतर–पोतः ।
भीडरमापद् गुरुरय–भीव्यः,
पावनमूर्तिः प्रतिहत–मोहः   ॥ १०३ ॥

पृथ्वी

विरच्य रुचिरोत्सवं सकल–पौर–लोका अमुं,
समेत्य गुरुसम्मुखं निजपुरं समानीनयन् ।
अपीप्यदयमप्यलं सुजनताश्च धर्माऽमृतं,
ह्यघौघ-परिहारकं भव-समुद्र-निस्तारकम् ॥१०४॥

इन्द्रवंशा

प्रस्थाय तस्माद्गुरुसादडीमसौ,
सङ्गमिवान् नागर–सर्व–सज्जनैः ।
प्रावेशि सत्कृत्य पुरं महामहै–
रादायि तेनाऽपि च धर्म–देशना   ॥ १०५ ॥

आगादथाऽसौ लघुसादडीं पुरीं,
तत्राऽखिला गौरव–भक्ति–हेतवे ।
नानद्यमानाऽखिल–तूर्य–निस्वनैः,
प्रावीविशन्नात्मपुरं महोत्सवैः   ॥ १०६ ॥

कामं समग्रा गुरु-वक्त्र-चन्द्रमः-
शश्वत्क्षरद्-धर्मकथाऽमृतं जनाः ।
सम्पीय हर्षं दधिरे महत्तमं,
स्वीये हृदब्जेऽवचनीयमुत्तमम् ॥ १०७ ॥

भुजङ्गप्रयातम्

इतश्चित्रकूटं पुरं सञ्जगाम,
मुनीन्दुः पुनानो धरित्रीं क्रमाऽब्जैः ।
जनैः सत्कृतोऽसौ पुरं सम्प्रविश्य,
प्रचक्रे च धर्मोपदेशं प्रशस्यम् ॥ १०८ ॥

उपजातिः

प्रपेदिवान् सिंहपुरं च तत्र,
श्रीसंघसत्कारविशेषमाप्तः ।
प्राबूबुधद्भावुक-सर्वलोकं,
गूढानि तत्त्वानि च सूपदेशैः ॥ १०९ ॥

डिण्डोलिकाख्यां नगरीमितोऽसौ,
सम्प्राप्य लोकैरतिमानपूर्वम् ।
प्रवेशितश्चैष वहूपचक्रे,
पौरांश्च रम्यैः परमोपदेशैः ॥ ११० ॥

स भाटियावाडु-पुरं समेत्य,
स्वीकृत्य तत्रत्यजनप्रभक्तिम् ।

धर्मं विशुद्धं परमार्हतं हि,
व्याख्यातवान् संसदि सद्यतीन्द्रः ॥ ९११ ॥

भुजङ्गप्रयातम्

ततः काकरौलीं पुरीमाससाद,
महाऽऽडम्बरेणाऽविशत्तत्पुराऽन्तः ।
सभायां महत्यां गुरुः सन्मुनीन्द्रो,
ददावार्हतं शुद्ध–धर्मोपदेशम् ॥ ८१२ ॥

वैतालीयम्

राजनगरमागमत्ततो,
जनता–रचित–महोत्सवैः पुरम् ।
प्रविश्य ददिवान् सुदेशनां,
मुनिराजो भवभीति–हारिणीम् ॥ ९१३ ॥

केलवाऽभिधानकं पुरं,
विहरन् क्रमशः प्रत्यगादितः ।
सुजनैरतिसत्कृतो गुरु–
र्भव–दुःखहरीं देशनामदात् ॥ ९१४ ॥

गडवोडपुरीमुपागमत्,
पुरजन–विहित–महामहेन सः ।
प्रविवेश पुरं ततो ददौ,
श्रुति–सुखदां रमणीय–देशनाम् ॥ ९१५ ॥

भुजङ्गप्रयातम्

ततो शीलवाणाऽभिधाऽऽदिष्वनेक-
पुरेष्वेष धीमान् प्रचक्रे विहारम् ।
प्रतिग्राममत्यन्त सत्कारमश्नन्,
भृशं सन्ददानः सुधर्मोपदेशम् ॥ ११६ ॥

कियद्ग्राम्यवृद्धा गताः षष्टि-सप्त-
तिवर्षाणि संवेगि-साधून् न कर्हि ।
अपश्यन्नतस्ते ह्यभावं तदीयं,
विनिश्चित्य लुम्पाकमेव श्रयन्ते ॥ ११७ ॥

वसन्ततिलका

तानप्यसौ चरितनायक उग्रतेजा,
धर्मं विशुद्धमनघं गुरु-दैवतं च ।
एतत्त्रितत्त्वमसकृद्विविधोपदेशैः,
प्राबूबुधद् गुरुवरोऽखिलजैनमान्यः ॥ ११८ ॥

एतद्गुरोरमल-फुल्लमुखारविन्दात्,
सद्देव-धर्म-सुगुरूनवगत्य सद्यः ।
हित्वा विलुम्पकमतं बहवो बभूवुः,
श्रीमज्जिनेश शुभबिम्ब-समर्चकास्ते ॥११९॥

उपगीतिः

उदयपुर-लघुसादडी-कपासणाऽऽकोलानगरीषु ।
प्रतिमा-पूजक-जैना, निवसन्ति च भावुका लोकाः ॥१२०॥

वसन्तीतर–नगरेषु, सर्वे स्थानकवासिन एव ।
अस्ति च तेष्वपि पूर्षु, वर्णनीयतमं वहु–मन्यम् ॥९२१॥

सुषमां बिभ्रच्चैत्यं, प्रतिदिनमर्चनाऽऽदिकं तस्य ।
राणोदयपुरपालो देवलेन कारयते सम्यक् ॥ ९२२ ॥
( युग्मम् )

गीतिः

उदयपुरे वरनगरेऽ–धुनापि द्वात्रिंशज्जिनभवनानि ।
उपाश्रया अपि नैके, वर्तन्ते पुस्तकाऽऽलयोऽपि महान् ॥९२३॥

देलवाडानगरेऽपि, विलसन्ति गगन–स्पृशानि चैत्यानि ।
विभासुराणि चत्वारि, समाकृषन्ति हि पश्यतां हृदयानि ॥९२४॥

आर्यागीतिः

सत्यविजय–पन्न्यासः,
शिथिल संवेगि–भेद–चिकीरुदयपुरे ।
आराधनाय कृतवान्,
अष्टम–तपांसि च शासनदेवतायाः ॥ ९२५ ॥

तुष्टा तेन सुरी सा,
प्रत्यक्षीभूय तमुक्तवती चैवम् ।
सम्प्रत्येष विभागः,
खदिर पूर्णोपरक्ताऽम्बर–सन्धृत्या ॥ ९२६ ॥

गीतिः

क्रियतां निशीथचूर्ण्या, कत्थे वा चुन्ने वेति पाठेन ।
इत्यादिश्य च देवी, तत्कालमेव तिरोहिता जाता ॥१२७॥
( युग्मम् )

मालिनी

तदनु खदिर-चूर्णै रक्तचैलं महीयान्,
शिथिल-यतिजनेभ्यो भेदकं सन्मुनीनाम् ।
अकृत गुरुवरस्तद्वासरादेव सर्वे,
दधुरिह मुनिवर्यास्तादृशं चोत्तरीयम् ॥ १२८ ॥

उपजातिः

तस्यैव पट्टेऽभ्युदितोऽसकौ यत्,
चरित्रनेताऽपि परम्परातः ।
अतश्च तद्देशसमुद्दिधीर्षा,
कथं न दध्यादतियोग्यतावान् ॥ १२९ ॥

श्रीमज्जगच्चन्द्र युगप्रधानाऽऽ-
चार्यस्य लोकोत्तर-कीर्तिभाजः ।
तद्देलवाडा-पुरि गच्छनेतुः,
शराऽष्ट-नेत्रेन्दु-मिते सुवर्षे ॥ १३० ॥

मालिनी

उदयपुर-महीपालो हि राणाऽभिधानः,
समदित तपगच्छोपाधिमेतस्य जिष्णोः ।
यत इह दिवसाच्छ्री-मत्तपोगच्छनेता,
ह्यभवदयमवन्यां सर्वतन्त्र-स्वतन्त्रः ॥ ९३१ ॥

भुजङ्गप्रयातम्-

इयं देलवाडोदयाऽऽदेः पुराच्च,
किल क्रोश-तुर्यांऽश-दूरे लसन्ती ।
महाधूम-यानीय-मार्गोपरिष्टात्,
सुरम्या प्रसिद्धा पुरी वर्त्ततीति ॥ ९३२ ॥

उपजातिः

कपासणाऽऽख्ये नगरेऽतिभव्यौ,
जिनालयौ द्वौ सुषमां दधाते ।
कानूडपुर्यामपि भासमाना,
चैत्यत्रयी सम्प्रति वर्तते हि ॥ ९३३ ॥

वैतालीयम्

विपुले लघुसादडीपुरे, भव्ये स्तो जिनमन्दिरे वरे ।
नागोरी-चन्दनाऽऽदिको, मल्लो निवसति धर्मरागवान् ॥९३४॥
सन्ति च सर्वे वशम्वदा, लुम्पाका अपि चाऽस्य धीमतः ।
नींवाडापत्तने महा-चैत्यानां त्रितयी विशोभते ॥ ९३५ ॥

उपजातिः

तच्चित्रकूटाऽभिधपत्तनाऽन्त-
श्चैत्यद्वयं सम्प्रति भाति भव्यम् ।
तद्दुर्गमध्येऽप्यतिभव्यमस्ति,
चैत्यत्रिकं तीर्थकृतामिदानीम् ॥ १३६ ॥

मालिनी

निरुपममिह दुर्गं दुर्भिदं शत्रुवर्गै-
र्दृढतरमतिशोभं वर्तते दर्शनीयम् ।
प्रथम-समय-वार्तावेदिनां वर्णनीयं,
वसतिरपि जनानां जैन-जैनेतराणाम् ॥ १३७ ॥

इह हि विजय-कीर्ति-स्तम्भ आरोपितोऽस्ति,
प्रथित-परम-वीराऽग्रेसराणां सुपुंसाम् ।
ललिततर-सुदुर्गाऽधस्तले वर्तते पू-
र्विपणिरपि विशाला ष्टेशनश्चाऽस्ति रम्यः ॥१३८॥

स्वागता

तत्र राजनगरेऽपि च चैत्यं,
पौरमेकमपरं गढमध्ये ।
भामशाह-परिकारित युग्मं,
विद्यते परमसुन्दरमुच्चैः ॥ १३९ ॥

मन्दिरं प्रतिपुरं परमेकं,
चाऽस्ति भूरि-गिरि-शोभित-देशः ।
मानवाश्च सरला अबुधत्वात्,
सन्ति धर्म-दृढता-परिमुक्ताः ॥ ९४० ॥

उपजातिः

अतश्च शास्त्राऽध्ययनाय तेषां,
विद्यालयाऽऽवश्यकताऽस्ति तत्र ।
तदर्थमासीद्यतमान एष,
परन्तु देहे चरितस्य नेतुः ॥ ९४१ ॥

अस्वास्थ्यमाकस्मिकमाजगाम,
महत्तरं तेन च हेतुनाऽसौ ।
तद्दैशिकं दीर्घविहारमाशु,
विमुच्य चाऽऽयिष्ट सदेसुरीं ताम् ॥ ९४२ ॥
( युग्मम् )

समभ्युपेतं तमशेष-पौराः,
श्रद्धालवस्ते महतोत्सवेन ।
सम्मान्य निन्युः पुरमेषकोऽदाद्,
धर्मोपदेशं सम-शास्त्र-सारम् ॥ ९४३ ॥

प्रस्थाय तस्मादयमैच्च धाणे-
रावं पुरं तत्र समस्तलोकैः ।

सुसत्कृतः सर्वजनान् प्रबोध्य,
स सादडीं सन्नगरीं समागात् ॥ १४४ ॥

महामहिम्नां समुपागताना-
मेषां गुरूणां नगर-प्रवेशे ।
अपूर्वमत्यन्तमहामहं ते,
वितेनिरे पौरजनाः प्रहर्षात् ॥ १४५ ॥

अपाययच्चैष गुरुः समस्तं,
श्रीसङ्घमोजस्वितरं यथेच्छम् ।
व्याख्यान-पीयूषरसं ह्यपार-
संसार-कान्तार-कुठारभूतम् ॥ १४६ ॥
( तृषाविभेदम् )

वैतालीयम्

वरकाणामाययौ ततो,
जिनवरमेष विलोक्य भक्तितः ।
प्रणनाम मुहुर्मुहुः प्रभुं,
कृतकृत्यः समजायताऽसकौ ॥ १४७ ॥

ततः समागात् सह भूरिशिष्यैः,
खीमेलनाम्नीं नगरीं क्रमात्सः ।
श्राद्धा महाऽऽडम्बरतः समेतं,
प्रावीविशन्नात्मपुराऽन्तरेनम् ॥ १४८ ॥

उदार-वाणी रुचिराः सुधर्म्याः,
संसार-दावाऽनल नीर-धाराः ।
मुखाऽम्बुजादस्य गुरोर्निशम्य,
सर्वे च सभ्याः सुहिता बभूवुः ॥ ९४९ ॥

जावालसंघेन चतुःशतेन,
चैत्रे सिते विश्वतिथौ सहैपः ।
समाययावर्बुदशैलराजं,
चरित्रनेता सह सर्वशिष्यैः ॥ ९५० ॥

श्रीमांस्तदाऽऽसीद्विजयाऽऽदि-नेमि-
सूरीश्वराऽऽचार्यवरोऽपि तत्र ।
सहाऽमुनाऽष्टौ दिवसानि नित्यं,
सज्ज्ञानगोष्ठीमसकौ प्रचक्रे ॥ ९५१ ॥

सत्साधु संस्थाविषये विशेष-
विचारणा नैकविधा बभूव ।
सुश्रावकाणामपि वृद्धये तौ,
प्रचक्रतुर्नैकविचारमत्र ॥ ९५२ ॥

भुजङ्गप्रयातम्

ततो धन्वदेशे विहर्तुं मनीषी,
प्रतस्थे सशिष्यो महान् नेमिसूरिः ।

अयं चाऽपि नेता चरित्रस्य धीमान्,
तनु-स्वास्थ्यमाप्तुं ततः सत्वरं हि ॥ ९५३ ॥

उपजातिः

तद्देलवाडाऽभिधतः प्रदेशाद्,
उत्तीर्य रम्यां तदधःस्थलस्थाम् ।
गतः खराडीनगरीमितोऽपि,
कुँमारियाजीस्थलमाजगाम ॥ ९५४ ॥ (युग्मम्)

कुम्भस्य राज्ञोऽभिधया प्रसिद्धं,
सन्तिष्ठते रम्यतरं वने तत् ।
चत्वारि चैत्यानि जिनेश्वराणां,
निषन्ति तस्मिन्नतिसुन्दराणि ॥ ९५५ ॥

मनःसुखाख्यो भगुनन्दनोऽत्र,
रम्यां विशालां खलु धर्मशालाम् ।
अचीकरत्तत्र जनाः समेता-
वसन्ति नैवाऽत्र गृहाणि सन्ति ॥ ९५६ ॥

इतो विहृत्याऽऽगतवान् स तार-
ङ्गाज्याख्य-तीर्थं सकलैः सुशिष्यैः ।
सार्धं विलोक्य प्रभु-वीतरागं,
मुहुर्मुहुस्तत्स्तवनं प्रचक्रे ॥ ९५७ ॥

सम्प्रस्थितस्तत्पुरतो जिताऽक्षः,
खेरालुनाम्नीं नगरीमियाय ।
अत्युत्सवैः पौरकृतैः प्रविश्य,
पुरं ददौ चारु-सुदेशनां सः ॥ ९५८ ॥

इतश्चलित्वा प्रभुराजगाम,
शीपोरमत्रत्य-जनैरशेषैः ।
आडम्बरेणैष महीयसा हि,
प्रावेशि पुर्यां बहुमानपूर्वम् ॥ ९५९ ॥

संसार-दुःख-दहनाऽधिक-तप्त-जीव-
निश्शेष-तापहरणं सकलाऽघनाशम् ।
धर्मोपदेशममृतं सुचिरं किलैष,
प्रावर्षीन्नव-पयोद इवाऽम्बुधाराम् ॥ ९६० ॥

औपच्छन्दसिकम्

वडनगरमुपैत्ततः प्रयातः,
समभवदधिकमशक्तिमानिहाऽसौ ।
उपरिष्टादुत्तरीतुमप्ये-
ष नीचैर्न हि शशाक सद्गुरुः सः ॥ ९६१ ॥

अत एव कियद्दिनानि तत्र,
स्थितिमकृत पुनः संविहृत्य तस्मात् ।
वीशनगरमेतवान् कथञ्चित्,
राजनगरमयमित्थमाययौ सः ॥ ९६२ ॥

उपजातिः

हट्ठीभय-वाटयां स्थितवान् महीयान्,
डेलाऽभिधोपाश्रय-सर्वमुख्याः ।
महाप्रसिद्धाऽऽङ्गलवैद्यकेन,
चिकित्सयामासुरिमे गुरूणाम् ॥ ९६३ ॥

शार्दूलविक्रीडितम्

पन्नालाल उमाऽङ्गजः शुभमतिर्भोग्यादिलालाऽभिधः,
ताराचन्द-झवेरिनन्दनवरो लालश्च भोग्यादिकः ।
श्रीमच्छाकलचन्द-सूनुरपरेऽपि श्रावका भावुका,
नैरुज्यं समुपेतवन्तमनघं श्रीमन्तमेनं विभुम् ॥ ९६४ ॥

अत्यन्तं गुरुमाग्रहीषुरखिला डेलाऽभिधोपाश्रये,
संस्थातुं परमब्रवीद्गुरुवरो भोः ! श्रावका ! भावुकाः ! ।
श्रेष्ठिश्रीजयसिंह-धीर-धिषण-श्रीमत्प्रतापाऽऽदिभि-
स्तत्रैवाऽर्बुदपर्वते ह्युपगतैस्तैः प्रार्थितोऽहं पुरा ॥ ९६५ ॥

उपजातिः

तत्पाँजरापोल उपाश्रयेऽहं,
कर्तास्मि वर्षादिवसेषु वासम् ।
श्रुत्वा गुरूक्तं वचनं किलेदं,
सर्वे पुनस्ते गुरुमेवमूचुः ॥ ९६६ ॥

द्वित्राणि धस्राण्यपि तत्र गन्तुं,
स्वामिन् ! प्रसादं कुरु पाहि नस्त्वम् ।
मेने तदभ्यर्थनमित्थमेष,
जगज्जन-त्राण-कृत-प्रयत्नः ॥ १६७ ॥

ततः समाऽऽशाः परिपूरयद्भि-
र्बाधिर्यकारैरखिलस्य जन्तोः ।
बेण्डाऽऽदिकाऽशेष-विशेष-वाद्यै-
र्नानद्यमानैर्युगपत्समुच्चैः ॥ १६८ ॥

ध्वजेषु नैकेषु परिस्फुरत्सु,
संरक्त-पीताऽर्जुन-सत्पटेषु ।
सुमण्डिताऽमेयवधूजनेषु,
गायत्सु गीतं मधुर-स्वरेण ॥ १६९ ॥

इत्थं महाऽऽडम्बरतो दिगन्त-
विश्रान्त-कीर्तिर्मुनिराज एषः ।
संघैः समस्तैर्नगरं प्रविश्य,
डेलाऽभिधोपाश्रयमाजगाम ॥ १७० ॥
( त्रिभिर्विशेषकम् )

आसीत्तदा तत्र विराजमान,
उपाश्रये श्रीमुनिराजवर्यः ।
पन्न्यास-शाली निरवद्यशीलः,
श्रीधर्मनामा विजयोपयुक्तः ॥ १७१ ॥

માલિની

तदनु सदसि लोकाऽत्यन्त-सद्बोधदाता,
कति-शत-नर-नारी-सम्भृतायां सुवाचा ।
अददत बहुरम्यं जीवनस्योपरिष्टात्,
परमहितकरं तद्धर्मसारोपदेशम् ॥ १७२ ॥

जगति भवति जन्तोर्जीवनं येन धन्यं,
हृदयमपि विशुद्धं वोभवीत्यत्र पुंसाम् ।
परमपदमियर्ति प्रेत्य जीवो हि येन,
तमनिशमिह सर्वे धर्ममेकं भजध्वम् ॥ १७३ ॥

द्विदिनमिह मुनीशस्तस्थिवान् भव्यजीवान्,
जिन-कथित-वचोभिर्वेद(दय)न्नात्मतत्त्वम् ।
उपकृत-बहुजीवः शासनोद्दीप्तिकारी,
हृदयकमलमेषां फुल्लयन् भानुवद्धि ॥ १७४ ॥

ઉપજાતિઃ

विहृत्य तस्माज्जयसिंहनाम-
सच्छ्रेष्ठिवर्यस्य सुवाटिकायाम् ।
सुरेश-सद्मोपम-चित्रशाले,
स्वपाश्रयेऽपूर्वमनोहरेऽसौ ॥ १७५ ॥

साकं सुशिष्यैः सकलैः सुविज्ञै-
स्तिथिप्रमाणानि च वासराणि ।

सन्तस्थिवांस्तत्र सुखेन धीमा-
ञ्छ्रीमान् प्रविद्वानतुल-प्रभावान् ॥ १७६ ॥
( युग्मम् )

ततः समागाच्छुभवासरेऽसौ,
खेटाऽऽनुकूल्ये बलवत्सुलग्ने ।
तत्पाँजरापोल उपाश्रये हि,
चारूत्सवैः संघकृतैरपूर्वैः ॥ १७७ ॥

वर्षादिनानि व्यपनेतुमिच्छो-
र्भिषग्वरः श्रीयमुनाऽऽदिदासः ।
अमोघ-शुद्धौषधमर्पयित्वा,
श्रीमद्गुरोः स्वास्थ्यमचकरीच्च ॥ १७८ ॥

प्रारब्ध तस्मिन् सुकृताऽङ्गसत्रं,
परम्पवित्रं जनताऽऽग्रहेण ।
संश्रोतुमेतज्जनता च नित्यं
प्रमाणमुक्ता समुपस्थिताऽऽसीत् ॥ १७९ ॥

वसन्ततिलका--

पन्यास-दानविजयो मतिमान् सुविद्वान्,
पन्यास-हर्षविजयो गुणवांश्च शान्तः ।
सद्बुद्धि-वीरविजयः परमार्थमुच्छी-
मुक्तिर्मुनिः सविजयः सुतपाश्च राजः ॥ १८० ॥

मालिनी

तिलकविजयसाधुः सद्विनीतश्च मान,
उदयविजय कल्याणौ विपश्चिद्विनीतौ ।
इह हि जलदकाले पार्श्व आसन् किलैते,
चरण-कमल-भृङ्गाः सद्गुरूणां तपिष्ठाः ॥९८१॥
( युग्मम् )

पर्यूषणे पर्वणि देवसापा-
टकस्थितोपाश्रयमेतुमेषः ।
पन्यासमुख्यं मुनि-दाननामा-
नं प्राहिणोच्छ्रीमुनिराजवर्यः ॥ ९८२ ॥

विद्यालयोपाश्रय एतकं श्री-
मद्धर्ष-पन्यासमुदार-बुद्धिम् ।
प्रैषीद्गुरुस्तत्र हि वाचनाय,
श्रीकल्पसूत्रस्य सुपावनस्य ॥ ९८३ ॥

द्रुतविलम्बितम्

पगथियेतिसमाह्व उपाश्रये,
ह्युदयनामसुनिः प्रहितोऽमुना ।
सुगुरुणा जनता-बहुलाऽऽग्रहै-
र्वसुदिनानि सुवाचनहेतवे ॥ ९८४ ॥

इन्द्रवंशा

इत्थं हि सानन्दमनून-सूत्सवैः,
सर्वत्र पर्युषण-पर्व सज्जनाः ।
आराधयामासुरुदार-बुद्धयः,
श्रीमद्गुरूणां कृपया विशेषया ॥ १८५ ॥

उपजातिः

डेलाभिधोपाश्रय-सर्वमुख्याः,
मध्ये चतुर्मासमरं विधातुम् ।
सत्पुस्तकाऽऽगारमकामयन्त,
तत्कुडच खातं समखानयन्त ॥ १८६ ॥

तावद्विरोधो बलवानुदस्थात्,
तेनैव कार्यं न्यवृतत्तदीयम् ।
परन्तु नेता चरितस्य चाऽय-
मशीशमत्तं बलवद्विरोधम् ॥ १८७ ॥

भुजङ्गप्रयातम्—

सदा शान्तमूर्तेर्गुरोरस्य वाचा,
महेभ्या अशेषा मिथोमुक्तभेदाः ।
पुनः संस्कृतास्ते विमृश्याऽऽशु मैत्र्या,
समारम्भयामासुरेतस्य कार्यम् ॥ १८८ ॥

उपजातिः

भू-वाजि रन्ध्रेन्दु-मिते[१९७१]-सुवर्षेऽ-
सौ राजपूर्वे नगरे प्रचक्रे ।
सत्पाँजरापोलिक-सुन्दरोपा-
श्रये चतुर्मास्य-निवासमित्थम् ॥ १८९ ॥

दृगश्व-नन्द-क्षितिमान[१९७२]-वर्षे,
पुर्योर्निरोडा-सरखेजनाम्न्योः ।
निर्जग्मतुर्द्वौ रमणीय-संघौ,
श्रीमद्गुरोरस्य महोपदेशात् ॥ १९० ॥

सम्मण्ड्य नाणं विधिवच्चतुर्थ-
व्रताऽऽदिकानामपि संसदीह ।
ललुः कियन्तो मनुजाश्च प्रत्या-
ख्यानं सहर्षं सुगुरोरमुष्मात् ॥ १९१ ॥

नेत्रर्षि-निध्येक[१९७२]-समीय-मार्ग-
शीर्षे च शुक्ले दशमीतिथौ सः ।
कृत्वा विहारं जयसिंह-नाम-
सच्छ्रेष्ठि-वाट्यां समुपाजगाम ॥ १९२ ॥

स्त्रीभिश्च पुम्भिः शतशः सहैव,
विनेयवृन्दैः सकलैश्च जुष्टः ।

धर्मोपदेशं चरमं प्रदाय,
सम्प्रस्थितः पानसरं समागात् ॥ १९३ ॥

सुस्वागतं चारुमहामहेन,
चक्रुश्च पौराः सुगुरोरमुष्य ।
सुमिष्टवाचा मुनिराडपीह,
सद्देशनाभिः सुजनांस्ततर्प ॥ १९४ ॥

प्रस्थाय तस्मादयमैच्च मोय-
णीतीर्थमत्राऽपि विधाय यात्राम् ।
इतश्चलित्वाऽऽगमदेष शङ्खे-
श्वरं सुतीर्थं सह भूरिशिष्यैः ॥ १९५ ॥

शङ्खेश्वरश्रीप्रभुपार्श्वनाथं,
विलोक्य भक्त्या परया प्रणम्य ।
स्तुत्वा च पद्यै रुचिरैश्चिरं स,
आत्मानमत्यन्तममंस्त धन्यम् ॥ १९६ ॥

इतो विहृत्याऽऽगतवान्मुनीन्दुः,
क्रमात्पुरं पत्तननामधेयम् ।
आकर्ण्य पौरा गमनं (?) गुरूणां,
सद्ढ्क्क-भेरीप्रमुखैः सुवाद्यैः ॥ १९७ ॥

दन्ध्वन्यमानैर्युगपत्समस्तैः,
समेत्य तस्याऽभिमुखं प्रगीतैः ।

सुश्राविकाणां परिपूर्णचन्द्र-
बिम्बाऽऽननानाममितैश्च लोकैः ॥ ९९८ ॥

इत्थं स्वकीयं नगरं प्रहृष्टाः,
प्रावेशयंस्ते मुनिराजमेनम् ।
सत्क्षेत्रवासाऽभिध-पाटकीय,
उपाश्रये सम्यगतिष्ठिपंश्च ॥ ९९९ ॥
( त्रिभिर्विशेषकम् )

आर्या-

तत्फोक(फ)लियावाडा-वासि-मोतीलाल-पोपटलालौ ।
छोटालालश्च केश-रियाजि-संघे चलितुमेनम् ॥ १००० ॥

चक्राजगृहुरतेषां, तमुररीकृत्य विनिर्गते संघे ।
अयमपि चरित्रनेता, सम्मिमेल तत्र सह शिष्यैः ॥ १ ॥

सुपन्न्यास-दयाविजय-तिलक-राजविजयोदय-श्रमणैश्च ।
सुमुनि-कल्याण-विजय-प्रमुखबहुविचक्षणैः कतिभिः ॥ २ ॥

पन्न्यासो मणिविजयः, प्रवर्त्तकोपाधिक-कान्तिविजयश्च ।
सहस्रद्वयसे तस्मिन्, सह कति-परिवारैः समासीत् ॥ ३ ॥

साध्व्यश्चाऽपि कियत्यः, सम्मिलिताः शुभभावनावत्यो हि ।
सायं प्रातः सर्वे, प्रतिक्रमाऽऽदिकं कुर्वन्तः ॥ ४ ॥

उपजातिः

सानन्दमित्थं सह सङ्घकेन,
तत्तीर्थ-यात्रां विधिवद्विधाय ।
समम्पुनस्तेन सशिष्य एष,
समागतोऽभूदणहिल्लपुर्याम् ॥ ५ ॥

भुजङ्गप्रयातम्

कनासाप्रतोल्यां महोपाश्रयेऽसौ,
वितस्थे सहाऽशेष-शिष्यैर्मुनीन्दुः ।
पुरे तत्र रथ्या महाविस्तृतेयं,
समृद्धाश्च जैनाऽऽलयाः सन्ति सर्वे ॥ ६ ॥

त्रिचैत्यानि तत्राऽधुनाऽप्युल्लसन्ति,
रथाश्चाऽतिदीर्घास्त्रयो भान्ति रम्याः ।
सुभक्ता गुरौ चाऽपि देवे स्वकीये,
ऽनुकम्पां वितन्वन्ति जीवेषु लोकाः ॥ ७ ॥

रेऽगुश्च पन्न्यास-भावाऽभिधानो,
महाराज एतच्चरित्रस्य नेता ।
मुनिर्मुक्तिनामा मुनी राजनामा,
सुरेन्द्राऽऽरव्य-कल्याण-मुन्यादयश्च ॥ ८ ॥

चतुर्मासमध्ये सदा देशनायां,
विपाकं च सूत्रं गिरा मिष्टया हि ।

सभायां महत्यामवाचि प्रकामं,
चरित्रस्य नेत्रा महातत्त्ववेत्रा ॥ ९ ॥

उपजातिः "

स्त्रीपुंसकानां महती भवन्ती,
ह्युपस्थितिः श्रोतुमिदं जनानाम् ।
प्रभावना-पूजन सत्तपांसि,
चक्रुश्च लोका बहवो महान्ति ॥ १० ॥

वसन्ततिलका

तौ मुक्ति-राजविजयौ सुधियौ च षोड-
शोपोषणानि परिचक्रतुरुल्लसन्तौ ।
मासं बभूव परमोत्सव एतदर्थं,
सुश्राविकाः परिजगुर्महिमानमस्य ॥ ११ ॥

उत्पात-मेघपटली चरिताधिनाथ-
भास्वन्तमेनमसकृन्नितरा-मरौत्सीत् ।
किन्त्वात्म-पौरुष-महापवनेन सर्वो,
विच्छिन्नतामुपजगाम महीयसोऽस्य ॥ १२ ॥

सेहेऽसकौ सकलमेव हि शान्तवृत्त्या,
विद्वेषिवृन्दमयमात्मबलेन जित्वा ।
निःशेष-राक्षसकुलं हनुमानिवाऽऽशु,
प्रापुस्फुरन्निज-जयध्व(ध्वज)मुच्चकैः सः ॥१३॥

उपजातिः

कर्नासना–नामक–पाटके श्री–
पन्यासभावाऽऽख्यमुनीश्वरेण ।
सहैष धीमान् विरराज यर्हि,
वर्षादिनानि व्यपनीनिषुर्हि ॥ १४ ॥

पन्यास–भाग् धर्मविजिच्च तर्हि,
वर्षर्तुकाले निवसन् स आसीत् ।
तत्क्षेत्रवासाऽभिध–पाटकेऽति–
द्रुह्यन्नमुष्मै बहुधाऽऽत्मशत्त्या ॥ १५ ॥

नैसर्गिकीयं प्रकृतिः खलाना–
मन्योन्नतिं यन्न हि सासहीति ।
मनश्च तेषां परितातपीति,
विनैव हेतुं स हि चोकुपीति ॥ १६ ॥

श्रीहीरसूरिर्मुनिराजवर्योऽ–
प्येवं स्वगेहीय–महोपसर्गान् ।
असोढ सर्वान् परिखिद्यमानः,
पूर्वं महीयाञ्छमतां दधानः ॥ १७ ॥

अस्याऽपि नेतुश्चरितस्य तद्वत्,
दौरात्म्यवद्धन्धुकृतोपसर्गाः ।

नैके निपेतुः सहितुं नवया (न शक्या)-
स्तथापि सौजन्यतयाऽधिसेहे ॥ १८ ॥

चेज्ज्यायसो बुद्धिमतः सुबन्धो-
र्भ्राता कनीयानतिबालिशत्वात् ।
उत्पातयेदग्रज एव तर्हि,
सहेत लोके ह्युचितं तदेव ॥ १९ ॥

इहाऽसकौ श्रीकलिकालसर्व-
ज्ञ-हेमचन्द्रस्य जगद्गुरोर्हि ।
आचार्यवर्यस्य विशेष-ग्रन्था-
नासीद्वहिष्कारयितुं सयत्नः ॥ २० ॥

प्राचीन ग्रन्थेषु बहिष्कृतेषु,
लोकोपकारो भविता विशेषः ।
प्रख्यातिमायास्यति जैनशास्त्र-
मित्थं प्रदध्यौ हृदये स्वकीये ॥ २१ ॥

सम्वत्सरे पक्ष-हयाऽङ्क-चन्द्रे,
तत्पट्टणेऽसौ चरिताऽधिनाथः ।
न्युवास वर्षादिवसेषु तत्र,
ददौ प्रबोधं बहु सज्जनानाम् ॥ २२ ॥

प्राप्ते च तस्मात्सह सर्वशिष्यैः,
कृत्वा विहारं परमोत्सवेन ।

समाययौ चाणर-पत्तनं स,
तस्मिंश्च पौराः सकलाः प्रहर्षात् ॥ २३ ॥

वेण्वाऽऽदि-नानाविध-तूर्यनादै-
रेत्याऽऽगतस्याऽभिमुखं ह्यमुष्य ।
प्रवेशयामासुरमुं पुराऽन्तः,
सुसज्जितं तोरण-वन्धनाऽऽद्यैः ॥ २४ ॥ (युग्मम्)

उद्यापनेऽष्टौ दिवसानि तत्र,
महामहः पौरजनैरकारि ।
अष्टोत्तर स्नात्रसमर्चनाऽऽदि,
बभूव नानाविधधर्मकृत्यम् ॥ २५ ॥

मासं स्थितस्तत्र महामना हि,
कोटापुरीयः स हि पट्टणस्थः ।
श्रीकर्मचन्द्राऽङ्गज-पूर्णचन्द्रः,
पुरं रणूजं व्रजितुं किलैनम् ॥ २६ ॥

विहृत्य तस्मादचिरं रणूजम्,
आजग्मिवानत्र समस्तपौराः ।
महामहेनाऽतितपिष्ठमेनं,
प्रावीविशन्नात्मपुराऽन्तरेनम् (रेऽरम्) ॥ २७ ॥

मनुष्यजन्माऽधिकदुर्लभत्वे,
व्याख्यानमोजस्वितरं महीयान् ।

ददौ चिरं सर्वजनेषु तस्य,
प्रभावमत्यन्त पपात(न्तमवाप) तत्र ॥ २८ ॥

इहाऽकरोत् कौटिक-पूर्णचन्द्रः,
श्रीकर्मचन्द्रस्य सुतो महेभ्यः ।
अष्टाह्निकं चारुमहोत्सवं च,
प्रभावना-पूजन-संघभक्तीः ॥ २९ ॥

सत्तोरणैश्चित्रित-चित्रवर्णैः,
परिस्फुरच्चित्रपटैर्महद्भिः ।
ध्वजैश्च सर्वं नगरं प्रकाम-
मशूशुभत्तत्र महामहेऽसौ ॥ ३० ॥

अचीकरद्वैद्युत-दीप्तिमुग्रां,
प्रत्येकरथ्या-प्रतिराजमार्गम् ।
दीपावलीरात्रिरिव त्रियामा,
बभौ तदस्मिन् सुषमां दधाना ॥ ३१ ॥

वैतालीयम्

आङ्गीरचना जिनेशितुः,
सुषमां दधती कामपि प्रभोः ।
पश्यतां मनांसि तत्क्षणं,
जर्हरीति मदिरेक्षणेव सा ॥ ३२ ॥

नगरं वसु-वासराऽवधि,
शक्रपुरी-समतां बभार तत् ।
प्रशशंसुः सर्वसज्जना,
जनता-लोचन-तर्पणं महम् ॥ ३३ ॥

चरमे दिवसे महामनाः,
सकलं ग्राममबूभुजत्मकः ।
उत्साही पूर्णचन्द्रकः,
कर्मचन्द्र-वरनन्दनः कृती ॥ ३४ ॥

वसन्ततिलका

अत्रोत्सवे चरितनायक-पार्श्व आस-
न्नन्तेसदः श्रमण-मुक्ति शुभाऽभिधानः ।
सच्छील-राजविजयोऽधिकसद्गुण-श्री-
कल्याण-काऽऽदिमुनयो बहवोऽतिधीराः ॥३५॥

वाबूपर्द-प्रथित इभ्यवरः स पन्ना-
लालात्मजः सुकृत-कारक चून्निलालः ।
पक्षाऽश्व-नन्द-शशि-सम्मित-विक्रमा(१९७२)ऽब्दे,
सुश्रावकः सुपुर-पट्टण-सन्निवासी ॥ ३६ ॥

निर्मापितं सुरमणीयमुपाश्रयं हि,
श्रीमच्चरित्र-वरनायकपाणिकञ्जैः ।

कृत्वा महोत्सवमलं वसुवासरीयं
प्राचिरण्यपच्छुभदिने विपुलव्ययेन ॥ ३७ ॥
( युग्मम् )

वर्षेऽत्र नैक-नगरेषु बभूव नाना-
सद्धर्मकार्यमनघस्य गुरोरमुष्य ।
श्रेयस्करेण वरपाणि-सरोरुहेण,
न्यायोपलब्ध-सुधनाऽतिशय-व्ययेन ॥ ३८ ॥

उपजातिः

ततो रणूजाद्विहरन्नदभ्र-तेजा महौजा मुनिराजवर्यः ।
समाययौ पत्तननामधेयं, पुरं पुनर्दुर्मति-मेघ-वातः ॥ ३९ ॥

सम्मानितस्तत्र विशेषमेष,
सुश्रावकाऽऽरब्ध-महोत्सवेन ।
पुरं सशिष्यः प्रविवेश तत्र,
झवेरिवाडास्थ उपाश्रयेऽस्थात् ॥ ४० ॥

समागमेनाऽस्य पुरीजनाना-
मुत्साहशक्तिः समवर्धीच्च ।
मेघाऽऽगमेनेव शिखण्डिनां हि,
व्याख्यान-पीयूषममुष्य नित्यम् ॥ ४१ ॥

स्त्रियः पुमांसश्च समेत्य सर्वे,
निपीय कामं परितृप्तिमापुः ।

धर्मे च जैने द्रढिमानमेते,
सौवे सुचित्ते विभराम्बभूवुः ॥ ४२ ॥

सच्छीलशालिन्युजमाऽभिधाना,
सुश्राविकैकाऽकृत भूरिभावा ।
उद्यापनं तत्र महामहेन,
श्रीमद्गुरूणामुपदेशतुभ्रा ॥ ४३ ॥

धीभक्ति–शैलोपरि सज्जनाना–
मारोढुमेतत्कथितं सुधीभिः ।
सोपानभूतं यदि पाश्वसेयं
स्यात्तत्पुरस्तात् खलु पञ्च पञ्च ॥ ४४ ॥

सर्वाणि वस्तूनि निधाय विज्ञा,
आराधयेयुस्तदतीव भक्त्या ।
प्रादाच्च दीक्षां बृहतीमपीह.
मनोहर–श्रीरविनाममुन्योः ॥ ४५ ॥

मालिनी

उदयविजयसाधोः शिष्यकोऽभून्मनोह–
रविजयमुनिरेवं श्रीसुरेन्द्रस्य साधोः ।
रविविजयमुनिश्चाऽऽबोभुवीत्सद्विनेयो,
गुण हय–निधि–चन्द्रे वत्सरे ज्येष्ठकृष्णे ॥ ४६ ॥

ઉપજાતિઃ—

वैश्वे तिथा-वागतवांश्च तत्र,
विज्ञापयामास च चाणसीयः ।
संघश्चतुर्मास-निवासनाय,
श्रीमन्तमेनं गुरुराजमुख्यम् ॥ ४७ ॥

तथा मशाणानगरीय-संघोऽ-
पा(घ, आ)गत्य चक्रे सुगुरोरमुष्य ।
बह्वीं च विज्ञप्तिमसौ तदा हि,
लाभ-प्रकर्षाऽऽदिगुणानुदीक्ष्य ॥ ४८ ॥

सच्चाणसीयाऽखिल-संघकीय-
तदर्थ-विज्ञप्तिमुरीचकार ।
प्रैषीन्मशाणानगरे च पश्चा-
स-दान-नामानमयं तदर्हम् ॥ ४९ ॥ (युग्मम्)

ततो व्यहार्षीच्छुभवासरेऽसौ,
स्त्रीभिश्च पुम्भिर्बहुभिः सुजुष्टः ।
लग्ने शुभे चाणसमुप्रवेशं,
चक्रे मुनीन्दुर्महता महेन ॥ ५० ॥

ઇન્દ્રવંશા

बेण्डाऽऽदि-नानाविध-तूर्यनिस्वनैः,
सुश्राविकायूथ सुगीत-गायनैः ।

लोकैर्ध्रुवद्भिर्जयनादमुच्चकै-
निःशेष-पौरैः सह सूरिशिष्यकैः ॥५१॥(युग्मम्)

सुधांशुवच्छीतलदर्शनोऽसौ,
कर्तव्यतायां नरजन्मनो हि ।
उपादिदेशाऽधिकमिष्टवाचा,
जग्राह तत्सारमशेषलोकः ॥ ५२ ॥

जैनांस्तदन्यानपि भव्यजीवान्,
समभ्युपेतान् समये च नित्यम् ।
पञ्चाशकग्रन्थमशिश्रवच्च,
मेघाऽऽरवाऽऽडम्बरजित्स्वनेन ॥ ५३ ॥

इहत्य-देवाऽऽलय-जीवरक्षा-
संस्थाऽऽलयाऽऽय-व्यय-दर्शनाऽऽदि ।
नैकोऽपि चक्रे तत एव तत्र,
निरीक्ष्य हानिं महतीं भयानीम् ॥ ५४ ॥

गुरुः समूचे खलु देशनाया-
मुपस्थितं तर्हि (तत्र) समस्त-संघम् ।
महानुभावा ! ध्रुवमेव वित्त,
यदेष कालो ग्रसितुं समेषाम् ॥ ५५ ॥

प्रतीक्षमाणोऽवसरं शिरःसु,
परिभ्रमत्येव दिवानिशं वै ।

कदा ग्रहीता स हि नेति कोऽपि,
वेविद्यते मानवजीव एषः ॥५६॥(त्रिभिर्विशेषकम्)

आयुश्च नित्यं परिहीयते हि,
विद्युन्निभं सूर्य-गमाऽऽगमाभ्याम् ।
अतः स्वहस्तेन सुविज्ञजीवाः,
प्रकुर्वते यत्सुकृतं तदेव ॥ ५७ ॥

हिताय नृणां भवतीति मत्वा,
स्वधार्मिकाऽऽय व्यय-लोकनाऽऽदि ।
कृत्वा प्रदेयं झटिति प्रदत्त,
ग्राह्यं च यत्तत्सकलं हि लात ॥ ५८ ॥ (युग्मम्)

तथाकृते सार्वजनीन सौख्यं.
परस्परं प्रीतिरपि प्रकामम् ।
एधिष्यते धार्मिक-कार्यमात्रे,
चाऽत्राऽऽशु तथ्यं सकलान् ब्रवीमि ॥ ५९ ॥

श्रीमद्गुरोरस्य महीयसो हि,
सुत्वयाऽतिवैरं परिहाय सर्वे ।
मिथश्च मैत्रीं परमां विधाय,
कृत्यञ्च धर्म्यं सकलं व्यधुस्ते ॥ ६० ॥

इन्द्रवंशा

टॉकेति नाम्ना प्रथितं जलाशयं,
संघः समस्तः खनितुं प्रवृत्तवान् ।

संखानितेऽन्तः कियती सुखण्डिता,
मूर्तिश्च जैनी ह्युपलक्षिताऽभवत् ॥ ६१ ॥

उपजातिः

यथा यथा तत्खननं प्रचक्रे,
तथा तथाऽनेक-नवीन-दृश्यम् ।
अभूच्च पर्वासिनसेतकस्मिन्,
नासीत्ततः शीतलनाथकस्य ॥ ६२ ॥

अखण्डिता रम्यतरा सुमूर्तिः,
प्रादर्शि तां द्रष्टुमशेष-पौराः ।
समुत्सुकास्तत्र समेतवन्तः,
स्त्रियः पुमांसश्च विशेषभक्त्या ॥ ६३ ॥ (युग्मम्)

प्रागत्र कश्चिद्यवनाऽधिराज-
श्चिच्छेद सर्वाः प्रतिमा(माः) खलीयान् ।
दैवाच्च काञ्चिन्न चकर्त किन्तु,
चिक्षेप कुत्राऽप्यनुयमीयते तत् ॥ ६४ ॥

तां तीर्थकर्तुर्दशमस्य दिव्यां,
प्राचीनमूर्तिं सकलाश्च जैनाः ।
आनीय चैत्ये सुगुरोरमुष्य,
सुपाणिना सम्यगतिष्ठिपंश्च ॥ ६५ ॥

आर्या—

श्रीशीतलनाथजैन-मण्डल-मिह संस्थाप्य तद्धस्तेऽसौ ।
प्रागुक्तकार्य-द्वितय-मार्पयच्चरितपतिः श्रीमान् ॥ ६६ ॥

समपीपदच्च सर्वं, सुगमतया मण्डलमपि तत्कार्यम् ।
तदाय-व्ययौ विलोक्य, चक्रे च वहीवटं शुद्धम् ॥ ६७ ॥

वर्षर्ताविह पुर्यां, चतुर्दशपूर्वाऽऽराधनाऽऽदीनि ।
चक्रिरे च सत्तपांसि, श्राद्धाः श्राविकाश्च सुभक्त्या ॥ ६८ ॥

वैतालीयम्

गम्भीर-मुनिर्विचक्षणः, कल्याणविजय उज्ज्वलाऽऽशयः ।
मङ्गलविजयो महामति-र्मनोहरो जनता-मनोहरः ॥ ६९ ॥

पुष्पिताग्रा

मुनिरविविजयोऽतिशेमुषीं,
दधतः सकलाः सत्तपस्विनः ।
गुरु-चरण-सरोज-षट्पदा,
निकटे तत्र हि सद्गुरोः स्थिताः ॥ ७० ॥

श्रावकाश्च कर्मठाः समे,
धर्माऽऽराधन उत्सहिष्णवः ।
मरुदेवा पार्श्वनाथजित्-
चैत्यमेकमिह वर्तते महत् ॥ ७१ ॥

वसन्ततिलका

१५६३
सानन्दमत्र गुण-वाजि-नवैक-वर्षे,
प्रख्यात-चाणस-पुरे गुरुवर्य एषः ।
वर्षादिनानि मुनिराड्गमयाञ्चकार,
सौवैः सुशिष्य-निकरैः सह सञ्जितात्मा ॥ ७२ ॥

प्रमुदितवदना—

व्यहृत तत उदार-कीर्त्याश्रितः,
सुविनयि-कति-शिष्यकैः संयुतः ।
वडनगरमुपेयिवान् दीप्तिमान्,
सुगुरुरयमपारविद्यार्णवः ॥ ७३ ॥

अकृत सदुपधानमेको गृही,
रुचिरतर-महेन तस्मिन् पुरे ।
अजनि तदनु मालिकाऽऽरोपणं,
पुनरपि तत आगमच्चाणसम् ॥ ७४ ॥

वसन्ततिलका

अत्राऽऽययौ भव-जिहासुमनाः स सोम-
चन्द्रो हि राधनपुरात्सुगुरोः समीपम् ।
संसार-वासमति-दुःसह-दुःखपूर्ण,
कारागृहायितममुं परिवीक्षमाणः ॥ ७५ ॥

व्यज्ञापयच्च तमसौ करुणानिधे ! त्व-
माया हि मत्पुरमितश्चपलं चलित्वा ।
मामाशु पाहि गृहवास-हुताऽशनेन,
दन्दह्यमानमनिशं लघु देहि दीक्षाम् ॥ ७६ ॥

तस्याऽऽग्रहेण महता प्रविहृत्य तस्मा-
दह्नाय चाणसपुरान्मुनि-मौलि-रत्नम् ।
उर्वीं पुनन् भविक-भूरिजनांश्च मार्गे,
धर्मोपदेश-सुधया बहुधोपकुर्वन् ॥ ७७ ॥

स्वागता

आजगाम कति-शिष्य-सुजुष्टो,
राधनाऽऽदिपुरमुद्गत-शोभम् ।
नागर-प्रकृत-चारुमहेन,
प्राविशच्च नगरं शुभकाले ॥ ७८ ॥ ( युग्मम् )

श्रावका इह वसन्ति समृद्धाः,
शुद्ध-देव-गुरु-धर्म-सुनिष्ठाः ।
शासनोन्नतिकरा बहुविज्ञा,
द्वादश-व्रत-धरा गुणवन्तः ॥ ७९ ॥

वसन्ततिलका

अस्मिन् पुरेऽभवदमुष्य चरित्रनेतुः,
श्रीमान् पितामह उदार-यशा गुरुः सः ।

पंन्यास–रत्नविजयो मुनिपुङ्गवोऽपि,
डेलाऽभिधान––सदुपाश्रय––पट्टनेता ॥ ८० ॥

अन्येऽपि धीर––धिषणा विषयाऽभिलाषं,
त्यक्त्वा सुदुस्त्यजमपीह मुमुक्षुजीवाः ।
नैके बभूवु––रवनीतल–माननीयाः,
सत्त्यागिनो निरतिचार––सुसंयमत्राः ॥ ८१ ॥

तेनैव सर्वजनता बहु––धर्मरक्ता,
सम्यक्त्व––वासितमना उपलक्ष्यतेऽरिगन् ।
चैत्यानि भूरि विलसन्ति महान्ति तत्र,
चेतोहराणि समुपागतदर्शकानाम् ॥ ८२ ॥

स्रग्धरा

इच्छाचन्द्राङ्कजन्मा शिव––सुखरसिकः सोमचन्द्राऽभिधान–
श्चाऽष्टाहीनं प्रशस्यं परम–महमिहाऽऽरब्धवांस्तत्र नित्यम् ।

पूजां नैकप्रकारामकृत जिनवराणां प्रवृद्धाऽतिभक्त्या,
हृद्यैर्गीतैश्च वाद्यैः सुजनततिकृतैर्नर्तनैश्चाऽतिरम्यैः ॥ ८३ ॥

उपजातिः

प्रोत्साहवन्तः सकलाश्च पौराः,
प्रत्येक––सम्बन्धमुमादरेण ।
आनीय सम्भोज्य कराऽम्बुजेऽस्य,
सश्रीफलं रूप्यकमप्यदुस्ते ॥ ८४ ॥

इत्थं दशाहाऽवधिकोत्सवेषु,
जातेषु वेदर्षि-नवैक-वर्षे[१९७४] ।
माघे सुमासे धवले च पक्षे,
तिथ्यां दशम्यां भव-भीति-हर्त्रीम् ॥ ८५ ॥

निष्काश्य रम्यं वरघोटकञ्च,
विमुक्तसंख्यानजनैश्च सत्रा ।
विलासिनीनां कमलाननानां,
यूथेषु गायत्सु मनोहरं हि ॥ ८६ ॥

महारथे सर्वपुरःसरे च,
बेण्डाऽऽदिसम्पूर्णविवादनेषु ।
नानद्यमानेष्वधिकं जनानां,
बाधिर्यकारिष्वखिलाऽऽगतानाम् ॥ ८७ ॥

इत्थं महाऽऽडम्बरतः समेतं,
श्रीसोमचन्द्रं जनतासमक्षम् ।
सन्दीक्ष्य लग्ने शुभदे मुनीन्दु-
स्तन्नाम सम्पद्विजयं प्रचक्रे ॥ ८८ ॥

( चतुर्भिः कलापकम् )

अत्यन्त-पौराऽऽग्रहतः कियन्ति,
दिनानि तत्राऽभ्युषितान्यनेन ।
तपस्य-शुक्ले प्रविहृत्य तस्मात्,
समं सुशिष्यैर्विबुधैः कियद्भिः ॥ ८९ ॥

विधाय सङ्खेश्वरतीर्थयात्रा-
मुपेयिवान् पट्टण-पत्तनं सः ।
पौरोपनीताऽतिशयोत्सवेन,
प्राविक्षदेतन्नगरं महौजाः ॥ ९० ॥ (युग्मम्)

उपाश्रये सागरनाम्नि तस्थौ,
साधूपयुक्ते विपुले सुरम्ये ।
विद्याचणोऽशेष-विवादि-मत्त-
मातङ्ग-पञ्चानन ईड्यवर्यः ॥ ९१ ॥

कालेऽधुना पूर्णधिया विहीना,
अपीह जैना मुनयः कियन्तः ।
अधीत्य किञ्चित्पदवीं गरिष्ठा-
मुशन्ति तेभ्यो ददते च लोकाः ॥ ९२ ॥

परन्तु नेदृङ्मुनयः कदापि,
सुश्रावकीयोपकृतिं विधातुम् ।
भवन्ति शक्ता इति संविमृश्य,
चरित्रनेता हृदि पुण्डरीके ॥ ९३ ॥

सुखेन तेषां परिपूर्ण-शास्त्राऽ-
भ्यासाय रम्यां मुनिपाठशालाम् ।

संस्थापयिष्यन् नगरीयमुख्या-
नुपादिशद्दैनिकदेशनायाम् ॥ ९४ ॥
( त्रिभिर्विशेषकम् )

हे भव्यजीवा ! इह घोरकाले,
ज्ञानोन्नतिं कर्तुमवश्यमेकाम् ।
संस्थापयध्वं मुनिपाठशालां,
सैवाऽस्ति तस्योन्नति-मुख्य-हेतुः ॥ ९५ ॥

वसन्ततिलका

ज्ञानं विना यत इमे सकलाश्च जीवा-
स्तुल्या भवन्ति पशुना न हिताऽहितादि ।
जानन्ति नैव जनतामुपदेष्टुमर्हा,
नो वा तरन्ति भव-सागरतः कदाऽपि ॥९६॥

तस्मात्प्रधाननगरे महदस्ति तस्या,
आवश्यकत्वमधुना कलिकालमध्ये ।
यस्याममी मुनिगणा गृहिणश्च सम्यक्,
शास्त्राण्यधीत्य बहुविज्ञतमा भवेयुः ॥ ९७ ॥

इत्थं तदर्थमधिकं यतमान आसी-
च्छ्रीमांश्चरित्र-वरनायक एष तत्र ।
किन्तूत्थिताः खलतया बहवो हि विघ्नाः,
सर्वं ह्यमुष्य यतनं विफलं प्रचक्रुः ॥ ९८ ॥

ऊँझापुरीय–परमार्हत–सर्वसंघैः,
सम्प्रार्थितो जलद–कालिक वासहेतोः ।
कृत्वा विहारमसकौ पुरतश्च तस्मा–
दूँझापुरीमचिरमेव समाजगन्वान् ॥ ९९ ॥

तत्रैतकस्य परमोच्चमहं ह्यपूर्वं,
व्यातेनिरे पुरजना नगरप्रवेशे ।
बेण्डाऽऽदितूर्यमखिलं प्रणनाद रम्यं,
गीतं जगुः सुवदना ललनाः कियत्यः ॥१००॥

सम्वत्सरे युग–हयाऽङ्क–शशाऽङ्कसंख्ये, [१९७४]
मासे शुचौ सितदले दशमीसुतिथ्याम् ।
सम्पन्मुनेः प्रददिवान् बृहतीं सुदीक्षां,
पन्यास–नीतिविजयो मुनिराजराजः ॥ १०१ ॥

उपजातिः

जैनास्तदन्या अपि(दन्येऽपि च) पौरलोका,
आबाल–वृद्धाः प्रतिवासरं हि ।
व्याख्यान–पीयूषमलं निपातु–
माजग्मुरेतस्य गुरोः समुत्काः ॥ १०२ ॥

वसन्ततिलका

द्विःसप्त–पूर्व–बहुपुण्यद–सत्तपस्या–
मारीरधद्बहुल–भव्यजनैः सकोऽस्मिन् ।

सद्धर्म-देव-गुरुसेवन-हेतुना हि,
“सेवासमाज”मपि सम्यगतिष्ठिपच्च ॥१०३॥

उपजातिः

सद्बालकानामपि “नीतिसङ्गी-
तमण्डलं” स्थापितवाननंहाः ।
धर्मेषु पौरानुदसीसहच्च,
स इत्थमारान् बहुधोपचक्रे ॥ १०४ ॥

उपगीतिः

तिलकविजय-मुनिउदयौ, सुरेन्द्र-मनोहर रविविजयाः ।
मुनि-सम्पद्विजयाऽऽद्या, गुरु-निकटे वव्रतिरे शिष्याः ॥१०५॥

नगरेऽस्मिन् गगनचुम्बि, वर्वृतीति मन्दिरं चैकम् ।
धर्मशाला विशाला, विलसति चोपाश्रयोऽप्येकः ॥ १०६ ॥

इन्द्रवज्रा

सद्बालिका-बालक-धर्मशिक्षा-
कृतेऽपि तत्राऽस्ति हि पाठशाला ।
इद्देशनं वैद्युत-पत्र-वेश्म,
पत्राऽऽदि-सम्प्रापक आलयश्च ॥ १०७ ॥

उपजातिः

घनाः कणव्यारव्यजना वसन्ति,
कृषीवला धार्मिकरागवन्तः ।

सत्प्रेमकर्तरि उदारचित्ताः,
कारुण्य-पूर्णाः सुखिनश्च सर्वे ॥ १०८ ॥

शार्दूलविक्रीडितम्---

प्रान्ते श्रीमुनिराडसौ परिकरैर्जोजुष्यमाणः समै-
र्निर्गच्छच्छत-संख्यकेन महता संघेन सार्धं मुदा ।
तारङ्गाज्यतिपावनस्य महतस्तीर्थस्य यात्राचिकी-
र्षुञ्ज्ञातश्च विनिर्गतः शुभदिने चैन्मेरवाडापुरीम् ॥ १०९ ॥

तत्रैतं गृहमेधिनश्च सकला अत्यादरादागतं,
वादित्राऽऽदिभिरागता अभिमुखं प्राविविशन् स्वम्पुरम् ।
पन्यासो मुनिपः स भावविजयः श्रीमान् दयाऽऽख्यस्तथा,
पन्यासः समुपाजगाम च मुनिः कल्याण-रम्याऽभिधः ॥११०॥

वसन्ततिलका

पन्यास दानविजयो मुनिपः कियद्भिः,
सच्छेमुषी-सुमति-सुश्रमणाऽऽदिभिश्च ।
युक्तः समागमदुदारमना मनीषी,
सम्प्राप्तवान् सुमुनिराजविजिच्च तत्र ॥ १११ ॥

इत्थं ह्यनेक-गुरुमण्डलमण्डितोऽय-
मेतच्चरित्रवरनायक-संयमीन्द्रः ।
निश्शेष-पाप-परिमोचन-तीर्थ-तार-
ङ्गाजिं जगाम परमाऽऽर्हत-संघयुक्तः ॥ ११२ ॥

इन्द्रवज्रा

आगत्य तत्राऽजितनाथ-भव्य-
मूर्तिं विलोक्याऽधिकया च भक्त्या ।
निर्धूत-पापाः सकला अभूवन्,
दिनत्रयीमत्र समध्यवात्सुः ॥ ११३ ॥

पुष्पिताग्रा

वडनगरमयाम्बभूव तस्मात्,
कृत-सुविहार उदार-मानसोऽसौ ।
नगर-जन-कृतैर्महामहैश्च,
न्यविशत भूरि सुशोभितं पुरं तत् ॥ ११४ ॥

परममुपदिदेश तत्र पथ्यं,
निरथ-गरिष्ठ-विशुद्ध-जैनधर्मम् ।
अमृतमय-गिरा चिरं महीयान्,
सकल-जना अतिहर्ष-मीयिवांसः ॥ ११५ ॥

विशनगरमुपैदितो विहृत्य,
नगर-निवासिजना अकार्षुरेषाम्(र्षुरस्य) ।
प्रचुरतरमहोत्सवं प्रवेशे,
ह्यदित विशेष-महोपदेशमेषः ॥ ११६ ॥

उपजातिः

अत्राऽमदावादपुरीय–कामे–
श्वराऽऽख्य–रथ्यास्थ–महर्द्धिकस्य ।
चक्राख्य–सच्छ्रेष्ठिसुनन्दनस्य,
हठ्यादिसिंहस्य समाजगाम ॥ ११७ ॥

सप्रेमविज्ञप्तिदलं विहर्तु–
मत्राऽचिरं श्रीगुरुदेव–पार्श्वे ।
अतस्ततोऽशेष–मुनीश–युक्तः,
प्रतस्थिवान् पौरकृतोत्सवेन ॥ ११८ ॥ (युग्मम्)

मार्गे च लोकान् भविकाननेकान्,
सम्पाययन् धर्मकथाऽमृतानि ।
पृथ्वीं पुनानः समियाय सोऽयं,
श्रीराजपूर्वं नगरं प्रशस्तम् ॥ ११९ ॥

भुजङ्गप्रयातम्

वदद्भिः समुच्चैः समं वेण्ड–भेरी–
प्रभेदैः सुतूर्यैर्वधूनां सुगीतैः ।
धमद्भिश्च शङ्खाञ्जयं व्याहरद्भि–
र्जनैरुत्पताकं पुरम्प्राविशत्सः ॥ १२० ॥

अयस्कृत्प्रतोली–स्थितोपाश्रयेऽसौ,
न्यवात्सीच्च सत्रा यतीन्द्रैरशेषैः ।

क्रियोद्धारि--पन्यास--सत्याऽभिधान--
महापट्ट--पारम्परीयो गरीयान् ॥ १२१ ॥

गीतिः

अनुयोगाचार्यवरः, पन्यास--रूपविजयमहाराजः ।
स पुराऽऽगतवाच्छ्रीमान्, स्वःश्रीविजित्वरेऽत्र राजनगरे १२२
( युग्मम् )

आसंस्तत्परिवाराः, पन्यासाऽमीत--कीर्तिविजयाऽऽदयः ।
अयमेकदा पन्यास -कीर्तिविजयमादिदेश गोचर्यै ॥ १२३ ॥

उपगीतिः--

न हि कृत्वा तद्वाचं, क्रोधाऽऽवेशादयमपि तर्हि ।
भृत्यपदं प्रभुजीव--स्त्वेवं जल्पन् बहिरगमच्च ॥ १२४ ॥

आर्या

स्व--कृत--तदाज्ञाऽवज्ञा--त्रपया न पुनस्तदन्तिकं पश्चात् ।
स आययावतिदुःखं, कुर्वाण इति किंवदन्त्यस्ति ॥ १२५ ॥

उपजातिः

अयस्कृतश्चौकसि तस्थिवान् स,
शोशुच्यमानः कृत--गुर्ववज्ञः ।
पन्यास--कीर्त्याख्य--विजिन्मुनीशो--
महाविपश्चित्सदसद्विवेकी ॥ १२६ ॥

गीतिः

तस्मादेव हि हेतो--रष्टादश--शततमेव विक्रमाऽब्दे ।
निरमायि सकलसंघै--रयमुपाश्रयो लोहकार--वीथ्याम्॥१२७॥
तस्मिन्नेव हि वर्षे, पन्यास--श्रीवीरविजय--नाम्ना ।
वीरोपाश्रयोऽप्येष, रमणीयतरो निर्मितः सङ्घेन ॥ १२८ ॥

राजनगर--वर--पुर्या--मित्थमिमौ डेलाऽऽख्योपाश्रयस्य ।
उपाश्रयावतिरुचिरौ, शाखाभूतौ नितरां शोभेते ॥ १२९ ॥

उपजातिः

तत्रत्य--कामेश्वर--पोलवासी,
श्रीमान् हठीसिंह उदार--बुद्धिः ।
चक्रुसुतस्तत्र चकार चारु--
मपूर्वमाष्टाह्निकमुत्सवं सः ॥ १३० ॥

शार्दूलविक्रीडितम्

शान्तिस्नात्र--समर्चनं भगवतः श्रीमज्जिनेन्द्र--प्रभो--
श्चक्राणो विधिवन्महेभ्य इह हि प्रोल्लासिचेताः कृती ।
सर्वे मुख्यमहाजना गुरुममुं विज्ञापयाञ्चक्रिरे,
चातुर्मास्यकृते चकार मुनिराट्--तत्प्रार्थनस्वीकृतिम् ॥१३१॥

व्याख्याने शतशः स्त्रियश्च पुरुषा आगत्य लाभं परं,
लग्ना लातुमनारतं गुरुवराऽऽस्यात्पूर्णचेन्द्राद्भृशम् ।

निर्गच्छत्सुकथाऽमृतं कति--भवोद्भूताऽघ--गोत्राऽशनिं,
सम्पीयाऽखिल--सज्जनाः समभवन् हर्षाब्धिमग्ना अलम् ।१३२।

ज्ञाताधर्मकथाऽऽत्मकश्च ललितं सूत्रं हि प्रत्याहिक--
व्याख्याने समवाचयद्गुरुवरो मेधाऽऽरवाऽऽभ--स्वनैः ।
नानादुष्कर--सत्तपो विदधिरे सम्यक्त्वमापुः परे,
भूयिष्ठाः सुजना अनेकनियमानादुश्चतुर्मासके ॥ १३३ ॥

उपजातिः

प्रभावना नित्यमवण्टयच्च,
सन्नालिकेराऽऽदिभिरादरेण ।
नैकप्रकारी समभूच्च पूजा,
स्वधर्मिवात्सल्यमपीह नैकम् ॥ १३४ ॥

पन्यासभाग् दानमुनिश्च पन्या--
सो हर्षनामा मुनिराजकश्च ।
गम्भीर- शान्ती विजयौ च मुक्तिः,
श्रीराजनामा तिलको मुनिश्च ॥ १३५ ॥

श्रीमानसाधूदयसाधु--धीर--
मनोहराः सुश्रमणाश्च सम्पत् ।
इत्यादिशिष्या गुरुवर्य--पार्श्वे,
विचक्षणाः सद्गुणिनः किलाऽऽसन् ॥ १३६ ॥

वसन्ततिलका

पन्यास हर्षविजयं मतिमद्विनीत-
मानाऽभिधं प्रहितवानुभकाविमौ सः ।
हाजापटेल-इतिनामक-पोल-पन्थी-
योपाश्रये जलद-कालिकवासहेतोः ॥ १३७ ॥

श्रीशान्तिसाधुमुदयाऽऽदिकसाधुयुक्तं,
डेलाभिधप्रथित-रम्य उपाश्रयेऽपि ।
तत्रत्य-सर्वजनता-विपुलाऽऽग्रहेण-
प्रैषीत्पयोदसमयं व्यपनेतुमीड्यः ॥ १३८ ॥

औपच्छन्दसिकम्

पाडापोलाऽधिवासकर्ता,
कालिदास-मलिचन्द्र इभ्यमुख्यः ।
अचीकरच्चोपधानमेषे,
धवलदले दशमीतिथौ सुधर्मा ॥ १३९ ॥

तदङ्गभूतं यथोक्तरीत्या,
नवपद-मन्त्रमुपासिसच्च सर्वैः ।
तत्रैकदिने तपस्विनस्ते,
समुपोष्य परदिने च भुञ्जते हि ॥ १४० ॥

गीतिः

तदपि सकृदेव विकार-षट्कैर्धृताऽऽदिभिः परिवर्जितञ्च ।
इत्थमेव तदवसान-दिनाऽवधि क्रियते तदनुष्ठाने ॥ १४१ ॥

उपगीतिः

उपधानतपसोऽन्यत्र, भवन्ति तानि षडपि हेयानि ।
उपधानेऽपक्कमेव, हेयं न हि तत्कृतमिष्टाऽऽदि ॥१४२॥

शार्दूलविक्रीडितम्

इत्थं बाण-हयाऽङ्क-चन्द्रतुलिते १९७५ संवत्सरे चाऽमदा-
वादे भूरिमहामहेन समभूत् प्रावृट्चतुर्मासिका ।
लूवाराऽभिध-पोलकीय-रमणीयोपाश्रये सद्गुरो-
र्नानाधार्मिक-कृत्यमत्र सुजनाश्चक्रुस्तदादेशतः ॥ १४३ ॥

अर्हच्छासनदीपयत्सुविदुषां सर्वाऽऽगमज्ञानिनां,
षट्त्रिंशद्गुणधारिणामतिशय-स्वाचार-सम्पालिनाम् ।
सद्वादि-द्विरदाऽतिगर्व दलने पञ्चाननानामिह,
द्वन्द्वातीतमहात्मनां सुयमिनामत्यन्ततेजस्विनाम् ॥१४४॥

उपजातिः

आचार्य इत्युच्चपदं प्रदातुं,
सुपद्धतिश्चाऽपि चिरन्तनीह ।
वर्वर्त्ति पूर्वं खलु भारतेऽस्मिन्,
प्रतिस्थलं धार्मिकवैजयन्ती ॥ १४५ ॥

परिस्फुरन्ती परितः किलाऽऽसीत्,
सदाऽर्हतानामतिकोविदाश्च ।

युगप्रधाना जनता च जैनी,
स्वधर्म-रक्षाकृतयेऽयतन्त ॥ १४६ ॥

भूपाल-संसद्यतिमात्रमेते,
निजाऽद्भुतां शक्तिमपि प्रदर्श्य ।
तदीय-साहाय्यतया स्वधर्मं,
तीर्थांश्च लोके परितत्रिरे च ॥ १४७ ॥

कोटि-प्रमाणा जनता च जैनी,
स्वधर्मसंस्था गुरुदेव-भक्ता ।
महासमृद्धा विपुल-प्रभावा,
व्यापार-सौन्नत्यवती च तर्हि ॥ १४८ ॥

युगप्रधानाः कलिकाल-सर्व-
ज्ञ-हेमचन्द्राऽभिध-सूरिवर्याः ।
कुमारपालाऽभिध-गुर्जरेशं,
प्रबोध्य चक्रुः परमार्हतं हि ॥ १४९ ॥

श्रीहीरसूरिः श्रुत-सागरस्य,
पारङ्गतः सर्वजगत्प्रसिद्धः ।
दिल्लीपतिं यावन-जातिमन्त-
मकब्बराख्यं प्रभु-बादशाहम् ॥ १५० ॥

चिराय सम्यक् प्रतिबोध्य जैन-
धर्मप्रभावं बहुधा प्रदर्श्य ।

हिंसा-पिशाचीं निरवासयच्च,
देशादमुष्मात्सकलात्तदानीम् ॥ १५१ ॥
( युग्मम् )

इन्द्रवंशा

काले त्विदानीमिह वीर--शासने,
तेजस्विनां शास्त्रविदां विशेषतः ।
निर्दोष--चारित्रवतां प्रभाविनां
श्रीमद्गुरूणां बहुधाऽस्त्यभावतः ॥ १५२ ॥

प्रत्येकपुर्यां प्रबला विरुद्धता,
धर्मस्य हानिर्गुरुभक्ति--हीनता ।
बाहुल्यतो दुर्मतिकाऽऽत्म--मित्रता,
मिथ्यात्विधर्माऽधिक--लोकमान्यता ॥ १५३ ॥

कालेऽधुनाऽत्यन्त--भयङ्करेऽप्यसौ,
श्रीमान् प्रविद्वान् कतिशास्त्र--पारगः ।
कामाऽऽदि--षट्काऽऽन्तर--वैरि--जित्वरः,
तेजिष्ठ--संसार--समुद्र--तारकः ॥ १५४ ॥

व्याख्यान--वाचस्पतिरेष सद्गुरुः,
पन्यास--नीतिर्विजयो मुनीश्वरः ।
कायेन वाचा मनसा च सर्वदा,
धर्मं सुतीर्थानि च शेश्रयीति सः ॥ १५५ ॥
( युग्मम् )

उपजातिः

जितेन्द्रियो धन्यतमो महात्मा,
यतो यतो याति ततस्ततोऽयम् ।
चिरस्थितं चापि मिथो विरोधं,
व्युच्छिद्य मैत्रीं जनयत्यवश्यम् ॥ १५६ ॥

गीतिः

असौ दातुमाचार्य--पदवीमुच्चैरनुयोगाऽऽचार्यः ।
पन्यास--"भाव"विजयः, श्रीमदेष तद्गुरुः प्रार्थनीयः ॥१५७॥

आजन्म ब्रह्मचारी, महाव्रती षट्त्रिंशद्गुणधारी ।
कालिकोत्कालिक-सूत्र-योगोद्वाही सकलाऽऽगमकुशलः॥१५८॥

ईदृक्तदर्ह--मुनिरा--जाऽऽचार्य--पद--प्रदान--महिमानम् ।
चेत्क्रीयन्ते भक्त्या, पनीपद्यन्ते ते महापुण्यम् ॥ १५९ ॥

इत्थं श्राद्धा विज्ञा, निर्णीय गुर्वन्तिकं समाययुः ।
जगदुर्मानस--भावं श्रीमता गुरुणाऽपि सहर्षममानि ॥१६०॥

उपजातिः--

जगाद हृष्टो गुरुवर्य एवं,
भव्या ! यदीदृग्बहु--लाभदायि ।
कृत्यं शुभं वाञ्छथ तेन मन्ये,
समीहितं सेत्स्यति वो ह्यवश्यम् ॥ १६१ ॥

तोटकम्

अनुमोदनमस्य करोमि मुदा,
कथयामि मनोरथ-मुच्चमिदम् ।
परिपूरयितुं सकला नचिरं,
तदपेक्षितमानयतोपकृतम् ॥ १६२ ॥

गुरुराज--गिराऽमित--मोदमिताः,
शुभ--कुङ्कुमपत्रमशेषपुरम् ।
व्यतरन् पुरवासिजनाः सकला-
स्तदपेक्षित--सम्भृतमप्यखिलम् ॥ १६३ ॥

उपजातिः

आनीय-पन्न्यास-मुनीश-नीत्या-
चार्याऽऽसनाऽऽरोपण-सत्सवाय ।
पुरेऽखिले तत्र महापथाऽऽदौ,
सत्तोरणादीनि बबन्धुरुत्काः ॥ १६४ ॥

हरित्सित-श्यामल-रक्त-पीत-
परिस्फुर-चीन-पट-ध्वजांश्च ।
चतुष्पथोपाश्रय-रथ्यकासू-
दश्रायन्ताऽखिल-पण्यवीथ्याम् ॥ १६५ ॥

उपगीतिः

मगनलाल-ठाकरसी-प्रेमचन्द-साकलचन्दश्च ।
सौत्रिक-भगु-चुनिलालो, वाडीवांश्छगनलालाऽऽख्यः ।१६६।

मणिलाल साकलचन्द, इभ्य-शान्तिकुमाराऽभिधश्च ।
जगाभाइ-उमाभाइ, साकलचन्द-मोहनलालौ ॥ १६७ ॥

झवेरी डाह्याभाइ-रूपचन्दाऽभिधः श्रेष्ठी च ।
मणिलाल-मोतीलाल, इत्याद्यनेक-राजनगरस्थाः ॥१६८॥

ग्रामान्तरोपयाता, अपि कति श्राद्धाः श्राविकाश्च ।
सुश्रमणा अपि सर्वे, साध्व्योऽप्युपतस्थिरे सर्वाः ॥ १६९ ॥

( चतुर्भिः कलापकम् )

इत्थं चतुर्विधश्री-संघसमक्षं राजनगरे ।
पद्-स्वर-नन्द-शशाङ्के, हायने सहसि धवलपक्षे ॥ १७० ॥ [१९७६]

विश्वतिथौ शुभलग्ने, तुङ्गस्थानगताऽधिक खेटे ।
श्रीमदनुयोगाचार्य-पन्यास-भावविजयगुरवः ॥ १७१ ॥

तदुदित-कृत्यमशेषं, प्रविधाय-सौव-करकञ्जेन ।
भानु-विभासुरमेत-च्चरितपति-शासन-धुरन्धरम् ॥ १७२ ॥

उपजातिः—

पन्यास-नीत्याख्य-मुनीशमुच्चै-
राचार्यपट्टे ह्यभिषिच्य सम्यक् ।
न्यधुश्च तन्मूर्ध्नि सुवासचूर्णं,
चतुर्विधैः संघजनैश्च सत्रा ॥ १७३ ॥

( चतुर्भिः कलापकम् )

पृथ्वी

ततः सदसि सद्गुरुर्विजय-नीतिसूरीश्वरो,
विनम्र-वपुरुज्ज्वल-च्छविरुदार-वाचा मुदा ।
प्रपद्य पदमीदृशं जगति वः समेषा-मृणी,
बभूव (भवामि)सुजनास्तथा सकल-शासनस्याऽप्यहम् ।१७४।

तदीय-परिशुद्धिता-करण--शक्तिमन्तं हि मां,
करोतु जिनमण्डली सकल--सिद्धि--ऋद्धि--प्रदा ।
सदेति परिवश्म्यहं पदमिदं बिभर्तुं च भोः !,
न मेऽस्ति खलु योग्यता यदपि तर्ह्यपीत्वा पदम् ॥१७५॥

समग्र--जिनशासने प्रसृत--भेदभावाऽऽदिकं,
विनाश्य बहुमित्रतां जनयितास्मि चाऽहं यदा ।
स्वधर्म-परिवर्धनं सकलतीर्थसंरक्षणं,
तदैव मयि शोभितं विभविता किलैतत्पदम् ॥ १७६ ॥

( युग्मम् )

उपजातिः

न चाऽस्ति यावज्जनतैक्यता हि,
तावच्च सिद्धेर्दुरवापतैव ।
पुराऽत्र वर्षे खलु भारते हि,
संख्याऽस्ति कोटिः परमाऽऽर्हतानाम् ॥१७७॥

कालप्रभावादपचीयमाना--
ऽवशिष्यते सम्प्रति लक्षसंख्या ।
तत्राऽपि साधोरटनोपदेशा--
द्यभावतः प्रत्यहमेव जैनाः ॥ १७८ ॥

भवन्त्यजैनाः कतिथाश्च मूर्खाः,
स्वधार्मिक--ज्ञान--विवर्जितत्वात् ।
अत्यन्तमेवैतदशेष--जैन--
साधूनवश्यं त्रपयत्यनल्पम् ॥ १७९ ॥ (युग्मम्)

एधेत चेज्जैनिकसद्गृहस्थः,
श्रद्धां च दध्यादिह जैनधर्मे ।
तर्ह्येव जायेत मुनेरपीह,
सत्कारवृद्धिर्जनतासु नूनम् ॥ १८० ॥

अतश्च जैनश्रमणैरशेषै--
स्तत्तत्प्रदेशेषु विहृत्य सर्वे ।
शुद्धोपदेशैः प्रतिबोध्य तेऽपि,
कार्या अवश्यं निजधर्मरक्ताः ॥ १८१ ॥

तथा कृते सर्वजनाऽनुकम्पा,
मिथश्च मैत्री हृदयेऽनुरागः ।
वर्धिष्यते धर्मसमुन्नतिश्च,
लोकेष्ववश्यं भवितेति मन्ये. ॥ १८२ ॥

श्रीमच्चरित्राऽधिपतेरमुख्य-
हाचार्यपट्टार्पण-सुप्रसङ्गे ।
लुवारपोलस्थ गरिष्ठ-सूपा-
श्रयस्य नेतार उदारचित्ताः ॥ १८३ ॥

सद्बुद्धिशाली स हि कालिदास-
मलीचन्द इभ्यश्च बहुव्ययेन ।
आष्टाहिकं चारुमहामहं च,
प्रारेभिरे मोदभरेण तत्र ॥१८४॥ (युग्मम्)

मालिनी

समवसरणमस्मिन् रम्यदृश्यं प्रशस्यं,
व्यरचि सकल-चित्ताऽऽनन्ददायि प्रकामम् ।
समभवदिह शान्तिस्नात्रपूजाऽपि रम्या,
तदधिकमहिमानं सर्व इत्थं प्रचक्रुः ॥ १८५ ॥

उपजातिः

नानापुराऽऽयात-मनुष्य-सप्त-
सहस्र-संख्या व्यजनिष्ट तत्र ।
पन्यास-भावाऽभिध-सद्गुरूणां,
शारीरिकाऽस्वस्थतया चिरेण ॥ १८६ ॥
तत्रैव संघ-प्रचुराऽऽग्रहेण,
तर्काऽग-निध्येक-मितेऽपि वर्षे । [१९७६]

सवार्षिकं मास–चतुष्कमेष,
व्यत्यैच्च तत्रैव महामहेन ॥ १८७ ॥

नैकप्रकारी कियती जिनाऽर्चा,
प्रभावना श्रीफल–शर्कराऽऽद्यैः ।
तपांसि भूयांसि कियद्विधानि,
स्वधर्मि–वात्सल्यमपि प्रभूतम् ॥ १८८ ॥

गीतिः

इच्छाचन्द्रतनूज–श्छगनलाल इभ्यवरः शुभकर्मा ।
कारितवानुपधानं, कतिभिः श्रावकः श्राविकाभिश्च ॥१८९॥

उपजातिः

प्रान्ते च मालापरिधापनीयो,
महामहस्तत्र बभूव चारुः ।
चक्रे निजाऽर्थ–व्ययमेष भूरिं,
सत्पुण्यशाली बहुमाव युक्तः ॥ १९० ॥

शिखरिणी

उपाध्यायः श्रीमान् विविधगुणशालीमुनिदया,
सुपन्न्यासौ हर्षाऽभिध–सुमुनि–दानौ वर–धियौ ।
विनीतौ सद्धीमन्मुनि–तिलक–मानौ सविजया–
विहाऽऽसीत्कल्याण–प्रमुख उपसूरि प्रणयवान् ॥ १९१ ॥

उपजातिः

अवाचयच्चाऽत्र विपाकसूत्रं,
श्रोतार आसन्नमिताश्च नित्यम् ।
महायशाः श्रीयुत-नीतिसूरी-
श्वरो जगत्यामतिपूजनीयः ॥ १९२ ॥

तोटकम्

विहरन्नत एष गुरुर्लिमडी-
वढवान-पुराऽऽदि-कियन्नगरीः ।
समुपेत्य जनानुपदेश-सुधा-
मतिपाय्य भृशं क्रमशः ससुखम् ॥ १९३ ॥

इन्द्रवंशा

सिद्धाचलं प्रापदुदारकीर्तिको,
बेण्डाऽऽदि-निःशेष-सुवाद्य-घोषणैः ।
बाधिर्यमत्यन्तमशेषदेहिनां,
नेनीयमाने रमणी-सुगायनैः ॥ १९४ ॥

पीतैर्हरिद्भिर्धवलैश्च लोहितैः,
सद्वैजयन्तीनिकरैः समुच्चकैः ।
साम्मुख्यमेषां व्यदधुश्च नागरा,
लोकाः सहस्रं पुरमाविशच्च तैः ॥ १९५ ॥
( त्रिभिर्विशेषकम् )

श्रीसंघ-बह्वाग्रह-हेतुनाऽत्र,
सप्तर्षि-निध्येकं-शरद्यसौ सः । [१९७७]
चरित्रनेता चतुरश्च मासान्,
वस्तुं विनिश्चित्य उदार-बुद्धिः ॥ १९६ ॥

सत्तीर्थयात्रोपरि नित्यमेष,
व्याख्यानमोजस्वितरं ददानः ।
तच्छृण्वतां नित्यमपूर्वमेव,
संख्या समासीन्महती जनानाम् ॥ १९७ ॥

श्रीमानुपाध्याय-दयाविजिच्छ्री-
पन्यासभाग्दानविजिच्च पूज्यः ।
पन्यास एषो मुनि-मुक्तिनामा,
राजाऽभिधानस्तिलको मुनिश्च ॥ १९८ ॥

श्रीमाननामा मतिशालि-कल्या-
ण-सम्पदाद्या उपसूरि चाऽऽसन् ।
श्रीगौरवाङ्घ्रयब्ज-पराग-सेवा-
रता मिलिन्दा अखिलाः सुशिष्याः ॥ १९९ ॥

अवाचयत् प्रत्यहमुत्तराध्य-
यनं सुवाचा वर-सूत्रमेषः ।
सिद्धाऽद्रि-माहात्म्यमतिप्रबोध-
प्रभावशाली स हि नीतिसूरिः ॥ २०० ॥

श्रीमन्मुनीनामिह वाचनाऽपि,
प्रदीयमाना प्रतिधस्नमेव ।
मुक्तिर्मुनिः श्रीतिलकाऽभिधश्च,
मासोपवासं परिचक्रतुश्च ॥ २०१ ॥

आष्टाहिकं ते क्षपणं कियन्तः,
केचिद् व्यधुः षोडशवासरीयम् ।
इत्थं ह्यनेके गृहिणोऽपि तत्र,
तपांसि चक्रुर्बहुदुष्कराणि ॥ २०२ ॥

प्रमुदितवदना

समवसरण-निर्मितिः सुन्दरा,
समजनि जनता-मनोहारिणी ।
उपगत--जन- लोचनाऽऽनन्ददा,
सकल--कलुष--नाशिनी--देहिनाम् ॥ २०३ ॥

मन्दाक्रान्ता

शान्तिस्नात्रं सकल--शुभदं शुद्धनानोपचारै--
र्भक्त्या चक्रे भविकजनता ह्यर्हतां भूरिभावैः ।
नानाजन्म--प्रचित--वृजिन--क्षायकं शर्मदायं,
लक्ष्मीलीलाजनकमिह हि प्राणिनां भक्तिभाजाम् ॥२०४॥

गीतिः

कोचीनपुरनिवासी, जीवराज-धनजीमहेभ्यवर्यः ।
कारितवानुपधानं, सुश्राद्धैः श्राविकाभिश्च कतिभिः ॥२०५॥

अवसाने तद्व्रतिनां, सुमहेन मालाश्च परिधापितवान् ।
स हि विजय-"नीति"सूरिः, श्रीमान् स्व पर-समय-विचारचुञ्चुः

जैनसेवासमाजा-ऽभिधमण्डलीमिह पादलिप्तपुरे ।
संस्थाप्येतो व्यहरत्, रैवत-गिरि-दिशि सपरिकरश्चाऽयम् ।२०७।

उपजातिः

विहृत्य तस्मादयमाजगाम,
स कुण्डलाऽऽख्यं नगरं गरीयान् ।
महोत्सवेनैष पुरं प्रविश्य,
ववर्ष सद्धर्म्यकथाऽमृतानि ॥ २०८ ॥

ततो विहृत्याऽऽगतवान् स ऊना-
पुरीमिहत्या अखिलाश्च लोकाः ।
बेण्डाऽऽदि-वादित्र-निनादपूर्व-
मागत्य साम्मुख्यमवेशयन्त ॥ २०९ ॥

चिरन्तनीयं नगरी किलाऽत्र,
श्रीहीरसूरिर्जगति प्रसिद्धः ।
कृत्वा चतुर्मासिकवासमन्त्यं,
धामभ्यगच्छत्तनुमत्र हित्वा ॥ २१० ॥

यस्मिन् वने तस्य शवं पवित्रं,
श्राद्धा अधाक्षुः खलु तद्वनस्थाः ।
आजन्म वन्ध्या अपि चौतवृक्षा-
स्तद्दाहयस्मात्फलितुं प्रलग्नाः ॥ २११ ॥

प्रस्थाय तस्माद्गतवानजारा-
श्रीपार्श्वनाथ-प्रभु-दर्शनाय ।
अजेन राज्ञा प्रभु-बिम्बमेतत्,
संस्थापितं चैत्यमिदं विधाय ॥ २१२ ॥

तद्दर्शनं चैष विधाय भक्त्या,
मुहुर्मुहुस्तत्प्रणतिं प्रकुर्वन् ।
निःसीममानन्दमयं बभार,
चित्ताऽरविन्दे चरितस्य नेता ॥ २१३ ॥

प्रबोध्य लोकान् भविकांश्च तस्मात्,
प्रयाय शिष्यैर्गुरुभिश्च सत्रा ।
प्रभासपूर्वं स हि पट्टणं हि,
प्रपेदिवानत्र महाजनाश्च ॥ ॥ २१४ ॥

वादित्र-वृन्दध्वनिभिश्च गीतैः,
सीमन्तिनीनां जयनादपूर्वम् ।
प्रावीविशन् सूरिवरोऽपि तत्र,
धर्मोपदेशं ददिवान् प्रशस्यम् ॥ २१५ ॥

सन्त्यत्र चैत्यानि पुरातनानि,
भास्वन्ति दिव्यानि नवानि तानि ।
महीभुजा सम्प्रतिसंज्ञकेन,
संस्थापितानीति जना वदन्ति ॥ २१६ ॥

जैना जनास्तत्र शतं वसन्ति,
सद्धर्मनिष्ठा गुरुदेवभक्ताः ।
इतो विहृत्याऽऽगमदेष वेरा-
वलाऽभिधं पत्तनमत्र पौराः ।
वाद्याऽऽदिभिश्चाऽभिमुखं समेत्य,
प्रावेशयन् स्वं पुरमादरेण ॥ २१७ ॥

संसार-दुष्पार-समुद्रतारं,
हुताऽशनं पापसमिन्धनानाम् ।
व्याख्यानमोजस्वितरं प्रदाय,
सेवारामाजं समतिष्ठिपच्च ॥ २१८ ॥

इतः प्रयातः समुपाजगाम,
जूनागढं स्थानमतीव रम्यम् ।
सार्धं च पौरैर्बहुभिर्हि लोकै-
स्तूर्यप्रणादैः पुरमाविवेश ॥ २१९ ॥

इन्द्रवंशा

सूरीश्वरस्तत्र विशेषदेशनां,
पीयूषकल्पां घन-रावजिद्गिरा ।

आरब्धवान् पर्षदि सर्वसम्मतां,
नाना-भवोपार्जित-पापनाशिनीम् ॥ २२० ॥

उपजातिः

व्यतीत्य घस्रान् कियतश्च तत्र,
चरित्रनेता सह शिष्यवर्गैः ।
आरूढवान् रैवत-पर्वतोप-
रिष्टाच्च यात्रार्थमुदारभावः ॥ २२१ ॥

कृत्वाऽर्हतां दर्शनमीडयित्वा,
पुनः पुनस्तत्प्रणतिं विधाय ।
दिव्यानि चैत्यानि च संविलोक्य,
व्यचिन्तयच्चेतसि सूरिराजः ॥ २२२ ॥

महाकृती कोऽपि पुमान् पुराऽत्र,
भूरिव्ययैरीदृश-मन्दिराणि ।
निर्माप्य लक्ष्मीमुपयुक्तवान् हि,
संलब्धवानव्यय-सद्यशश्च ॥ २२३ ॥

तदीयरक्षाऽद्यतनीयसर्वै-
र्जैनैरवश्यं सततं विधेया ।
अत्यन्त-जीर्णीभवदेतदीय-
समुद्धृतिं चेदधुना न कुर्यात् ॥ २२४ ॥

श्रद्धालुकः कश्चन इभ्यवर्य-
स्तद्ध्याशु नश्येदसकौ सुतार्थः ।
चिरन्तनस्तन्मयकैतदर्थ-
मरं विधेयः खलु कोऽपि यत्नः ॥ २२५ ॥
(युग्मम्)

सन्तिष्ठमानस्य सुखेन तत्र,
समस्त-वेरावल-सङ्घकीयम् ।
आमन्त्रणं वार्षिकवासहेतो-
रुपागमत्सूरिवरस्य पार्श्वे ॥ २२६ ॥

तदीयमत्याग्रहपूर्ण-मङ्गी-
चकार सूरीश्वर एषकोऽपि ।
लाभस्य तत्राऽधिकतां विदित्वा,
शान्तः प्रदान्तः करुणामयः सः ॥ २२७ ॥

संस्थाप्य तत्राऽपि च सूरिराजः,
सेवासमाजं जनता-हिताय ।
सम्प्रस्थितस्तत्पुरतः सशिष्यो,
वेरावलाऽऽख्यं पुरमाजगाम ॥ २२८ ॥

गुर्वागमात्पौरजनाः प्रहृष्टा,
बेण्डाऽऽदि-निःशेष-विशेष वाद्यैः ।

नदद्भिरुच्चैः सह शङ्खनादैः,
पीनस्तनीनां वर-कामिनीनाम् ॥ २२९ ॥

सद्रागवद्धैर्मधुरैश्च गीतै-
रागत्य तस्याऽभिमुखं समस्ताः ।
श्रीमन्तमेनं मुनिराज-नीति-
सूरीश्वरं स्वं पुरमानयन्त ॥ २३० ॥ (युग्मम्)

वसन्ततिलका—

जीमूत-नाद-परिजित्वर-मिष्ट-वाचा,
जीर्णोद्धृताऽऽदि-विषयोपरि सूरिमुख्यः ।
सद्देशनां परिददत्समुपादिदेश,
श्रीरैवताऽद्रि-वर-तीर्थ-समुद्धृतिं सः ॥ २३१ ॥

स्वीकुर्वते यदिह धीर-महापुमांसः,
प्राणान्तिकेऽपि तदमी न हि सन्त्यजन्ति ।
सम्पादयन्ति तदवश्यमनेकयत्नै-
र्येत्तादृशी प्रकृतिरेव महाजनानाम् ॥ २३२ ॥

जूनागढ-क्षितिप-मन्त्रिवरोऽपि तर्हि,
तत्राऽऽगमत् परमधार्मिक-कृत्यकारी ।
वेरावले त्रिभुवनाऽऽदिक-दास-दूले-
रायः प्रसिद्धपुरुषो गुरु-देव-भक्तः ॥ २३३ ॥

उपजातिः

तत्रत्य-सुश्रावक-देवकर्ण-
खुशालचन्द्राऽभिधकस्य गेहे।
वैवाहिकश्चारुमहाश्च(वर्यः),
प्रावर्तताऽस्मिञ्छुभ-सुप्रसङ्गे ॥ २३४ ॥

चैत्येऽपि सञ्छ्रेष्ठिवरस्तदर्थं,
चकार पूजां महतीं जिनस्य।
समागमन्मन्त्रिवरोऽपि तस्या-
माचार्यवर्योऽपि तदाग्रहेण ॥ २३५ ॥

तदैतदाचार्यवर-प्रणुन्न-
स्तत्रत्य-संघोऽवसरं च लब्ध्वा।
इत्वा तदभ्याशममुं ययाचे,
रेमन्त-जीर्णोद्धृति-कर्तु(द्धरणार्थ)माज्ञाम् ॥२३६॥

भुजङ्गप्रयातम्

समूचे च मन्त्री भवन्तो हि जूना-
गढं ह्येत तत्राऽहमेतन्नवाचम्।
समापृच्छ्य दास्ये विविच्योत्तरं वः,
प्रयत्नं तदर्थं स इत्थं प्रचक्रे ॥ २३७ ॥

अतश्चैव हेतोश्चतुर्मासिवासः,
क्षमाभृद्द्वयाऽङ्केन्दु-मानेऽपि वर्षे।

बभूवाऽस्य वेरावले पत्तने हि,
महाधर्म-कार्यं चिकीर्षोश्च सूरेः ॥ २३८ ॥

शिखरिणी

महोपाध्यायः श्रीसविजय-दयाऽऽख्यो मुनिवरो,
मुनिःश्रीकल्याणः सकल-जन कल्याणजनकः ।
मुनिः श्रीमान् सम्पद्विजय-मुनि-मुक्तिश्च विजयोऽ-
प्यमीभिर्धीमद्भिः सकल-मुनिगुण्यैः श्रिततरः ॥ २३९ ॥

भुजङ्गप्रयातम्

प्रभास-प्रयुक्तं पुरं पट्टणं हि,
समागाद्विहृत्याऽसकौ तत्पुराच्च ।
इहाऽनेक-जातीय वादित्रनादैः,
पुरं प्राविशत्सूरिराजः सशिष्यः ॥२४०॥ (युग्मम्)

उपजातिः

गुहास्थितः सिंह इवाऽसकौ हि,
सभास्थितो विश्व-जनीनसूरिः ।
गर्जन् ददौ रम्य-सुधोपमानं,
धर्मोपदेशं सुचिरं जनानाम् ॥ २४१ ॥

तत्रत्य-सञ्जीर्ण-जिनाऽऽलयाना-
मुद्धारहेतोर्मुनिराज एषः ।

आदिश्य सर्वान् वसु-सञ्चयार्थं,
तत्रैकसंस्थां समतिष्ठिपत्सः ॥ २४२ ॥

तत्पत्तनीयास्त्वय इभ्यवर्याः,
तस्यां गशीषु-प्रमितं सहस्रम् ।
ददुश्च मुद्रा अतिदानिवर्याः,
संवस्तु वेदाऽक्षि-सहस्रमुद्राः ॥ २४३ ॥

तेषां कुसीदैरिह जीर्ण-चैत्यो-
द्धाराऽऽदिकृत्यं करणीयमाशु ।
प्रत्यब्दमेषामुपलेपनाऽऽदि,
कर्तुं व्यवस्थापि च सूरिणा हि ॥ २४४ ॥

मालिनी-

नव-मुनि-निधिचन्द्रे वत्सरे मार्गशीर्षे,
ह्यसित-दल-दशम्यां तत्र वेरावलेऽसौ ।
भुजपरनगरीयं मालसिंहस्य पुत्रं,
भव-विमुख-रवाऽऽख्यं दीक्षयामास सूरिः ॥२४५॥

रविविजयशुभाऽऽख्यां तस्य धृत्वा च चक्रे,
विबुध-मुनि-दयोपाध्यायशिष्यं ततोऽयम् ।
कृत-मह-सुविहारो मांगरोलं समागात्,
पुर-जन-बहुमोदाऽऽरब्ध-चारूत्सवेन॥ २४६ ॥

उपजातिः

पुरं प्रविश्यैष कुमारपाल-
नृपाल-चैत्यं ह्यभिवन्द्य दिव्यम् ।
भव्यांश्च लोकानुपदिश्य धर्मा-
श्चक्रे वरेजाऽभिध-तीर्थयात्राम् ॥ २४७ ॥

प्रस्थाय तस्मात्स हि पोरबन्दरं,
प्राजग्मिवानत्र जनैः सुसत्कृतः ।
पौराङ्गनान् धार्मिक-सत्कथाऽमृतैः,
सन्तर्प्य तस्मात् प्रविहृत्य सूरिराट् ॥ २४८ ॥

स्वागता

प्राप जामनगरं सह शिष्यै-
र्विश्व-वन्द्य-शरणाऽऽगत-पाली ।
वादिवृन्द-गज--यूथ--मृगेन्द्रो,
वीर--शासन--महावन--चारी ॥२४९॥ (युग्मम्)

नागरैर्विहित--चारुमहेन,
प्राविशच्च नगरीं प्रभुवर्यः ।
ज्ञान--मात्र--विषयोपरि भूरिं,
देशनामदित तत्र समीड्यः ॥ २५० ॥

वसन्ततिलका

प्रान्ते यदत्र विपुला निवसन्ति जैनाः,
कुत्राऽपि किन्तु निज--धार्मिक-शिक्षणाय ।

एकाऽपि नाऽस्ति नियतीकृत--पाठशाला,
तस्मादमी सकल- जैनिक- बालका हि ॥२५१॥

धर्मे निजे व्यवहृतौ विनयेऽनभिज्ञा,
मिथ्यात्विधर्म--रसिकाः क्रमशो भवन्तः ।
सद्देव--धर्म--गुरुभक्ति- रता न सन्ति,
तेनैव चैष गुरुवर्य उदारचेताः ॥ २५२ ॥

प्रान्तेऽत्र भूत--दँल -संख्यक—पाठशालाः,
आस्थापयत्समुपदिश्य जनाननंहाः ।
तत्रोपयुक्त--बहु—वित्तमपि प्रचित्य,
संस्थां तदर्थमसकौ समतिष्ठिपच्च ॥ २५३ ॥
( त्रिभिर्विशेषकम् )

उपजातिः——

यथावदेताः प्रचलन्ति सर्वा,
अद्याऽपि जैनाः शिशवोऽप्यनेके ।
अधीत्य तासु व्यवहार—दाक्ष्यं,
धर्मेऽप्यभिज्ञत्वमुपेयिवांसः ॥ २५४ ॥

वसन्ततिलका

इत्थं ह्यसीममुपकृत्य विहृत्य तस्मा—
दभ्याययौ परम—पावन—रैवताऽद्रिम् ।

सानन्दमेष सह साधुगणैश्च तत्र,
यात्रां व्यधात् परमयाऽचलया च भक्त्या ॥२५५॥

इन्द्रवज्रा

आगुश्च गोविन्द-खुशालमुख्या,
वेरावलादन्यजनाः कियन्तः ।
तन्मन्त्रिणः पार्श्वमुपेत्य तस्मा-
ज्ज्ञात्वा तदादेशमतिप्रहृष्टाः ॥ २५६ ॥

उपजातिः

युगप्रधानस्य महीयसोऽस्य,
श्रीनीतिसूरेरुपगत्य पार्श्वम् ।
तत्कार्य-सिद्धिं कथयाम्बभूवुः,
श्रुत्वा भृशं सम्प्रससाद सूरिः ॥ २५७ ॥

प्रारेभिरे तत्र सुजीर्ण-चैत्यो-
द्धारं ततः सर्वजनास्तदर्थम् ।
श्रीमन्तमेनं मुनिराज-सूरी-
श्वरं चतुर्मासमिहैव कर्तुम् । ॥ २५८ ॥

व्यजिज्ञपन् सोऽपि सुलाभ-हेतो-
स्तत्रैव जूनागढ-पत्तने हि ।
प्रावृष्यतिष्ठन्नव-वाजि-रन्ध्र-
ग्लौ-संमिते [१९७९] विक्रमराजवर्षे॥ ॥ २५९ ॥(युग्मम्)

आर्यागीतिः——

आषाढ-शुक्लपक्षे, चतुर्दशीतः प्रागेव जीर्णोद्धृतेः ।
स्थानमपि विनिश्चेतुं, तत्र सम्भावित-व्ययमपि परिच्छेत्तुम् ।
समुपादिदेश संघं, तदाय-व्ययाऽऽदिसन्दर्शिनीमेकाम् ।
समतिष्ठिपच्च समितिं, सैव सकलमपि कार्यं कर्तुं लग्ना ॥२६१॥
(युग्मम्)

श्रीमान् जूनागढीय-वाष्प-यान-कार्यालयस्थानां मुख्यः ।
हुकुमचन्दज-डाह्याख्यः, सुश्रमेण तत्कार्यं सुगमं चक्रे॥२६२॥

वैतालीयम्

प्रतिनगरं कार्यकारिणी,
समितिरियं वितताऽर सूचनाम् ।
सुमुद्रितैश्चारुभिर्दलैः,
रैवत-गिरि-जिन-मन्दिरोद्धृतेः ॥ २६३ ॥

उपजातिः

सच्छ्रेष्ठि-गोविन्द-खुशालनामा,
कायेन वित्तेन गिरा च भूरि(रिम्) ।
सहायतां सर्वजन-प्रशस्यां,
चकार धीमान् परमाऽऽर्हतोऽस्मिन् ॥ २६४ ॥

औपच्छन्दसिकम्

एडन-नगरीय-सर्वसंघो,
द्विदश-सहस्रं प्रेषयाञ्चकार ।
मुद्राः प्रथमं हि तैश्च वित्तैः,
कार्यारम्भं कारयाम्बभूव ॥ २६५ ॥

कोचीन-वासि-बहुकीर्तिक-धर्मनिष्ठ-
श्रीजीवराज-धनजीत्यभिधानकेभ्यः ।
मुद्रा ददौ दशसहस्रमुदारचेता,
अद्याऽवधीत्थमिषुलक्षमुपैच्च सार्धम् ॥ २६६ ॥

वसन्ततिलका

प्रायः सनेममिह लक्षमपेक्ष्यते च,
तावद्भिरेव भविता परिपूर्णताऽस्य ।
तद्दानवीर-जिनशासन-दीप्तिकारी,
तत्तीर्थरागि-जनता नियतं प्रदाता ॥ २६७ ॥

एतद्वरिष्ठ-शुभकार्य-चिकीर्षयाऽसा-
वेतच्चरित्र-वरनायक-नीतिसूरिः ।
गुर्वाज्ञया न्यवसदत्र पयोदकाले,
सार्धं कियद्विबुध-शिष्यगणैर्विनीतैः ॥ २६८ ॥

अत्राऽशृणोत् प्रवयसः स्वगुरोः शरीरे,
तत्पट्टणे स्थितवतश्चतुरश्च मासान् ।

पन्यास–"भाव"विजयस्य विशेष बाधां,
श्रुत्वाऽपि गन्तुमशकन्न हि मेघकाले ॥ २६९ ॥

दुःखं भृशं ह्यनुभवन्निह संस्थितोऽयं,
धिङ्मां यदस्य चरमे समयेऽपि नाऽहम् ।
सेवां गुरोरकरवं न हि वा ह्य(प्य)पश्यं,
कालो बली यदिह वाञ्छति तद्विधत्ते ॥ २७० ॥

पन्यास–भावविजयो मुनिपुङ्गवो हि (वः स),
ह्यङ्क–स्वर–ग्रह–शशाऽङ्क–समान–वर्षे । [१९७९]
यातो दिवं नभसि कृष्णदले गिरीश–
जायातिथौ परममिष्टमनुं(नु) स्मरन् सः॥२७१॥

वंशस्थवृत्तम्

गुरोश्च स्वर्यानमतीव दारुणं,
निशम्य शोकाऽग्निरदीपि मानसे ।
तमेव तत्त्वाऽऽत्म–विचार–वारिणा,
चकार शान्तं बहुवेदिनां वरः ॥ २७२ ॥

व्यजेष्ट कालं न हि कोऽपि शक्तिमान्,
ध्रुवश्च मृत्युर्जगतीतले नृणाम् ।
करोति कर्ता कृतवांश्च संहृतिं,
करालकालो दुरतिक्रमो ह्ययम् ॥ २७३ ॥

तदर्थमत्राऽपि समस्त-सज्जनाः,
प्रचक्रिरेऽष्टाहमनेकमुत्सवम् ।
प्रभावना-पूजनकाऽऽदिनैकधं,
जगुश्च तत्पावन-सद्गुणाऽऽवलीम् ॥ २७४ ॥

शिखरिणी

महोपाध्याय-श्रीविपुल-मतिशाली-मुनि-दया-
महाशान्तः शान्तीत्यभिध-मुनिरत्यन्त-विनयी ।
मुनिश्रीकल्याणो गुरुविनयि-सम्पद्रविमुनी,
तपिष्ठाः सद्धीरा उपगुरु समासन् सुयमिनः ॥ २७५ ॥

शार्दूलविक्रीडितम्

ज्ञाताधर्मकथाऽभिधं प्रभुवरः सूत्रं पवित्रं परं,
व्याख्याने समवाचयत् प्रतिदिनं गोष्ठ्यां महत्यामयम् ।
पीयूषोपमया गिरा पुरजनास्तच्छ्रोतुमत्युत्सुकाः,
श्राद्धाः स्थानकवासिनोऽपि महता रागेण चाऽभ्याययुः ॥२७६॥

प्रान्ते तत्पुरतो विहृत्य सकलैः शिष्यैः समं सूरिराट्,
सिद्धाऽद्रिं समुपेत्य तत्र विधिवद्यात्रां विधायाऽसकौ ।
स्थित्वा चाऽ(त्र)कियद्दिनानि सुजनाऽत्यन्ताऽऽग्रहात् सज्जनान्,
स्वीयाऽमोघ-सुदेशनाऽमृतरसैः सन्तर्पयामास सः ॥२७७॥

गीतिः

अथ राजनगरनिवासी–सौत्रिक–चुनिलाल खुशालचन्दस्य ।
विज्ञप्त्या राजनगर–मायातवान् सूरीश्वरः श्रीमान् ॥ २७८ ॥

उपजातिः

आचार्यवर्यं नगरोपकण्ठे,
समेतवन्तं सकलाश्च पौराः ।
वेण्डाऽऽदिनानाविध–तूर्यघोषैः,
सुश्राविका–यूथ–सुमिष्ट–गीतैः ॥ २७९ ॥

विधाय साम्मुख्यममुष्य रम्यं,
सुसज्जितं तोरण–वन्धनाऽऽद्यैः ।
प्रवेशयामासुरतिप्रहृष्टाः,
पुरं विशालं जयनादपूर्वम् ॥ २८० ॥ (युग्मम्)

तद्देशनामाङ्गलिकीमपूर्वां,
संसार–दुःखाऽनल–वारिधाराम् ।
आकर्ण्य सर्वेऽधिक- भव्यजीवा,
निःसीममानन्दमपत्सतै(मवापुरे)त्रम् ॥ २८१ ॥

श्रेष्ठी चुनीलाल–खुशालचन्द–
श्चक्रे समुद्यापनहेतुकं हि ।
आष्टाहिकं चारुमहामहं स,
वस्रुत्तर–स्नात्र–समर्चनश्च ॥ २८२ ॥

श्रीस्वामिवात्सल्यमतिप्रशस्यं,
व्यधत्त भूरिद्रविण-व्ययेन ।
लुवारपोलीय उपाश्रयेऽसा-
वाचार्य-वर्यः समवस्थितैपः ॥ २८३ ॥

तदस्य सच्छ्रेष्ठिजनाऽऽग्रहेण,
वेण्डाऽऽदिवाद्येषु भृशं नदत्सु ।
उद्यापनाऽनन्तरमेष सूरि-
र्डेलाऽभिधोपाश्रयमाजगाम ॥ २८४ ॥

रेमन्त-शैलोपरि-जायमान-
सुजीर्णचैत्योद्धृति-फण्डमध्ये ।
दातुं यथाशक्ति महेभ्य-वर्गान्,
आचार्य-वर्यः कथयाञ्चकार ॥ २८५ ॥

संग्राह्य नैकेभ्य-सुदत्त-षष्टि-
सहस्रमुद्राः समितौ च तस्याम् ।
सम्प्रैषिपत्तत्र तदीयकार्यं,
जञ्जन्यमानं त्वरया किलाऽऽसीत् ॥ २८६ ॥

ततः सुलग्ने वलसाडवासि-
श्रीरायचन्द्रं मतिमन्तमेतम् ।
संदीक्ष्य तन्नाम-गुणेति चक्रे,
शिष्यो बभूवांश्चरितस्य नेतुः, ॥ २८७ ॥

दीक्षार्थिनं केशवनामधेयं,
सुश्रावकं गुर्जर-पट्टणस्थम् ।
सन्दीक्ष्य सूरिः कमलेतिनाम,
धृत्वा स्वशिष्यं कृतवांश्च तत्र ॥ २८८ ॥

शार्दूलविक्रीडितम्

इत्थं व्योम-वसु-ग्रहेन्दु-तुलिते सम्वत्सरे वैक्रमे,
साकं शिष्यवरैः स राजनगरे डेलाऽभिधोपाश्रये ।
चातुर्मास्यमसौ व्यधात् पुर-जनाऽत्यन्ताऽऽग्रहात्सूरिराट्,
धर्मोद्योतमचर्करीदतितरां भव्याङ्गनान् बोधयन् ॥ २८९ ॥

व्याख्यानेऽन्तगढा(डा)भिधं गुरुवरः सूत्रं पवित्रं मुदा,
मेघ-ध्वान-विजित्वराऽतिनिनदैः सार्थं समश्रावयत् ।
औत्सुक्यात्पुरवासिनश्च सकलाः श्राद्धास्तदन्या(न्ये) अपि,
श्रोतुं तच्च महार्थकं श्रुतिसुखं प्राजग्मुरत्यादरात् ॥ २९० ॥

आर्या-

पन्यास-मोहनविजय- सच्छिष्य-शान्तिविजयेन मुनिना हि ।
भगवतीसूत्रयोगं, तत्रोदवीवहच्च सूरिः ॥ २९१ ॥

योगोद्वहनमकृत्वा, नार्हति सूत्रं वाचयितुं साधुः ।
इत्यादिशन्ति सर्वे, शास्त्रकारा महर्षयस्ते ॥ २९२ ॥

गीतिः

इति तद्वहनं मुनयः, कुर्वते नैयत्येन सर्वदा हि ।
वाचयति तद्विना ये, भवन्ति तेऽवश्यं पापीयांसः ॥२९३॥

वसन्ततिलका

पन्यास-हर्षविजयो मुनि-शान्ति-मुक्ती,
सौशील्यशालि-मुनि-राजविजिच्च सद्धीः ।
कल्याणसाधु-रुदयो बहु-तीक्ष्णबुद्धि-
रासन् विनेयनिकरा उपसूरि तत्र ॥ २९४ ॥

गीतिः

राधनपुराच्च मशालि-या बापूलाल-यमुनादासस्य ।
आगतया विज्ञप्त्या, ततो विहृत्य राधनपुरमागतः ॥ २९५ ॥

उपजातिः

बेण्डाऽऽदिवादित्र-निनादपूर्वं,
समागताऽऽचार्यवरं च पौराः ।
विधाय साम्मुख्यमतिप्रशस्य,
प्रावेशयन्नात्मपुराऽन्तरेनम् ॥ २९६ ॥

मृगाङ्क-शैलाऽङ्क-महीमिताऽब्दे,
मासे च मार्गे स हि बापुलालः ।

उद्यापनं भूरिमहामहेन,
चकार सौवाऽर्थबहु-व्ययेन ॥ २९७ ॥

सूरीश्वरस्याऽस्य महोपदेशात्,
स्वर्गस्थ-पन्यास-पदाऽङ्कितस्य।
भावाऽभिधानस्य गुरोश्च नाम्ना,
सत्पाठशाला-करणाय तत्र ॥ २९८ ॥

तिथिप्रमाणं ददिवांश्च मुद्रा-
सहस्रमेतद्भवनाय चाऽपि ।
श्रीबापुलालो यमुनाऽऽदिदास-
पुत्रोऽयुतं ता अतिदानशु(शौ)ण्डः॥२९९॥(युग्मम्)

इतो विहृत्याऽऽगतवांश्च सूरिः,
सत्पट्टणाऽऽख्यं नगरं विशालम् ।
तत्रत्य-संघाऽतिशयाऽऽग्रहेण,
शेश्रीय्यमाणो बहुभिश्च शिष्यैः ॥ ३०० ॥

मालती

पटह-मृदङ्ग सुवेण्डवादनै-
र्घन-रव-जित्वर-नाद-कारकैः ।
युवति-कदम्ब-सराग-गायनैः,
सह पुरवासिजना उपागतम् ॥ ३०१ ॥

अभिमुखमेत्य धनाऽऽदरादमुं,
सकल-धरातल-पावकम्प्रभुम् ।
सुविहित सूरिमवीविशन् पुरं,
सुजन-सुलोचन-चन्द्रिकायितम् ॥ ३०२ ॥
(युग्मम्)

उपजातिः

स डङ्क-मेताऽभिध-पाटकीये,
सूपाश्रयेऽतिष्ठदतीवरम्ये ।
आचार्यवर्यः सह शिष्यवर्गै-
राष्टाहिकस्तत्र महोत्सवोऽभूत् ॥ ३०३ ॥

मालती

सुविहित-सूरि-वराऽऽननाऽब्जतः
क्षरदति-धार्मिक-देशनाऽमृतम् ।
भविकजनाः परिपीय सादरं,
हृदि सदनेऽमित मोदमादधुः ॥ ३०४ ॥

उपजातिः

ततोऽमकौ खेतरवासि-पाट-
कोपाश्रये संघ-महाऽऽग्रहेण ।
समाजगन्वान् प्रथित-प्रविद्वान्,
जिष्णुर्भविष्णुः स हि नीतिसूरिः ॥ ३०५ ॥

शान्तस्वभावाय सुधीवराय,
श्रीशान्तिनाम्ने मुनये सुधम्ने ।
प्रादत्त "पन्यास"पदं महीयान्,
सूरीश्वरस्तत्र महामहेन ॥ ३०६ ॥

पन्यास-भाजः सुधियो दयाऽऽरव्य-
मुनेरुपाध्यायपदं व्यतारीत् ।
तदर्थमाष्टाहिकमुत्सवं श्री-
सङ्घः समस्तः कृतवान् प्रहर्षात् ॥ ३०७ ॥

अथाऽऽगमद्रैवत-भूधरोप-
रिस्थे सुजीर्णोद्धृत रम्य-चैत्ये ।
दण्डध्वजाऽऽरोहण-कारणाय,
संघेन सम्प्रेषितमत्र सूरेः ॥ ३०८ ॥

पार्श्वे तडित्पत्रमतस्ततोऽसौ,
चरित्रनेता व्यहरत्सशिष्यः ।
समागमच्चाणर-नामधेयं,
पुरं ततस्त्याऽखिल-पौरलोकाः ॥ ३०९ ॥

बेण्डाऽऽदितूर्यैर्युगपन्नदद्भिः,
सुस्त्रीगणानामतिहारिगीतैः ।
पुरप्रवेशोत्सवमेतदीयं,
श्रद्धालवस्ते व्यदधुः प्रशस्यम् ॥ ३१० ॥

(त्रिभिर्विशेषकम्)

चिरन्तनस्तत्र विभ(भा)ग आसीत्,
संघे मिथस्तं बहुधा प्रयत्य ।
विनाश्य चैक्यं कृतवानयं हि,
समस्त-सङ्घे मुनिराजवर्यः ॥ २११ ॥

अव्याहत-स्वैर-विहारमित्थं,
विधाय जूनागढमाजगाम ।
सार्धेन मासेन सुखेन शिष्यैः,
साकं कियद्भिर्जगतीं पुनानः ॥ २१२ ॥

आरेभि(रे) तत्र पृथक् पृथक्ते,
सन्तः कियन्तो गृहमेधिनश्च ।
अपूर्वमाष्टाहिकमुत्सवं हि,
शैलोत्तर-स्नात्रमपि प्रशस्यम् ॥ २१३ ॥

श्रीस्वामिवात्सल्यमथोऽमुवीच्च,
दूराऽन्तिकाऽभ्यागत-यात्रिकाणाम् ।
उपस्थितिस्तत्र बभूव बह्वी,
गोष्ठी च जीर्णोद्धृतिकार्यकर्त्री ॥ २१४ ॥

सेवासमाजोऽपि विशेषरूपै-
स्तत्रत्य एषां व्यदधात्सुभक्तिम् ।
भू-शैल-भोगीन्द्र-मृगाऽङ्क[१८७१]वर्षे,
माघेऽसिते कंसजितश्च तिथ्याम् ॥ २१५ ॥

प्रारब्ध तत्रत्य-महाप्रतिष्ठा-
महोत्सवं फाल्गुन-शुक्लपक्षे ।
पृदाकुतिथ्यां कृतवान् समाप्तिं,
निर्विघ्नमेतच्चरिताऽधिनाथः ॥ ३१६ ॥ (युग्मम्)

तपस्य शुक्ले गिरिजा-सुतिथ्यां,
पाणी-पुरी वासि-मुमुक्षुमेतम् ।
संदीक्ष्य तस्मिञ्जगजीवनाऽऽख्यं,
कल्याणसाधोः कृतवांश्च शिष्यम् ॥ ३१७ ॥

गीतिः

भावनगरीय-महेभ्य-डोसाऽभयचन्दस्य सत्पीठिका ।
श्रीविजयनीतिसूरे-र्गिराऽचीकरच्च नवं ध्वजदण्डम् ॥३१८॥
तदारोहणे जनता-वोलिकोपचिताऽखिल-मुद्राः ।
तस्मिञ्जीर्णोद्धारे, समर्पयामासुरिभ्याश्च सर्वे ॥ ३१९ ॥

उपजातिः-

इत्थं प्रतिष्ठोत्सवमेषको हि,
समाप्य सूरिः सह शिष्यवर्गैः ।
समागमज्जैतपुरं विहृत्य,
प्रबोधयामास जनांश्च भव्यान् ॥ ३२० ॥

ततः समैद् गोण्डलनामपुर्यां,
सम्मानितः पौरजनैश्च तत्र ।
धर्माऽमृतं भूरि ववर्ष सूरि-
र्वारीणि जीमूत इवाऽनपेक्षः ॥ ३२१ ॥

मञ्जुभाषिणी--

सममेष शिष्य-निकरैर्विहृत्य वै,
सरधारपत्तनमियाय सूरिराट् ।
सकलाऽऽर्हतैश्च पुरवासिभिर्मुदा,
पटहाऽऽदि-तूर्य-निनदैः प्रवेशितः ॥ ३२२ ॥

स हि सूरिराज इह दत्तवांस्ततो,
भव-भीति-मोचन-करीं सुदेशनाम् ।
अमृतोपमां सदसि मिष्टया गिरा,
जनता निशम्य बहुहर्षिताऽभवत् ॥ ३२३ ॥

विभावरी

स राजकोटपत्तनं समाययौ,
विहृत्य तत्पुरीजनो महामहैः ।
प्रवेशयाञ्चकार तं पुराऽन्तरं,
ददौ च देशनामसौ गरीयसीम् ॥ ३२४ ॥

जलधरमाला

वाँकानेरं पुर-वरमागाच्छ्रीमान् ,
प्रस्थायाऽसौ तत इह पौराः सर्वे ।
वादित्राणां श्रुतिसुखकारै रावै-
रानैषुस्तं स्वपुरममी सानन्दम् ॥ ३२५ ॥

सूरिः श्रीमानिह हि ददे व्याख्यानं,
धर्म्यं पथ्यं परमगतेः सन्दायम् ।
जाताऽघौघ-प्रलयकरं जीवानां,
श्रुत्वाऽत्यन्तं प्रमुमुदिरे ते सभ्याः ॥ ३२६ ॥

उपजातिः

आसीच्च तस्मिन् समये प्रवृत्ता,
सुदुष्करा वार्षिकसत्तपस्या ।
तत्रत्य इभ्यः स हि दीपचन्द्र-
स्तत्पारणाऽर्थं कडवेत्युपाधिः ॥ ३२७ ॥

अचर्करीच्चारुमहामहं स,
आष्टाह्निकं तत्र विशेषपूजा ।
प्रभावना स्वामिसुवत्सलत्वं,
बभूव रम्यं बहुधा सुकृत्यम् ॥३२८॥ (युग्मम्)

विभावरी

इयाय मोरवीं महापुरीं सकः,
ततो विहृत्य सूरिराणमहायशाः ।
पुरीजन-प्रवर्तितैर्महामहैः,
प्रविष्टवान् पुरं ददौ सुदेशनाम् ॥ ३२९ ॥

व्यजिज्ञपंस्तदा गुरून्महाजनाः,
पयोदकालिकीं स्थितिं विधाय नः ।
पुनीहि नाथ ! साम्प्रतं कृपानिधे !,
पिपूर्हि नो मनोरथं ध्रुवं प्रभो ! ॥३३०॥

तदुक्तवाचमीदृशीं निशम्य सोऽ-
ब्रवीच्च तान् सुधोद्गिरा गिरा विभुः ।
पुरैव मे बभूव तद्विनिर्णयः,
पुराऽन्तरे तदत्र कोऽपि सन्मुनिः ॥ ३३१ ॥

स्थितिं विधाय वार्षिकीं समीहितं,
परीष्यति ध्रुवं स वश्च मामकः ।
इति प्रभाष्य तानसावतूतुपत्,
सुजैन-धर्म-पङ्कजप्रभाकरः ॥३३२॥ (युग्मम्)

शिखरिणी

ततश्चैष श्रीमान् विबुध-मुनिकल्याणविजयं,
सभायां व्याख्यानं ददितुमतिदक्षं सुचतुरम् ।

चतुर्मास्यां स्थातुं न्यधुनगिह सूरिः स्वयमितः,
समैद्वॉकानेरं जलद-दिवसान् निर्गमयितुम् ॥ ३३३ ॥

उपजातिः

उपाश्रयस्तत्र सुजीर्ण आसी-
न्निवासयोग्यो न हि सन्मुनीनाम् ।
अतो नवीनं ह्युपयुक्तमेक-
मुपाश्रयङ्कर्तुमियेष[1] सूरिः ॥ ३३४ ॥

तावच्च तत्राऽऽगतवान्महेभ्यः,
स माण्डवीवन्दर-सन्निवासी ।
श्रीजीवराजो धनजीभ्यसूनुः,
श्रीमद्गुरूणामभिवन्दनायै ॥ ३३५ ॥

तमाख्यदेतन्निज-मानसीयं(य),
भावं समाकर्ण्य गुरूपदेशम् ।
मुद्रासहस्रं स हि रुद्रसंख्यं,
प्रादात्तदर्थं सुकृतीमहेभ्यः ॥ ३३६ ॥

तत्कार्यमारब्ध ततोऽचिराय,
मुद्राभिरष्टादशभिः सहस्रैः ।
व्यचीकरद्रम्यमुपाश्रयं हि,
श्रीमान् प्रविद्वानयमत्र सूरिः ॥ ३३७ ॥

१ 'कारयितुं' इत्यर्थो ज्ञेयः, एवमन्यत्रापि.

द्रुतविलम्बितम्

भगवतीवरसूत्रमवाचयत्,
प्रथित-सूरिवरो मधुर-स्वरैः ।
सकल-पौरजना उपतस्थिरे,
परम-भक्तिभरेण च शुश्रुवुः ॥ ३३८ ॥

प्रतिदिनं कति लुम्पकधर्मिणोऽ-
प्यपर-धर्मिजना अतिरागिणः ।
अधिसभं रमणीय-कथाऽमृतं,
समुपकर्णयितुं समुपाययुः ॥ ३३९ ॥

इह हि जन्मभुवि प्रभुरागतो,
रदन-संमित-हायनतोऽधुना ।
अकृत वार्षिकवासमुदारधी-
रुदसहन्त जना अखिला भृशम् ॥ ३४० ॥

उपजातिः

वेदैक-पूर्वीय-महातपस्या,
ह्याराधिता भूरिजनैरमुष्मिन् ।
भावोऽपि लोकस्य विशेष आसी-
दाष्टाह्निकाद्युत्सव उज्ज्वलोऽभूत् ॥ ३४१ ॥

शार्दूलविक्रीडितम्

शान्तिस्नात्र समर्चनं सुविधिवच्चक्रुर्जनाः स्वामिनां,
वात्सल्यं कियदुत्तमं समभवत् पूजा च नानाविधा ।
तत्रत्योऽमरसिंहनाम नरपः श्रीमानुदाराऽऽशय-
श्चाऽऽगाद्रम्य-महोत्सवेऽखिलजनैराकारितो भक्तितः॥३४२॥

वसन्ततिलका

पन्न्यास-शान्तिविजयोऽप्युदयाऽभिधश्च,
सौशील्यवान् सुमुनि-मुक्तिविजिच्च तत्र ।
श्रीमान् यशोविजय उज्ज्वल-शील-शाली,
सूरीश्वरस्य सविधे त इमे किलाऽऽसन् ॥३४३॥

उपजातिः

धनान्त एतन्नगराद्विहृत्य,
स मोरवीमागतवान् महीयान् ।
श्रीमांश्च कल्याणमुनिर्हि तत्रो-
पधानसंज्ञं तप आरम्भत् ॥ ३४४ ॥

तस्याऽवसाने व्रतिनां समेषां,
वादीन्द्र-दन्तावल-सिंह एषः ।
आष्टाहिकं चारुमहामहञ्च,
प्रवर्त्य सूरीश्वर आर्पिपच्च ॥ ३४५ ॥

प्रस्थाय तस्मात्स हि मालियाऽऽख्यं,
प्रपेदिवान् सूरिवरः सशिष्यः ।
महाजनाऽऽरब्ध-महामहेन,
प्राविक्षदेतन्नगरं गरीयान् ॥ ३४६ ॥

तत्रत्य-धर्मिष्ठ-पुराऽधिनाथः,
श्रीमान् समागादुपसूरि तत्र ।
सार्द्धां घटीं तं समुपादिदेश,
चरित्रनेता प्रविशुद्ध-धर्मम् ॥ ३४७ ॥

सप्ताहमध्युष्य पुरीं स एतां,
विहृत्य धांगध्रेतिपुरीम्प्रपेदे ।
सम्मानपूर्वं नगरं प्रविश्य,
व्याख्यातवानार्हत-शुद्ध-धर्मम् ॥ ३४८ ॥

प्रमिताक्षरा

वढवान-रम्य-नगरीं तत ए-
दयमात्मतत्त्व-विदुषां प्रथमः ।
पुर-वासि-सर्वजनता-रचितैः,
प्रविवेश चारु नगरं सुमहैः ॥ ३४९ ॥

उपदेशमत्र स हि सूरिवरः,
परमार्थपूर्णमतिसौख्यददम् ।

ददिवानशेष-वृजिनाऽपहरं,
भव वार्धि-पोत-भव-भीतिहरम् ॥ ३५० ॥

प्रविहृत्य सिद्धगिरिमाप ततः,
प्रथमं जिनेशमवलोक्य मुदा ।
प्रणतिं विधाय बहुशः सुमना-
स्तमनोदुदार-वचसा सुचिरम् ॥ ३५१ ॥

लिमडीपुरीमथ समागतवान्,
जनता-कृतैः सुरुचिरैश्च महैः ।
नगरं प्रविश्य सुचिरं ददे,
ह्युपदेशमेष भव-रोगहरम् ॥ ३५२ ॥

वंशस्थम्—

ततोऽप्यसौ वीरमगाममागतः
सुवाद्य वेण्डाऽऽनक-काहलाऽऽदिभिः ।
नदद्भिरुच्चै रमणी सुगीतकैः,
पुरप्रवेशं कृतवांश्च सूरिराट् ॥ ३५३ ॥

सुधोपमं तस्य विशेष-धार्मिकं,
महोपदेशं भव-बन्धनच्छिदम् ।
निशम्य सर्वे पुरवासिनो जनाः,
स्वधर्म दाढर्य समवापुरुच्चकैः ॥ ३५४ ॥

सुतीर्थ-शङ्खेश्वरमाययौ ततो,
विलोक्य वामेय-जिनेश्वरं प्रभुम् ।
प्रणम्य भक्त्या परया मुहुर्मुहु-
र्व्यमोमुदीनं ह्यतिनुत्य सत्पदैः ॥ ३५५ ॥

गीतिः

पट्टणपुराऽधिवासी, चुन्नीलाल-नानचन्द्रः श्रेष्ठी ।
वर्धमानमाचाम्लं, तपः कारयामास तत्र शुभधीः ॥३५६॥
जनानां पञ्चशत्या, मधु-सित-सप्तमीतः पूर्णिमाऽवधि ।
इषेऽपि सित-सप्तम्याः, पूर्णिमान्तमेतदुभयं शाश्वतम् ॥३५७॥

उपजातिः

पर्यूषणीयाऽऽ(?)महामहस्तु,
दिनाष्टकीयः सकलोऽप्यनित्यः ।
चैत्रीयमाचम्लिमेष सूरि-
श्चकार शङ्खेश्वर-रम्यतीर्थे ॥ ३५८ ॥

विहृत्य तस्मादयमाजगन्वान्,
कडीपुरं तत्र महाजनौघः ।
प्रवेशयामास पुरं समेत-
माचार्यवर्यं परमोत्सवेन ॥ ३५९ ॥

तत्रत्यसंघे बलवान् विरोध,
आसीन्मिथस्तं समुदच्छिनत्सः ।

विभिन्नतैकत्वफलानि तेषां,
स्वदेशनायां परिदर्श्य सम्यक् ॥ ३६० ॥

महीयसश्चाऽस्य महोपदेशात्,
सुश्रावकास्ते सकलाः सहर्षम् ।
समुज्झ्य वैरं प्रविधाय मैत्री-
मारेभिरे जीर्ण-समुद्धृतिं वै ॥ ३६१ ॥

वसन्ततिलका

प्रस्थाय राजनगरं तत आजगन्वान्,
श्रीमानसौ विजय-नीति-गरिष्ठसूरिः ।
तत्रत्य-विज्ञ-जनता-रचितोत्सवेन,
प्राविक्षदुज्ज्वलतरं नगरं विशालम् ॥ ३६२ ॥

उद्यापनीय-परमोत्सवमिभ्यवर्यो,
वाड्यादिलाल-शुभनाम-जनप्रसिद्धः ।
प्रख्यातिमच्छगनलाल-महेभ्यपुत्रः,
प्रावीवृतच्च विपुल-व्ययतो महर्द्धिः ॥ ३६३ ॥

उपजातिः

ततो महीजाऽऽख्यसुपोलसंस्थ-
वीराऽभिधोपाश्रय एष सूरिः ।
तदीय-मुख्येभ्य-महाग्रहेण,
सन्तस्थिवान् प्रावृषि भूरिशिष्यैः ॥ ३६४ ॥

रैमन्त-शैलोपरि-जीर्ण-चैत्यो-
द्धारे यथाशक्ति वसु प्रदातुम् ।
व्याख्यानमध्ये सकलश्च सङ्घ-
मुपादिशच्चारु-गिरैष सूरिः ॥ ३६५ ॥

सञ्चिन्त्य सर्वं तत इभ्यवर्गा-
स्त्रिंशत्सहस्रं व्ययतंश्च मुद्राः ।
विपाकसूत्रं समवाचयत्स,
श्रोतार आसुर्बहुलाश्च लोकाः ॥ ३६६ ॥

मध्ये चतुर्मासममुष्य सूरेः,
श्रीवीर--कल्याण-मुनी विनीतौ ।
सम्यद्रवीत्यादिकियत्सुशिष्याः,
पार्श्वे तदाऽऽसन् समधीत-शास्त्राः ॥ ३६७ ॥

खुशालचन्द्राऽङ्गज-चूनिलाल-
स्तत्रोपधानं समचीकरच्च ।
प्रान्ते च मालापरिधापनार्थ-
माष्टाहिकं सूत्सवमेष चक्रे ॥ ३६८ ॥

शार्दूलविक्रीडितम्

पक्षाऽष्ट-ग्रह-शीतरश्मितुलिते सम्वत्सरे वैक्रमे,
स्वःश्रीजेतरि रम्य-राजनगरे श्रीवीरसूपाश्रये ।

धर्माऽऽराधनमुत्तमं बहुविधं लोकैश्च सम्पादयँ-
श्चातुर्मास्यमलञ्चकार विजय-श्रीनीतिसूरीश्वरः ॥ ३६९ ॥

वसन्ततिलका

श्रीकर्मचन्द्रतनुजन्म नगीनदासः
सद्गुर्जरीय-पृथु-पट्टण-पत्तनस्थः ।
श्रीरैवताऽद्रि-भववारक-तीर्थ-कच्छ-
भद्रेश्वराऽऽदि-कति-पावन तीर्थहेतोः ॥३७०॥

भूरिव्ययेन निरजीगमदुच्चसंघं,
तत्रैतुमत्र सविधे सुगुरोः समागात् ।
विज्ञप्तिपूर्णसुदलं तत एव तूर्णं,
चक्रे विहारमित एष सशिष्य-सूरिः ॥ ३७१ ॥
(युग्मम्)

संघः स पट्टणपुराच्चलितः क्रमेण,
शङ्खेश्वरं परमतीर्थमुपाजगाम ।
शिष्योपशिष्यनिकरैः परिसेविताऽङ्घ्रिः,
सूरीश्वरोऽपि समुपागतवांश्च तत्र ॥ ३७२ ॥

उपजातिः

तत्तीर्थमालां परिधाप्य तत्र,
गोपालदासेत्यभिधानकस्य ।

श्रीमच्छगनूलालसुनन्दनस्य,
खेरालु-निष्काशित-संघनेतुः ॥ ३७३ ॥

श्रीमानसाविम्य-नगीनदास-
श्रीकच्छ-भद्रेश्वर-संघसार्धम् ।
चचाल शिष्यादिभिरिद्धतेजाः,
क्रमेण भद्रेश्वरमाजगाम ॥ ३७४ ॥ (युग्मम्)

तत्राऽऽगतः संघ उदार-भक्त्या,
तत्तीर्थयात्रां विधिवद्विधाय ।
समस्त-संघस्त्विह कच्छदेशे,
तत्पञ्चतीर्थीं महतीं प्रचक्रे, ॥ ३७५ ॥

प्राचीनतीर्थस्त्वयमस्ति लोके,
बभूव पूर्वं विजयाऽऽढ्य इभ्यः ।
आदर्शभूतो विजयाऽभिधाना,
जगत्प्रधाना महती च राज्ञी ॥ ३७६ ॥

नगर्यपि प्राच्यतरा विशाला,
सुश्रावकाणां निलयैश्च पूर्णा ।
अनेकसच्चैत्यविभूषिताऽऽसीत्,
तत्राऽधुना वर्तत एकचैत्यम् ॥ ३७७ ॥

कच्छीययात्रां सकलां विधाय,
चागत्य रेमन्तनगोपरिष्टात् ।

द्वाविंशतीर्थङ्करनेमिनाथं,
विलोकयामास समस्त-संघः ॥ ३७८ ॥

संघाऽधिप-श्रेष्ठिनगीनदास-
स्याऽऽचार्यवर्यः प्रभु-नीतिसूरिः ।
सत्तीर्थमालां परिधाप्य तस्थौ,
सुखेन तस्मिन् कति वासराणि ॥ ३७९ ॥

जनाः सहस्रं खलु पञ्च तत्रिगान्,
सङ्घे गरिष्ठे सकलाः समासन् ।
रैवताशैलोपरि सङ्गतानां,
नृणां सहस्रं तिथिसंख्यमासीत् ॥ ३८० ॥

प्रस्थाय तस्मात् स हि सूरिराजः,
समागमज्जेतपुरं सशिष्यः ।
तत्रत्यसंघस्य महाऽऽग्रहेण,
गुर्वागमोद्भूत गुरु-प्रहर्षः ॥ ३८१ ॥

समस्त-पौरः पटहाऽऽदिनादैः,
नितम्बिनी-वृन्द-सुगीत-रावैः ।
प्रवेशयामास पुरं समेत-
माचार्यवर्यं सह शिष्यवृन्दैः ॥३८२॥ (युग्मम्)

स देशनामेष ददौ सभायां,
मेघाऽऽरवाऽऽडम्बरजिद्रवेण ।

सुधोपमां श्रावकवृन्द-चित्त-
चकोर-चान्द्रीमघतापहर्त्रीम् ॥ ३८३ ॥

श्रीसंघ-बह्वाग्रहतश्चतुर्मा-
सीमत्र सूरिः सह भूरिशिष्यैः ।
समध्यवात्सीदुपधानमेष,
कारापयामास महामहेन ॥ ३८४ ॥

अन्ते च मालापरिधापनार्थ-
माष्टाहिकश्चारु-महामहश्च ।
बभूव तस्मिन् पुरुषाः स्त्रियश्च,
समाययुः स्थानक-वासिनोऽपि ॥ ३८५ ॥

धर्मोन्नतिस्त्वित्थमतिप्रशस्या,
बभूव तत्राऽखिलजीवरक्षा ।
प्रावर्ति नानाविधसत्तपांसि,
चक्रुश्च लोका अतिभाववृद्ध्या ॥ ३८६ ॥

व्याख्यातवानेष विपाकसूत्रं,
जैनास्तदन्ये कति लुम्पकाश्च ।
शुश्रूषया तस्य सदैव सूत्काः,
समाययुः संसदि देशनायाम् ॥ ३८७ ॥

वसन्ततिलका

रामाऽष्ट–नन्द–शशि–सम्मित–विक्रमाऽब्दे,[1983]
श्रीमानयं विजय–नीति युगप्रधानः ।
सन्तास्थिवानिह हि जेतपुरे विशाले,
वर्षादिनान्यपनिनीषु–रुदार–कीर्तिः ॥ ३८८ ॥

इन्द्रवज्रा

श्रीमानुपाध्याय–दया–मुनिः श्री–
मुक्तिर्मुनिः सम्पदुपाऽऽख्यकश्च ।
इत्यादिशिष्याः सकलाः सुविज्ञा,
आसन् विनीता उपसूरि तत्र ॥ ३८९ ॥

उपेन्द्रवज्रा

घनाऽत्ययपाये विहृतस्ततोऽयं,
जगाम रैमन्तगिरिं सशिष्यः ।
विधाय यात्रां बहुधा प्रणुत्य,
जिनेशमस्मादपि संविजह्रे ॥ ३९० ॥

शिखरिणी

मिलिन्दैः सच्छिष्यैः श्रि(थि)त–पदपद्मः प्रभुवरः,
समायातः श्रीमान् क्षिति सुविदितं राधनपुरम् ।

निनादैर्वेण्डाऽऽदेर्युवतिजनगीतैश्च ललितै-
रशेषैः सच्छ्राद्धैः सममविशदेतत्पुरमसौ ॥ ३९१ ॥

सुधावर्षं रम्यं भव-जलधितारं श्रुतिसुखं,
चिरं सद्व्याख्यानं मधुरवचसा सूरिरददात् ।
सदा देयं धर्म्यं परमहितकारं जनिजुषां,
महामोह-ध्वान्त-प्रचयमपहर्तुं दिनकरम् ॥ ३९२ ॥

व्यधाद्वाडीलालः पुनमचुतचन्द्रस्य तनयो,
महोत्साही सूद्यापनमहमपूर्वं वसुदिनम् ।
जनानां विज्ञप्त्याऽगमयदिह वर्षर्तुदिवसा-
नभूद्धर्मोद्द्योतः परम इह सूरावुपगते ॥३९३॥

अदाज्ज्येष्ठे मासे ललित-सितपक्षे फणिपते-
स्तिथौ गुर्वीं दीक्षां विनयि-मुनिरामस्य सुधियः ।
व्यधाच्चैनं श्रीमङ्गलविजयशिष्यं भगवतीं,
सभायां व्याचख्यौ मुनिपतिरसौ सूत्रमनघम् ॥ ३९४ ॥

वसन्ततिलका

प्रस्थानपञ्चकमसौ विधिवत्तपस्यन्,
वाचंयमत्वमिह सन्दधमान ईड्यः ।
सूरीश्वरः प्रथित-विश्वजनीन-वृत्ति-
राराधयच्च मुनिराज उदार-भावः ॥ ३९५ ॥

उपजातिः

वेदेंकपूर्वोत्तम-मत्तपस्याऽऽ-
दीन्यत्र लोकैः समचीकरच्च ।
प्रभावना-पूजन-भूरि-संघ-
जग्ध्यादिसत्कार्यमचीभवत्सः ॥ ३९६ ॥

श्रीमानुपाध्याय-दयाविजिच्छ्री-
पन्यास-दानाऽऽख्यविजिन्मुनिश्च ।
पन्यासभाग् हर्षमुनिः सुविद्वान्,
श्रीमांस्तपस्वी तिलको मुनिश्च ॥ ३९७ ॥

श्रीमान् मुनिर्मानविजित्तपिष्ठ-
कल्याणनामा मतिमांश्च साधुः ।
इत्यादिशिष्या उपसूरि तत्र,
शास्त्रेषु दक्षा मतिमन्त आसन् ॥ ३९८ ॥

भुजङ्गप्रयातम्-

युगाऽद्रि-ग्रहेन्दु-प्रमाणे च वर्षे,
पुरे राधनाऽऽह्वे चतुर्मास-वासम् ।
व्यधत्तैष विद्याचणः सूरिराजः,
समं भूरिशिष्यैः प्रभुः शान्तमूर्तिः ॥ ३९९ ॥

इन्द्रवज्रा।

श्रीमानसावत्र महेभ्यवर्गैः,
श्रीजैनबोर्डिङ्गमतिष्ठिपच्च ।
प्रान्तीय-जैनाः शिशवश्च भूरि,
तत्रैत्य सम्यक् समधीयते हि ॥ ४०० ॥

उपजातिः

इत्थं चतुर्मासिमयं विधाय,
विहृत्य तस्मात्सह शिष्यवर्गैः ।
भाँभेरमागान्महता महेन,
प्रविष्टवांस्तत्पुरमेष सूरिः ॥ ४०१ ॥

इन्द्रवज्रा—

तत्रोपधानं मुनि-मङ्गलाऽऽख्यः,
कारापयन्भूरिजनैः समासीत् ।
तस्याऽवसाने व्रतिनां समेषां,
मालार्पणं चारुमहेन चक्रे ॥ ४०२ ॥

उपजातिः—

तस्मात्पुनः सूरिवरः समागात्,
श्रीमत्पुरं राधनपूर्वकं सः ।

विहृत्य शङ्खेश्वरतीर्थयात्रां,
विधाय जूनागढमाजगाम ॥ ४०३ ॥

इन्द्रवज्रा

सत्तीर्थ-रेमन्त-धराधरोप-
रिष्टात्समुद्धारित-चैत्यकस्य ।
बाणाऽष्ट-नन्द-क्षितिवत्सरीय-
मार्गेऽसिते भोगितिथौ प्रतिष्ठाम् ॥ ४०४ ॥

उपजातिः

चरित्रनेता समचीकरच्छ्री-
मान्नीतिसूरीश्वर ईड्यवर्यः ।
अपूर्व आष्टाहिक-दर्शनीय-
महोत्सवोऽभूदिह रैवताऽद्रौ ॥ ४०५ ॥ (युग्मम्)

अष्टोत्तर-स्नात्रमखोऽनुवीच्च,
स्वधर्मि वात्सल्यमपि प्रशस्तम् ।
प्रभावना श्रीफल-मोदकाऽऽदे-
रकारि नित्यं बहुभावतश्च ॥ ४०६ ॥

तद्राजकीया अपि नेतृवर्गा,
मन्त्र्यादिका आगुरिहोत्सवे हि ।
आलोक्य चारूत्सवमर्हणीयाऽऽ-
चार्योपदेशैस्तुतुषुश्च भूरि ॥ ४०७ ॥

शार्दूलविक्रीडितम्

राजादेः समुपागतश्च नगरात् संघो महांस्तत्पते-
राचार्यैः परिधापिता सुरुचिरा सत्तीर्थमाला मुदा ।
चातुर्मास्यकृते च तेन बहुधा व्यज्ञापि सूरीश्वरो,
लूवाराऽभिध-पोल-वासिसकलैरिभ्यैरपि प्रार्थितः ॥४०८॥

वसन्ततिलका

प्रस्थाय रैवतगिरेस्तत एव सूरिः,
संप्राप राजनगरं सह शिष्यवर्गैः ।
बेण्डाऽऽनकाऽऽदि-विविधोज्वल-तूर्यनादैः,
सत्कामिनी-ललित-गीत-रवैश्च सत्रा ॥४०९॥

आगत्य सन्मुखममुष्य समस्तपौराः,
श्रीमद्गुरोः सविधिवन्दनमाविधाय ।
प्रावेशयन्नगरमेनसयञ्च तत्र,
लूवार-पोल-सदुपाश्रयमध्यतिष्ठत् ॥ ४१० ॥
(युग्मम्)

पञ्चाशकं परमपावनसूत्रमत्र,
व्याख्यातवान् सदसि मेघ-गभीर-नादैः ।
श्राद्धाऽऽदिपौरजनता ह्यमितोत्सुका त-
च्छ्रोतुं समागतवती सुगुरोरपूर्वम् ॥ ४११ ॥

मन्दाक्रान्ता

योगोद्वाहं कतिमुनिवरैः कारयामासिवान् सः,
द्वाभ्यां ताभ्यामपि भगवतीसूत्रयोगोद्वहश्च ।
चातुर्मास्ये सकलजनताऽऽह्लादिताऽत्यन्तमासीत्,
धर्मोद्द्योतः परममभवत्स्वामिवात्सल्यताऽऽदिः ॥ ४१२ ॥

शिखरिणी

उपाध्यायः श्रीमानधिक गुणशाली मुनिदया,
स पन्यासोपाधिः परमसुकृती दानविजयः ।
स पन्यासो हर्षो मुनिरधिगुणः शास्त्रकुशलः,
स पन्यासः शान्तिः सकलजनता-शान्तिजनकः ॥४१३॥

मुनिर्मानोपाह्वो मुनिरुदयसंज्ञो मुनि-मनो-
हरोपाख्यः सम्पद्विजय उरुधीः केशर-मुनिः ।
मुनिर्हंसः श्रीमान् बहुपटु-महेन्द्रो मुनिवर-
स्त्विमे शिष्या आसन्नुपगुरु सुविद्या विनयिनः ॥४१४॥
(युग्मम्)

उपजातिः

एषोऽत्र मानोदयनाममुन्यो-
गणीत्युपाधिं ददिवान् गरीयान् ।
डेलाऽभिधोपाश्रयमेत्य सूरि-
र्वितत्य घस्राऽष्टकमुत्सवाऽऽदि ॥ ४१५ ॥

शार्दूलविक्रीडितम्

इत्थं भूत-वसु-ग्रह-क्षितिमिते [१९८५] सम्वत्सरे वैक्रमे,
जुष्टः शिष्यगणैः सुराजनगरे लूवार-पोलस्थिते ।
रम्योपाश्रय उत्सवैः कतिविधैः पौरान् सदाऽऽनन्दयँ-
श्चातुर्मास्यमलञ्चकार विजयश्रीनीतिसूरीश्वरः ॥४१६॥

उपजातिः

इतोऽसकौ केशरियाजियात्रां,
चिकीर्विजह्रे सह शिष्यवर्गैः ।
तमेत्य यात्रां विधिवद्विधाय,
प्रबोधयन् भव्यजनान् समासीत् ॥ ४१७ ॥

तत्राऽऽगतो वावल-पत्तनस्थः,
स्वधर्मपत्न्या सह धर्मसिंहः ।
संसार-घोराऽर्णव-सन्तितीर्षु-
र्दीक्षां ययाचे प्रभु-नीतिसूरिम् ॥ ४१८ ॥

तद्भाव-दार्ढ्यं समुदीक्ष्य सूरि-
स्तत्रस्थ-संघस्य समक्षमेनम् ।
प्रदाय दीक्षां मुनि-भक्तिनाम,
धृत्वाऽऽत्म-शिष्यं कृतवान् कृपालुः ॥ ४१९ ॥

तदीयपत्नीमपि दीक्षयित्वा,
श्रीमङ्गलश्रीरिति नाम धृत्वा ।

लाभश्रियस्तामकरोच्च शिष्यां,
साध्व्या उदाराऽऽश(य) एष सूरिः ॥ ४२० ॥

इतोऽमदावाद लुहार-पोल-
निवासि-सर्वेभ्यजनाश्च तत्र ।
भविष्यदुद्यापन उत्सवे हि,
समेतुमाचार्यमसूचयन्त ॥ ४२१ ॥

पन्यासकोपाधिक-सत्प्रतिष्ठ-
श्रीमान् गुलाबः कृतवांश्च कालम् ।
तदर्थमप्यत्र सुवीरकोपा-
श्रये भविष्यत्परमोत्सवे च ॥ ४२२ ॥

आगन्तुमाकारित इभ्यवर्गै-
राचार्यवर्यः पुनरेष तत्र ।
श्रीराजपूर्वं नगरं समागान्-
महोत्सवौ तौ समभूषयच्च ॥ ४२३ ॥ (युग्मम्)

द्रुतविलंबितम्

कपडवञ्ज-पुरीय-महाजना,
घनदिनेषु निवासयितुं ह्यमुम् ।
उपगता इह सूरिवरस्य ते,
विदधिरे सकला विपुलाऽऽग्रहम् ॥ ४२४ ॥

अधिकलाभमुदीक्ष्य तदाऽसकौ,
तमुररीकृतवान् करुणानिधिः ।
विहृतवानत एव लघु प्रभुः,
परम-मातर-तीर्थमुपाऽऽगमत् ॥ ४२५ ॥

विधिवदत्र विधाय सुयात्रिकां,
पुर-वरं नडियादमुपाययौ ।
नगरमेष विवेश महामहै-
रुपदिदेश विशेषमितोऽपि सः ॥ ४२६ ॥

प्रविहरन्महुधापुरमीयिवान्,
सकल-पौरजनैरतिसत्कृतः ।
सदसि रम्य-सुधोपमदेशना-
मदित सूरिवरः परमार्हतीम् ॥ ४२७ ॥

कपडवञ्जमसौ तत आगमत्,
नदनेक-महारव वादनैः ।
प्रचुरपौरजनैः सह सङ्गतै-
रभिमुखं प्रविवेश पुरं सकः ॥ ४२८ ॥

उपजातिः

विपाकसूत्रं स हि देशनायां,
व्याचष्ट जीमूत-गभीर रावैः ।

जैनास्तदन्येऽपि च भूरिलोकाः,
श्रोतार आसन्नियमेन शश्वत ॥ ४२९ ॥

गीतिः

कतिभिश्चाऽत्र श्रमणै–र्भगवतीसूत्राऽऽदियोगोद्वहनम् ।
कारयामासिवाञ्छ्री-मान् विजय-नीतिसूरि-चक्र-शक्रः ॥४३०॥

मुनि-मोती-मुक्ति-विजय-तिलकविजय-सुमुनि-कल्याणविजयैः ।
इह भगवतीसूत्रीय-योग-मुदवीवहद्यथाविधानम् ॥ ४३१ ॥

इतरैरपि कतिशिष्यै–र्महानिशीथसूत्रयोगोद्वाहम् ।
सुमतिविजयेन मुनिनो–त्तराध्ययनसूत्रीयमचीकरच्च ॥४३२॥

भुजङ्गप्रयातम्––

चतुर्मासिकायां तपस्या प्रशस्या,
बभूवुश्च नैके सुचारुत्सवाऽऽद्याः ।
सुधर्म्माणि कृत्यानि जातानि तत्र,
ह्यनेकानि सूरेरमुष्योपदेशात् ॥ ४३३ ॥

गीतिः

श्रीमोती–मुक्ति–तिलक–कल्याणोदय-विजय–मुनिवराणाम् ।
ऊर्जाऽसित–फणि–तिथ्यां, गणि-पन्यास-पदवीमदात्सूरिः ॥

तदर्थमिहत्यसंघै–राष्टाहिकमहामहोऽकारि मुदा ।
शान्ति–स्नात्र-समर्चा-नवकारसीप्रमुख-कतिशुभकृत्यम् ॥४३५॥

उपजातिः

पदप्रदानीय-महामहेऽस्मिन्,
वैदेशिक-श्राद्धगणाः स्त्रियश्च ।
प्रायः सहस्रं ह्युपतस्थिरेऽति-
प्रमोदभाजः सकला बभूवुः ॥ ४३६ ॥

श्रीसुन्दराऽऽरव्यस्य मुनेश्च गुर्वी,
दीक्षामदत्ताऽयमतुच्छतेजाः ।
पन्यास-मुनिर्विजयस्य शिष्यं,
चकार विद्याचण-सूरिराजः ॥ ४३७ ॥

इहाऽमदावाद-पुरस्थमेकं,
मुमुक्षुजीवं परिदीक्ष्य सूरिः ।
तस्याऽभिधां मेरुरिति प्रकाश्य,
शिष्यं व्यधात्साधु-मनोहरस्य ॥ ४३८ ॥

मालिनी

१९८६
रस-वसु-नव-भूमीसम्मिते हायनेऽसौ,
प्रथित-कपडवञ्जे सत्पुरेऽचर्करीत्सः ।
जलद-दिननिवासं भूरिशिष्यैः सुजुष्टः,
प्रवर-विजयनीतिः सूरिशक्रः किलेत्थम् ॥४३९॥

उपजातिः

अथाऽमदावाद लुहारपोल--
निवासिनामन्यमहेभ्यकानाम् ।
अत्याग्रहात्तत्र समाजगाम,
चरित्रनेता विहरन्नितश्च ॥ ४४० ॥

समभ्यवात्सीदिह मासयुग्मं,
प्राव्राजयद्विक्रमपत्तनस्थम् ।
पुमांसमेकं विनयेतिसंज्ञां,
धृत्वा स्वशिष्यं कृतवांस्तमेषः ॥ ४४१ ॥

इतो यियासुर्मरुदेशमेष,
पुरं मशाणाऽभिधमाजगाम ।
तत्राऽमदावादपुरीयमेकं
सन्दीक्ष्य तन्नाम शुभेति चक्रे ॥ ४४२ ॥

विहृत्य तारणादयमैत्त्व तार-
ङ्गार्जि सुतीर्थे सह शिष्यवर्गैः ।
विधाय यात्रां गतवान् कुमारि-
याजीति नाम्ना प्रथितं च तीर्थम् ॥ ४४३ ॥

ततोऽर्बुदाऽद्रेरुपरिस्थ-देल-
वाडाऽभिधानं रमणीयतीर्थम् ।

समेत्य तीर्थङ्करमादिनाथं,
दर्दश भक्त्या परया च सूरिः ॥ ४४४ ॥

ततः सिरोही-नगरीमियाय,
पौरैश्च बेण्डाऽऽदिकवाद्यनादैः ।
सीमन्तिनी-यूथ-सुचारुगीतैः
प्रावेशि रम्ये नगरे स एषः ॥ ४४५ ॥

सन्तस्थिवान्मासमिहैकमेष,
शुभस्य साधोर्बृहतीं च दीक्षाम् ।
प्रदत्तवान् पौरजनानशेषा-
नुपादिशच्छ्रावकशुद्धधर्मान् ॥ ४४६ ॥

सूरीश्वरस्याऽस्य विशेष-धर्मो-
पदेशमाकर्ण्य जनाश्च सर्वे ।
सम्यक्त्वदार्ढ्यं समवापुरेते,
स्वधर्मनिष्ठामचलां प्रचक्रुः ॥ ४४७ ॥

इतो ययौ सूरिवरो हि जावा-
लपत्तनं तत्र समस्तपौराः ।
महामहैरेनमवीविशँश्च,
सुसज्जितं सौवपुरं प्रहर्षात् ॥ ४४८ ॥

संघाऽऽग्रहात्प्रावृषि सन्निवस्तुं,
तत्रैव निश्चित्य महोग्रतेजाः ।

पार्श्वी समागात्पुरवासिभिश्च,
प्रावेशि वेण्डादिक वाद्यनादैः ॥ ४४९ ॥

धर्माऽमृतं तत्र जनांश्च भव्यान्,
सम्पाय(य)न्नार्हत-धर्मतत्त्वम् ।
प्रवेदयन्नेप कियद्दिनानि,
सुखेन तस्थौ मुनिराजवर्यः ॥ ४५० ॥

विहृत्य तस्माद्भलदूटमागात्,
संघः प्रवेशोत्सवमद्वितीयम् ।
चक्रे च सूरिः समुपादिदेश,
श्राद्धीयधर्मान् भव-मोचनाऽर्हान् ॥ ४५१ ॥

इतोऽव्रजद्देलधरं च सूरी-
श्वरो जितात्मा जित-काम-मोहः ।
नदत्सु वेण्डाऽऽदिकवादनेषु,
पुर-प्रवेशं कृतवान्महात्मा ॥ ४५२ ॥

उद्यापनं तत्र महेभ्य एक-
श्चकार भूरि-द्रविण-व्ययेन ।
वितत्यमा(अ)ष्टाहिकमुत्सवं स,
प्रभावनाऽर्हत्परिपूजनादि ॥ ४५३ ॥

ततः परावृत्य पुनर्जगाम,
जावालपुर्यां सह शिष्यवृन्दैः ।

जागायमानेषु वधूजनेषु,
बेण्डाऽऽदितूर्येषु भृशं नदत्सु ॥ ४५४ ॥

साम्मुख्यमेतस्य विधाय संघः,
भक्त्याऽभिवन्द्याऽखिलपौरलोकैः ।
प्रावेशयत्सौवपुरं सुसज्जं,
श्रीमन्तमाचार्यममुं सहैनम् ॥४५५॥ (युग्मम्)

दीक्षार्थिनं सूर्यपुरीय-डाह्याऽ-
भिधं महूधापुरवासिनं च ।
जीवाऽभिधं सूरि-वरः प्रदीक्ष्य,
देवेन्द्र-जीवेत्यभिधामकार्षीत् ॥ ४५६ ॥

वैतालीयम्

मुनिमहेन्द्र-मङ्गल-प्रधी-मनोहरविजय-सम्पदाख्यकैः ।
अचीकरत्सूरिराडयं, भगवतीयोगमुत्तमं मुदा ॥ ४५७ ॥

विमलगच्छ-साधुकावुभौ, महेन्द्र-कल्याणेतिनामकौ ।
चक्राते चोपसूरि तौ, योगोद्वाहं संयताऽऽत्मकौ ॥ ४५८ ॥

औपच्छन्दसिकम्

व्याख्याने श्रावकीयधर्मान्,
आचरणमपि तदीयकृत्स्नकृत्यम् ।
उपदिदेश-सूरिराजवर्य-
स्त्वमृतमयगिरा सर्व-भव्यजीवान् ॥ ४५९ ॥

उपजातिः --

रैवन्त-कुध्रोपरि जीर्णचैत्यो-
द्धृतौ यथाशक्ति वसु प्रदातुम् ।
आदिष्टवानेष समस्त-सङ्घं,
श्रद्धालुकः सोऽपि तदर्थमाशु ॥ ४६० ॥

सहस्रमेकादश रूप्यकाणि,
कुंभारियाजीत्यभिधानतीर्थे ।
उद्धारहेतोरददाच्च मुद्रा-
चतुःसहस्रं परमोत्सहिष्णुः ॥ ४६१ ॥ (युग्मम्)

लोकाः प्रचक्रुः सुतपांसि नाना-
महोत्सवश्चाऽपि कियान् बभूव ।
ऊर्जे सिते मारतिथौ महेन्द्र-
मुनेश्च पन्न्यासपदं ददौ सः ॥ ४६२ ॥

महेन्द्र-सद्धीमुनि-मङ्गलाख्य-
मनोहर-श्रीमुनि-सम्पदां च ।
ऊर्जेऽसिते नागतिथौ चतुर्णां,
गणीत्युपाधिं विततार सूरिः ॥ ४६३ ॥

पञ्चचामरम्

पद-प्रदान उज्ज्वलं महामहं दिनाऽष्टकं,
समस्त-संघ ऐहिकश्चकार भाववृद्धितः ।
प्रभावना सितोपलैरपीह नालिकेरकै-
र्जिनाऽधिनाथ-पूजनं बभूव नैकधा महत् ॥४६४॥

उपजातिः

सुस्वामि-वात्सल्यमपि प्रशस्यं,
जावालसंघः परमोत्सहिष्णुः ।
व्यधत्त तस्मिन् पदवीप्रदाने,
स्वकीय-भूरि-द्रविण-व्ययेन ॥ ४६५ ॥

इन्द्रवज्रा

लोकाश्च तस्मिन् शतशः समागुः,
सौराष्ट्रिका गौर्जर-मारवाश्च ।
वाज्यष्ट-निध्येक-मिते [१९८७] च वर्षे,
प्रावृट्चतुर्मासिककृत्यमित्थम् ॥ ४६६ ॥

वसन्ततिलका

पन्यास-मुक्तिविजयो मतिमान्महेन्दुः,
श्रीमङ्गलः प्रखर-बुद्धि-मनोहरश्च ।

सम्पन्मुनिः सुकृति-पुण्यमुनिः शुभाऽऽख्यः,
प्राऽऽसन्नमी उपगुरु प्रवराः सुशिष्याः ॥४६७॥

शिखरिणी

चतुर्मास्या अन्ते तत विहृत एव प्रभुवरः,
सिरोही-सत्पुर्यामुपगत इहत्या च जनता ।
सुवेण्डाऽऽद्याराबैः प्रचुर-ललना-गीत-निनदैः,
पुराऽन्तः संनिन्ये सह सकल-शिष्यैर्गुरुवरम् ॥ ४६८ ॥

उपजातिः

इतश्च नाडोलपुरं समार,
सत्कारपूर्वं नगरं प्रविश्य ।
सुधायितं तत्र महोपदेशं,
प्रदत्तवान् सूरिवरश्चिराय ॥ ४६९ ॥

इतश्चलित्वा स हि नारराई-
पुरं समागादिह सर्वपौराः ।
वाद्यादिभिस्तं पुरमानयन्त,
सूरिः प्रचक्रे रुचिरोपदेशम् ॥ ४७० ॥

भुजङ्गप्रयातम्

मुछारा-महावीर-मागात्ततोऽसौ,
विधायाऽत्र यात्रां प्रभुं सन्तुनाव ।

जनेभ्यः प्रकामं भवाऽब्धि-प्रतारं,
सुधर्मोपदेशं ददौ सूरिराजः ॥ ४७१ ॥

औपच्छन्दसिकम्

राणकपुरमाययौ ततोऽसौ,
पुरजन-विहित-समुत्सवैर्विशेषैः ।
प्रविवेश पुरं सहाऽऽत्मशिष्यैः,
प्रकृतवानिह सुयात्रिकां प्रभक्त्या ॥ ४७२ ॥

वैतालीयम्

प्रस्थितस्ततः पुरादितो, देसुरीप्रमुख-पञ्चतीर्थिकाम् ।
विधाय बहु-भक्तितो मुदा, प्रससाद भृशं विश्वपावनः॥४७३॥

उपजातिः

पालीपुरीमेष ततः प्रपेदे,
सुसत्कृतः पौरजनैश्च सर्वैः ।
ओजस्विनीं धार्मिकदेशनां स,
प्रदाय लोकान् समरञ्जयच्च ॥ ४७४ ॥

यातस्ततः कापरडाऽऽरव्यपुर्यां,
वोर्डिङ्गमेकं समतिष्ठिपत्सः ।
समीयिवान् योधपुरं ततः श्री-
सूरीश्वरः शिष्यगणैः सहैषः ॥ ४७५ ॥

पञ्चचामरम्

नदन्मृदङ्गकाहलाऽऽदिक-प्रचण्डवादनै-
मृगीदृशां श्रवःसुखैः सुराग-गीत-निस्वनैः ।
जयध्वनिं वदज्जनैः पुरस्कृतः सहस्रशः,
प्रवेशितः पुरि प्रभुः पुरीजनैश्च सद्गुरुः ॥४७६॥

गीतिः

जीवराज अगरचन्द, आसीज्जेसलमेरयात्राचिकीः ।
सह सङ्घेन फलोध्यां, तदाग्रहात्तत्राऽऽगतवान् सूरिः ॥४७७॥

उपजातिः

ततो ह्यसौ युग्मसहस्रलोकैः,
साकं ययौ जेसलमेरयात्राम् ।
सूरीश्वरः सौम्यदिने शुभंयु-
लग्ने सुशिष्यैः कतिभिश्च जुष्टः ॥ ४७८ ॥

अथाच्च सानन्दमशेषसंघः,
क्रमेण तज्जेसलमेर-तीर्थम् ।
विधाय यात्रां विधिवद्बभूवान्,
अनेक-जन्माऽर्जित-पापमुक्तः ॥ ४७९ ॥

तीर्थेऽह्यमुष्मिन् प्रतिमा जिनानां,
सहस्रमष्टाऽपि च सप्त सन्ति ।

रुद्रप्रमायां च शताब्दिकायां,
संस्थापितस्त्वेष इति प्रतीतिः ॥ ४८० ॥

प्राच्यस्तु तीर्थः खलु लोद्रवाऽऽख्य-
स्त्वद्यापि तत्रैकविशालचैत्यम् ।
एका च रम्याऽस्ति हि धर्मशाला,
वस्तिर्जनानां न हि काऽपि तत्र ॥ ४८१ ॥

तत्रत्य-यात्रां विधिवद्विधाय,
सूरीश्वरः संघजनैश्च सत्रा ।
समागमज्जेसलमेरपुर्या-
मैक्षिष्ट तत्रत्यसुपुस्तकानि ॥ ४८२ ॥

अतिप्राच्य-नानाविध-सञ्चितानि,
सत्तालपत्रोपरि लेखितानि ।
तत्रत्यदुर्गोपरि निर्मितानि,
नवाऽपि चैत्यानि ददर्श चैषः ॥ ४८३ ॥

ततश्चलित्वा सह सर्वसंघैः,
श्रीमत्फलोधीपुरमार सूरिः ।
आसीच्चिरत्नस्त्विह संघमध्ये,
मिथो विरोधो बहुहानिकारी ॥ ४८४ ॥

तमेष सर्वान् प्रतिबोध्य लोकान्,
चिरेण यत्नाद्बहुधोपदेशैः ।

निरस्य संघेषु परस्परं हि,
मैत्रीं परां सूरिरजीजनच्च ॥ ४८५ ॥

ततश्च सर्वे मुदिता हि पौराः,
सुस्वामिवात्सल्यमपि प्रचक्रुः ।
गुरोश्च माहात्म्यमतीव सर्वे,
जगुश्च चक्रुर्बहुधर्मकृत्यम् ॥ ४८६ ॥

गीतिः

पायचन्द–खरतर–तपगच्छ–कमलागच्छीय–मुख्येभ्याः ।
संस्कृताः सूरिवर्यैः, प्रावृषि निवस्तुं प्रार्थयामासुः ॥ ४८७ ॥

लाभाऽलाभौ विचिन्त्य, तेषामभ्यर्थनमुररीचक्रे ।
तत्र श्रीविजय–नीति–सूरिराचार्य–चक्र–चूडामणिः ॥४८८॥

वसु–नग–नव[१९७८] शशिवर्षे, फलोधिपुरे जनताऽऽग्रहाऽतिशयात् ।
कृतवाँश्चातुर्मास्यं, चरितपति–विजय–नीतिसूरिराजः ॥४८९॥

शुक्र–शुक्ल–गुरुतिथ्या–मिह हि पन्यास–श्रीहर्षविजयम् ।
प्रदायाऽऽचार्यपदवीं, सौवपट्टे समतिष्ठिपत्सूरिः ॥ ४९० ॥

तन्महोत्सवं श्रेष्ठी, कृतवान् किसनलालाऽभिधो रम्यम् ।
सम्पतलालगुलेच्छाऽऽ-ष्टाह्निकमह-सुशान्तिस्नात्राऽऽदिकम् ॥४९१

इन्द्रवज्रा

सुस्वामिवात्सल्यमपि प्रचक्रे,
श्रेष्ठी किसनलाल उदारभावः ।

इत्थं महीयान् सुमहो बभूवान्,
सूर्यासनाऽऽरोहणहेतवेऽस्य ॥ ४९२ ॥

उपजातिः

मासोपवासाऽऽदिकसत्तपस्या,
चाऽऽष्टाहिकाऽऽद्युत्सव उज्ज्वलश्च ।
स्वधर्मिवात्सल्यमभूदनेकं,
प्रभावना-पूजनमत्र नित्यम् ॥ ४९३ ॥

आडम्बरेणाऽत्र महीयसा च,
समस्त-गच्छीयजनैरमानैः ।
बभ्राम पुर्यां वरघोटको हि,
वेण्डाऽऽदिवाद्यैः सह गीतनादैः ॥ ४९४ ॥

गीतिः

स्थानकवासिन एवं, खरतर-लौकास्तपोगच्छीयाश्च ।
सर्वे वीयुर्द्रव्यं, समुत्साहिनः परममहामहेऽस्मिन् ॥ ४९५ ॥

चरितपतेरुपदेशा-दिह किसनलाल-सम्पतलालेभ्यः ।
धर्मशालां विशालां, मन्दिरमपि रमणीयमचीकरच्च ॥४९६॥

उपगीतिः

अचीकरदिहो(प)धान-मयमनेकपुम्भिः स्त्रीभिश्च ।
अन्ते महता महेन, मालां पर्यधापयद्व्रतिनाम् ॥ ४९७ ॥

श्रीविजयहर्षसूरि-र्महोपाध्यायश्रीदयाविजयः ।
पन्यास-मुक्तिविजयः, श्रीमान् पन्यास-कल्याणविजयः।४९८।

गणी मुनिमङ्गलविजयः, श्रीमान् सुगुणी मनोहरविजयोऽपि ।
मुनि-सम्पद्विजयगणी-त्यादिसप्तदश शिष्यास्तत्राऽऽसन् ।४९९।
(युग्मम्)

शार्दूलविक्रीडितम्

घाणेराव-पुराऽधिवासिनमसौ लातुं समेतं व्रतं,
नाम्ना भूरमलं प्रभुः शुभदिने संदीक्ष्य सूरीश्वरः ।
चक्रे तं भुवनाऽभिधं वरधियं चारित्रवेषोज्ज्वलं,
शिष्यश्चाऽस्य बभूव सोऽपि मतिमाञ्छ्रीनीतिसूरीशितुः ५००

उपजातिः

इत्थश्चतुर्मास्यनिवासमत्र,
फलोधिपुर्यां व्यपनीय सूरिः ।
प्रस्थाय तस्मादयमाजगन्वान्,
प्रख्यातिमद्विक्रमपत्तनं सः ॥ ५०१ ॥

पुरातनीयं नगरी विशाला,
सत्तीर्थरूपा प्रथितास्ति लोके ।
श्रद्धालवो धर्मरताश्च जैना,
वसन्ति भूरिप्रचुरर्द्धिमन्तः ॥ ५०२ ॥

पौराश्च नानाविधवाद्यनादै-
र्वधूजनानां ललितैश्च गीतैः ।
प्रवेशयामासुरमुं पुराऽन्तः,
शिष्यैश्च सर्वैः सह सूरिराजम् । ॥ ५०३ ॥

भवाऽटवी-दाव-समान-धर्म्य-
रम्योपदेशं सुचिरं प्रदाय ।
विहृत्य तस्मात्स हि मेहताऽऽरव्यं,
पुरं समागच्छदुदारचेताः ॥ ५०४ ॥

इन्द्रवंशा—

बेण्डाऽऽदि-वादित्र-निनादपूर्वकं,
सुश्राविका-मङ्गलमिष्ट-गायनैः ।
प्रावीविशंस्ते सकलास्तमार्हताः,
सूरीश्वरं शिष्यगणाश्रितं पुरम् ॥ ५०५ ॥

पापौघ-विच्छित्तिकरीं सुदेशना-
मत्युज्ज्वलां संसृति-सन्ततिच्छिदाम् ।
प्रादादसौ तत्र सुधामयीं परा-
माकर्ण्य तां सर्वजना अजहृषुः ॥ ५०६ ॥

प्रस्थाय तस्मात् समुपैच्च सोजतं,
पौरा उपेत्याऽभिमुखं महामहैः ।

श्रीमन्तमाचार्यमुपेतमादरैः,
प्रावेशयँस्ते नगरं सुमण्डितम् ॥ ५०७ ॥

पालीमितः सूरिरितो विहृत्य स,
सम्मानपूर्वं नगरीं प्रवेशितः ।
गोष्ठ्यां सकश्चाऽऽर्हतधर्म–देशनां,
पीयूष–तुल्यां ददिवांश्च सूरिराट् ॥ ५०८ ॥

वैतालीयम्

तखतगढमुपेयिवानितः,
सम–निनादित–सुतूर्यनिस्वनैः ।
सकल–पौर–सज्जनाऽनुगः,
प्रविवेश पुरं सूरिराडसौ ॥ ५०९ ॥

वसन्ततिलका

पालीपुराऽवधि–महामरुरुच्यते हि,
तत्राऽखिलेषु नगरेषु च लुम्पकानाम् ।
बाहुल्यमस्ति यदमीषु मुनीश्वराणां,
बोभोति जातु विहृतिर्न हि चोपदेशः, ॥५१०॥
श्रीमज्जिनाऽऽलय–महारमणीय–धर्म–
शालादिकं प्रतिपुरं कृतमस्ति तत्र ।
अस्त्येक केवल–महामुनिसंविहारा–
त्यावश्यकत्वमधुना प्रतिबोधनाय ॥ ५११ ॥

मालिनी

तपगच्छ इहाऽऽसीत्सर्वलोकेष्वनेक-
प्रबलतरविरोधो येन सर्वत्र हानिः ।
तमपि मुनिवरोऽयं नाशयामास सूरिः,
प्रतिजनमतिबोध्य स्वीयसारोपदेशैः ॥५१२॥

उपजातिः

इतो ययौ बॉभरवाडतीर्थं,
विधाय यात्रां गुरु-भक्तिभावैः ।
ततोऽर्बुदाऽद्रिं परिपेदिवान् स,
सच्छिष्यवर्गैः कृतवांश्च यात्राम् ॥ ५१३ ॥

इन्द्रवंशा

तत्राऽमदावादलुहार-पोलकी-
योपाश्रयाऽध्यक्ष-महेभ्य-पत्रिका ।
विज्ञप्ति-पूर्णा समुपेतुमागता,
तस्माद्विहारं प्रविधाय सत्वरम् ॥ ५१४ ॥

शिखरिणी

समायातः श्रीमानमित-महिमा पालनपुरं,
ततः सर्वे श्राद्धा विविध-वर-वादित्रनिनदैः ।

मृगाक्षीणां गीतैर्वददतिजय-ध्वान-मनुजैः,
सहानिन्युः सूरिं नगरमतिसज्जीकृतममुम् ॥ ५१५ ॥
(युग्मम्)

समारेभे सूरिः सदसि मधुपाकोपमगिरा,
सुधर्म्यं व्याख्यानं भव-जलधितारं जनिमताम् ।
सदादेयं रम्यं परमहितकारं सुगतिदं,
महामोहच्छेदं वृजिनततिहारं सुमतिदम् ॥५१६॥

इतः श्रीमानूँझानगरमभिपेदे सह निजैः,
सुशिष्यैस्तत्पौरा नददखिल-सद्वाद्यनिकरैः ।
सुकान्तानां गीतैरभिमुखमुपागत्य सुगुरो-
र्महीयांसं सूरिं निजनगरमानिन्यर इमम् ॥ ५१७ ॥

इतो मैसाणाऽऽख्यं नगरमयमागच्छदनघः,
पुरीलोकाऽऽरब्धैः परम-सुमहैश्चारुविविधैः ।
समस्तैः श्रीसंघै रभिमुखमुपेतैः प्रमुदितैः,
सहाऽसौ प्राविक्षत्पुरवर-मनल्पोत्सवमयम् ॥ ५१८ ॥

उपजातिः

तद्देशनां पौरजना निपीय,
सुधोपमां धर्ममयीं सुरम्याम् ।
श्रवःसुखां दुष्कृतराशिहर्त्रीं,
सुदुर्वचां काममपि तृप्तिमीयुः ॥ ५१९ ॥

ततोऽमदावादमवाप सूरिः,
संघाऽऽग्रहाद्वार्षिकसन्निवासम् ।
चकार आचार्यगणाऽग्रगण्यो,
निध्यष्ट-नन्द-क्षितिविक्रमाब्दे[१९८२] ॥ ५२० ॥

गीतिः

उत्तराध्ययनसूत्रं, शान्तिसूरिकृत-टीकया सहितं च ।
वाचयाञ्चकार तत्र, श्रीमान् विजयनीतिसूरिराचार्यः ॥५२१॥

वसन्ततिलका

आबाल-वृद्धनगरीजनता समुत्का,
श्रोतुं समागतवती प्रतिवासरं तत् ।
स्वीचक्रिरे व्रतमनेकजनाश्च प्रत्या-
ख्यानाऽऽदिकं जगृहिरे बहवश्च भव्याः ॥५२२॥

सूरीश्वरस्य गुरुबन्धुरमुष्य विद्वान्,
गम्भीरनाममुनिवर्य उदारबुद्धिः ।
देहं विहाय गतवांस्त्रिदिवं तदर्थे-
मष्टाह्निकं परममुत्सवमत्र चक्रे ॥ ५२३ ॥

उपजातिः

इहत्य-रूपासुरचन्दपोल-
वासी छगनलालमहेभ्यसूनुः ।

वाडीयुतो लाल उदारभावा-
दिहोपधानं तप आरम्भत् ॥ ५२४ ॥

व्ययैदत्र लोकप्रमितं सहस्रं,
मुद्राः सुधर्मा परमोत्सहिष्णुः ।
अभूतपूर्वं परमोत्सवं स,
चकार मालापरिधापनीयम् ॥ ५२५ ॥

मार्गे च शुक्ले कतिथौ प्रकाश-
मुनेश्च दीक्षां बृहतीं प्रदाय ।
चकार विद्याविजयस्य साधो-
रन्तेसदं तं मतिमन्तमेषः ॥ ५२६ ॥

महाद्युपाध्यायपदोपयुक्त-
दयाऽभिधानो मतिमान् सुविद्वान् ।
पन्न्यासभाग् दानविजिद्विपश्चित्,
पन्न्यासयुक् श्रीतिलको मुनिश्च ॥ ५२७ ॥

पन्न्यास-मुक्तिर्विजयोऽतिधीरः,
पन्न्यास-कल्याणमुनिः प्रविद्वान् ।
गणी च सम्पद्विजयो मुनिश्चे-
त्याद्याः सुशिष्या इह पार्श्वे आसन् ॥ ५२८ ॥
( युग्मम् )

भुजङ्गप्रयातम्

तपःशुक्लपक्षे मुनेः कस्य तिथ्यां,
स भद्रङ्कराऽऽख्यस्य दीक्षां च गुर्वीम् ।
प्रदायैष चक्रे मनोहृत्सुसाधोः,
सुशिष्यं विनीतं प्रभुः सूरिमुख्यः ॥ ५२९ ॥

उपजातिः

इहाऽमदावादगरिष्ठपुर्या-
मशेष-शुभ्राम्बर-सन्मुनीनाम् ।
बभूव सम्मेलनमुत्तमं तद्,
आमन्त्रिताः संघजनेन तत्र ॥ ५३० ॥

दूरादिहाऽऽगुस्त्रिशतं मुनीशा-
स्तेषां समेषां समुपागतानाम् ।
तत्रत्यसंघः कृतवाँश्च सम्यक्,
सुस्वागतं मानपुरस्सरं हि ॥ ५३१ ॥

अयञ्च तस्मिन्नधिवेशने हि,
चरित्रनेता मतिमद्वरीयान् ।
आसीत्प्रधानः प्रविचारणाऽऽदौ,
युगप्रधानः प्रभुनीतिसूरिः ॥ ५३२ ॥

दिनत्रयं तत्र बभूव तद्धि,
डेलाऽभिधोपाश्रय एव मुख्ये ।

ततश्च वण्डाऽभिध रम्यहर्म्ये,
श्रीमत्पुरश्रेष्ठिन एकमासम् ॥ ५३३ ॥

व्यमार्शि सर्वैर्बहुधा सभायां,
सुधीप्रकाण्डैर्मुनिपुङ्गवैस्तैः ।
प्रान्ते नवाऽऽचार्यवराः सुधीराः,
कृत्वा सभां तत्र विविच्य सम्यक् ॥ ५३४ ॥

मुनीश्वरैस्तैर्निरधारि यद्धि,
प्राकाशि तत्सर्वमशेषसंघे ।
सम्मेलनेऽस्मिन्न हि कोऽपि सूरिः,
प्रापच्च नेतृत्वमशेषकृत्ये ॥ ५३५ ॥

गीतिः

क्रियोद्धारक-पन्यास-सत्यविजय-पट्ट-परम्पराऽनुगः ।
अयमेव चरित-नेताऽऽचार्य नीतिसूरिरासीत्तदर्हः॥ ५३६ ॥

तदपि सकलाऽनुमत्या, नवाऽऽचार्यसमितिरेव सर्वमकृत ।
सभाऽवसानदिवसे हि, चरित्रपतेर्गुरुबन्धु-पन्यासः ॥५३७॥

उपजातिः

श्रीधर्मसंज्ञः कृतवांश्च कालं,
स्मरन्नजस्रं परमेष्ठिमन्त्रम् ।

ध्यायँश्च चित्ते स हि वीतराग–
पादारविन्दं गतसर्वमोहः ॥ ५३८ ॥ (युग्मम्)

उपगीतिः

देववन्दने श्रीमान्, आचार्य–विजय–नेमिसूरिः ।
आनन्दसागरसूरि–विजय–सिद्धिसूरीश्वराऽऽद्याः ॥५३९॥

अन्येऽपि त्रिशत–साधु–वर्याः समागताः सर्वके ।
भागमलप्सत तस्मिन्, प्रथित–महापुर–राजनगरे ५४०
(युग्मम्)

गीतिः––

एतच्चरितनेताऽपि, मोहमयीनगरीय–महेभ्यानाम् ।
समुपागत–विज्ञप्त्या, राजनगराच्चैत्रिके प्रविजह्रे ॥५४१॥

क्रमशो मासद्वयेन, मोहमयीपुरमाजगाम सूरिः ।
आडम्बरेण महता, प्रविवेष पुरं बहुभिः सह शिष्यैः ५४२

पायधुनीस्थितरम्ये, गोडीजित्पार्श्वनाथोपाश्रये ।
प्रावृष्युवास संघाऽऽग्रहाऽतिशयेन विजय–नीतिसूरिः ५४३

श्रीविजयहर्षसूरिः, श्रीमान् पन्यासभाक् तिलकविजयः ।
पन्यास-मानविजयो, विद्वान् पन्यास-कल्याणविजयः ॥

उपजातिः

गणीत्युपाधिर्मुनिसम्पदाख्यो,
यशोविजिच्छ्रीविनयी च विद्या ।

रामाऽभिधानो वरधी-सुभद्रः,
श्रीभानुनामा भुवनाऽभिधश्च ॥ ५४५ ॥

प्रकाशनामा मुनिदर्शनाऽऽख्यः,
शिष्या इमे मोहमयीसुपुर्याम् ।
प्रज्ञाकराः सूरिवरस्य पार्श्वे,
चाऽऽसँस्तपिष्ठा मतिमद्गरिष्ठाः ॥ ५४६ ॥
(त्रिभिर्विशेषकम्)

शार्दूलविक्रीडितम्

ज्ञाताधर्मकथामशिश्रवदसौ विद्याचणः सूरिराट्,
शीलाऽलङ्कृतिभूषिताश्च सकलाः सुश्राविकाः श्रावकाः ।
पौरा नित्यमुपागता अतिमुदा लोका असंख्या इह,
सद्भक्त्या परिशुश्रुवुर्विदधिरे भक्तिं कथायां पराम् ॥ ५४७ ॥

वसन्ततिलका

सूरीश्वरोऽक्षयनिधिं तप उत्तमं च,
लोकैर्धनैरिह हि कारितवानपूर्वम् ।
पन्यास-शान्तिविजयं प्रविधाय सार्धं,
सद्धी-सुभद्रमुनिना सुतपस्विना हि ॥ ५४८ ॥

सद्घाटकोपर-सुनाम्नि पुरे निवस्तुं,
प्रावृष्यशेष-जनता-प्रचुराऽऽग्रहेण ।

पन्न्यासभूषित–मुनिं तिलकाऽभिधानं,
श्रीमद्यशोविजय–साधुयुतं मलारे ॥ ५४९ ॥

प्रषीत्पयोद–दिवसानपनेतुमेष,
पन्न्यास–मानविजयं सह दर्शनेन ।
अन्धेरिकाऽऽख्यनगरे जनताऽऽग्रहेण,
वर्षर्तु–वासकरणाय समाज्ञिजच्च ॥ ५५० ॥
( युग्मम् )

उपजातिः

पन्न्यास–कल्याणमुनिं च कोटे,
प्रकाशनाम्ना मुनिना सहैव ।
सम्प्राहिणोत्सूरिवरश्चतुर्मा–
सिकामलंकारयितुं मुनीशः ॥ ५५१ ॥

इत्थं सुयोग्यान् बहुपत्तनादौ,
सम्प्रेषिषच्छिष्यवराननेकान् ।
कर्तुं चतुर्मासमतीव विद्वान्,
स्वयं च मुम्बानगरे रराज ॥ ५५२ ॥

श्रीसङ्घमत्रत्यमशेषमेष,
सद्देशनां सूरिवरो ददानः ।
जीर्णोद्धृतौ रैवतभूधरोप–
रिष्टाद्यथाशक्ति वसु प्रदातुम् ॥ ५५३ ॥

आदिष्टवान् संघजनोऽपि तस्मिन्,
गोडीजिपार्श्व-प्रभुचैत्यसत्कम् ।
ददौ च मुद्रामयुतप्रमाणा-
ममुष्य सूरेरुपदेशनुन्नः ॥ ५५४ ॥ (युग्मम्)

पर्यूषणादौ निरगादिहोच्चै-
रसंख्यलोकेषु समं व्रजत्सु ।
वाद्येषु बेण्डादिषु संनदत्सु,
रथेन सत्रा वर-घोटकश्च ॥ ५५५ ॥

इहस्थिताऽशेष-मुनीश-वर्गाः,
साध्व्यश्च सर्वा मिमिलुर्हि तत्र ।
परस्परं भूरि सहाऽनुमोद,
आसीद्विशेषः खलु साधुवर्गे ॥ ५५६ ॥

भूताऽक्षि-पृथ्वीमित-वत्सरीय-
ग्रन्थ्युत्सवे तत्र बभूव कोटे ।
आष्टाहिके शान्त्यभिषेकपूजा,
शिष्यैः सहाऽसौ गतवांश्च सूरिः ॥ ५५७ ॥

इत्थं महाऽऽडम्बरतो बभूवान्,
मुम्बापुरेऽस्मिंश्चरितस्य नेतुः ।
बिन्दु ग्रहाऽङ्कैकमिते [1990] च वर्षे,
वर्षानिवासः प्रभुनीतिसूरेः ॥ ५५८ ॥

ऐन्द्र्याश्च पुर्या अपि जित्वरीयं,
मुम्बापुरी सम्प्रति वर्वृतीति ।
व्यापारलीला महती च नाना,
बोभोति नित्यं वणिजाममुष्याम् ॥ ५५९ ॥

गव्यूति-षट्कद्वयसी धराया,
देव्याः सुभालस्थित-बिन्दुकल्पा ।
उदन्वतो रोधसि वर्तमाना-
ऽमरावतीं चोपहसत्यजस्रम् ॥ ५६० ॥

सहस्रशश्चाऽत्र वसन्ति जैनाः,
कोटिध्वजाः सद्गुरु-देवभक्ताः ।
विभान्ति चैत्यानि दशाऽत्र पुर्यां,
महान्ति तारापथलेलिहानि ॥ ५६१ ॥

तपःसिते तत्र गणेशतिथ्यां-
तं राजपूर्वे नगरे वसन्तम् ।
मुमुक्षुचन्दूयुतलालसंज्ञं,
प्राव्राजयत्सूरिवरो गरीयान् ॥ ५६२ ॥

मालिनी--

चरणविजयनाम्ना सर्वलोके प्रसिद्धं,
धृत-गणिपद-सम्पत्साधुशिष्यं प्रचक्रे ।
तपसि सितचतुर्थ्यां मोहमथ्या विजह्रे,
सुविहित-वर-सूरि-व्राजि-पञ्चाननोऽयम् ॥ ५६३ ॥

उपजातिः--

श्रीमानसौ भायखलामयासीत्,
तत्रत्य-सुश्रावकसत्कृतोऽभूत् ।
बेण्डाऽऽदिवाद्यैर्ललनासुगीतैः,
प्रविष्टवानेष पुरं सशिष्यः ॥ ५६४ ॥

ओजस्विनीं सर्वजनोपकर्त्रीं,
सुधामयीं किल्विष-राशिहर्त्रीम् ।
सद्देशनां तत्र चिराय दत्त्वा,
पौराँश्च भव्यान् समतूतुषत्सः ॥ ५६५ ॥

आयिष्ट सूरिः प्रविहृत्य तस्मात्,
स लालवाडीं जनताश्च भव्याः ।
धर्मोपदेशैर्बहुधोपकृत्या-
ऽन्धेरीतिनाम्नीं नगरीं समागात् ॥ ५६६ ॥

महोत्सवैस्तत्र पुरि प्रविश्य,
व्याख्याय सुश्रावक-धर्म-कृत्यम् ।
विहृत्य सम्प्राप मलाडमेष,
धर्मानुपादिश्य गतो ह्यगासीम् ॥ ५६७ ॥

ततो विहृत्याऽऽगतवांश्च देणुं,
रोडं पुरं पौरजनैश्च बाढम् ।
सम्मानितस्तत्र जनान् प्रबोध्य,
पुरीमछारीं समुपेतवान् सः ॥ ५६८ ॥

ततश्च वापीनगरीमियाय,
बेन्डाऽऽदिवाद्यैर्युगपन्नदद्भिः ।
सार्धं समागत्य समस्तपौरा,
व्यधुश्च साम्मुख्यममुष्य सूरेः ॥ ५६९॥

सत्रा च तैः सूरिवरः प्रविश्य,
पुरं ददौ मङ्गलदेशनां सः ।
चन्द्र-ग्रहा-ऽङ्केन्दु-मिते [१९९१] च वर्षे,
तपस्य-शुक्ले चतुरास्यतिथ्याम् ॥ ५७० ॥

चक्रे प्रतिष्ठां भगवज्जिनेश-
मूर्तेरसौ भव्य-नवीन चैत्ये ।
आरभ्य माघाऽसित-याम्यतिथ्या,
अष्टाऽऽह्निकं चारुमहामहश्च ॥ ५७१ ॥

अष्टासु घस्रेष्वपि संघजेमनं,
ह्यागुः सहस्रं त्विह पञ्च लोकाः ।
प्रभावना श्रीफलकादिभिश्च,
नानोपचारैरभवच्च पूजा ॥ ५७२ ॥

गीतिः

धर्मपुरक्षितिपालो, हिझ-हाइ-नेस-देवविजयसिंहः ।
श्रीमाँस्तत्राऽऽयातः, श्रीमन्तमेनमाचार्यममिलच्च ॥५७३॥

"राजन् ! जीवोपरिष्टात्, कुरुष्व दयामवनीपते ! नित्यम् ।
प्राणो भवति प्रेयान्, समेषामत एव कमपि मा वधीः ॥५७४॥

स्वात्मनीव परकीयं, वेविद्यते सततं सुख–दुःखादि ।
सैव धीमानुभयत्र, चिराय सुखमनुभवति क्षितिजानिः" ॥५७५

आर्या

सारोपदेशमेवं, निशम्य सूरेरमोमुदीद्राजा ।
मूर्धनि वासक्षेपं, कृतवाँश्चरितनायकस्तस्य ॥ ५७६ ॥

प्रतिबिम्बं तद्यत्रैः, समस्तसदसोऽपातयच्च कारुः ।
तदनु नरेशः श्रीमान्, कृतवान् प्रभुदर्शनं भक्त्या ॥ ५७७ ॥

उपजातिः

इत्थं प्रतिष्ठां विधिवद्विधाय,
प्रस्थाय वाप्या दमणं समागात् ।
पुरप्रवेशोत्सवमत्र पौराः,
चक्रुः प्रशस्यं महतोऽस्य सूरेः ॥ ५७८ ॥

शालिनी

बीलीमोरामाजगामैष तस्मात्,
पौराश्चक्रुर्भूरिसत्कारमेषाम् ।
दत्वा रम्यां देशनां तत्र सूरिः,
सर्वान् भव्यान् मोदयामास बाढम् ॥ ५७९ ॥

द्रुतविलंबितम्

अमलसारपुरं तत आगम-
चलित एष चरित्रपतिर्मुदा ।
भविक-नागर-कारित-सूत्सवैः,
स नगरं प्रविवेश सुसज्जितम् ॥ ५८० ॥

वैतालीयम्

नवसारीपत्तनं तत-श्चाऽऽययौ सूरि-रेषको महान् ।
पौरजनैर्मानपूर्वकं, प्रावेशि नगरमार्हतैर्मुदा ॥ ५८१ ॥

उपजातिः

विहृत्य तस्मादथ बारडोली-
मुपेयिवानेष सशिष्यसूरिः ।
बेण्डादिनादैरमितैश्च पौरैः,
सह प्रविष्टो नगरं महिष्ठः ॥ ५८२ ॥

ऐद् माङ्गरोलं नगरं ततोऽसौ,
गुरु-प्रहर्षैः पुरवासिलोकैः ।
बेण्डाऽऽदिभिः सम्मुखमेत्य सूरि-
रानायि शिष्यैः सहितः पुरं सः ॥ ५८३ ॥

द्रुतविलम्बितम्

जघडियानगरीमयमाययौ,
नगर-वासि-विशेष-महामहैः ।

पुरमथ प्रविवेश गुरुर्महा-
नदित पर्षदि धार्मिक-देशनाम् ॥ ५८४ ॥

इन्द्रवज्रा

गन्धार-जम्बूसर-मेत्य कावी-
मित्वा स खम्भातपुरं जगन्वान् ।
गुर्वागमं पौरजना निशम्य,
सद्वेण्ड-भेरी-पटहाऽऽदिवाद्यैः ॥ ५८५ ॥

आख्यानकी

नानद्यमानैर्युगपत्सुगीतैः-
सीमन्तिनीनामतिसुन्दरीणाम् ।
सहेत्य सूरीश्वर-सम्मुखं ते,
पुरप्रवेशं समचीकरन्त ॥ ५८६ ॥ (युग्मम्)

उपजातिः

आरब्धवानेष गुरुर्महीयान्,
मेघाऽऽरवाऽऽडम्बरजित्स्वनेन ।
सुधामयीं धार्मिक-देशनां स,
संसार-पाथोनिधि-रम्यनावम् ॥ ५८७ ॥

प्राचीनपुर्यामिह पूर्वकाले,
सुश्रावकाणां निलयाः सहस्रम् ।

भव्यानि-चैत्यानि महान्ति भूरि,
चाऽऽसन्निदानीमपि सन्ति तत्र ॥ ५८८ ॥

आकाशचुम्बीनि च पञ्चत्रिंशद्,
जिनेश्वराणां वरमन्दिराणि ।
तत्राऽमदावादनिवासि-चीमन्-
लालाऽभिधं सूरिवरः सुदीक्ष्य ॥ ५८९ ॥

चकार तं श्रीमुनिचम्पकेति-
नाम्ना प्रसिद्धं स बभूव शिष्यः ।
आचार्यवर्यस्य विदां वरस्य,
प्रख्यात-सद्वादिविजित्वरस्य ॥५९०॥ (युग्मम्)

प्रत्येकपुर्यां भविकांश्च जीवान्,
धर्मोपदेशाऽमृतमेष सूरिः ।
अपीप्यदत्यन्तमनेकलोका-
नतीतरत्संसृति-दुस्तराऽब्धेः ॥ ५९१ ॥

सुस्वामिवात्सल्य-विशेष-पूजा-
प्रभावनाश्चाऽपि बभूवुरेषु ।
इत्थं जनानेष बहूपकुर्वन्,
शत्रुञ्जय-क्षेत्रमियाय सूरिः ॥ ५९२ ॥

गीतिः

कोचीन-नगरवासी-जीवराज-धनजीत्यभिधः श्रेष्ठी ।
वर्षैः पञ्चभिरस्मिं श्चातुर्मास्य-चिकारयिषुश्चाऽऽसीत् ।५९३।

नगरश्रेष्ठी वनमा-लीदासः परमानन्दमाधवः ।
जेठालालप्रमुखा, आग्रहीषुर्गृहमेधिनः परमम् ॥ ५९४ ॥

शार्दूलविक्रीडितम्

भून-५-ग्रह-चन्द्रमःप्रतुलिते संवत्सरे वैक्रमे, [१९९१]
वैशाखे शशिमद्दले यमतिथौ श्रीनीतिसूरीश्वरः ।
शिष्यैर्नन्द-धैरामितैरनुगतैः सत्रा गरीयान् गुरु- [९९]
र्बैण्डाऽऽद्याऽखिल-वादनेषु युगपन्नानद्यमानेष्वलम् ॥५९५॥

गायन्तीषु नितम्बिनीषु शतशो माङ्गल्य-गीतं मुदा,
बन्दिव्राजिषु पापठत्सु रुचिरं स्तोत्रं च सूरीशितुः ।
वाजि-व्राजिषु सूत्पतत्सु जनतास्वग्रेसरासु ध्वजै-
र्व्यालोलाऽऽव्य-सुपाण्डुराऽरुण-हरित्पीनांशुकैरुच्चकैः ॥५९६॥

सन्नामाऽङ्कित-बोर्डकैश्च विविधैः प्रत्येक-राजाऽध्वसु,
प्रोद्धद्धैर्बहुमण्डपैश्च रचितैः संशोभितैतत्पुरम् ।
सानन्दं महता महेन चरिताऽधीशः प्रभावी महान्,
सर्वाऽऽशा-प्रसृताऽमलाऽधिकयशाः सम्प्राविशत्सूरिराट् ॥

(त्रिभिर्विशेषकम्)

वसन्ततिलका

कोचीनवासि-धनजी सुत-जीवराज-
श्चाऽऽडम्बरेण महता कृतवानमुष्य ।

विद्यानिधेः सकल-सूरि-शिरोमणेर्हि,
सान्मुख्य-चारु-विपुलोत्सवमेतकस्मिन् ।५९८।

उपजातिः

सुस्वामि-वात्सल्यमिहत्य सेवा-
समाज इद्धाऽधिक-भाव-पूर्णः ।
अतिप्रशस्यं स्ववसु-व्ययेन,
चकार तस्मिन् दिवसे समग्रः ॥ ५९९ ॥

ततः समागात् पुरि कुण्डलायां,
कियद्दिनाऽनन्तरमेष सूरिः ।
तन्नागराऽऽरब्ध-महामहेन,
पुर-प्रवेशं कृतवान् गरीयान् ॥ ६०० ॥

शशाङ्क-रन्ध्राङ्कमहीमिता[१९९१]ऽब्द-
राधीय-कृष्णे दशमीतिथौ सः ।
दीक्षोत्सुकं तन्नगरीय-वल्ल-
भदासनामानमुदारबुद्धिम् ॥ ६०१ ॥

मालिनी

मनसुखसुतलालं चाऽपि सन्दीक्ष्य सूरिः,
क्रमश उभय-नाम्नी सद्गुरुर्वल्लभेति ।
मलय इति च दध्रे तावभूतां सुशिष्यौ,
सकल-गुणगरिष्ठाऽऽचार्यवर्यस्य बन्धू ॥६०२॥ (युग्मम्)

उपजातिः

आष्टाह्निकं सूत्सवमत्र शान्ति-
स्नात्राऽर्चनं पौरजनाः प्रचक्रुः ।
सुस्वामिवात्सल्यमपि प्रशस्तं,
प्रभावना-पूजनमुज्ज्वलं च ॥ ६०३ ॥

ततश्चलित्वा पुनराजगन्वान्,
स पादलिप्तं नगरं सुतीर्थम् ।
प्रावृष्यतिष्ठत्त्विह जीवनाऽऽदि-
निवास-हर्म्ये प्रभु-नीतिसूरिः ॥ ६०४ ॥

शिखरिणी

महोपाध्यायः श्री-मदधिकगुणज्ञो मुनिदया,
सुपन्यासः शान्तिर्विजय इह पन्यास उदयः ।
सुपन्यासः कल्या-णविजयशुभाख्यो गणि-मनो-
हरः श्रीमान् धीमानतिशयतपिष्ठो मुनिवरः ॥ ६०५ ॥

गणी सम्पत्साधू रविविजयसाधुर्मुनि-यशो-
विजिद्विद्या-रामौ विजयसहितौ धीर-धिषणौ ।
सुभद्राऽऽख्यः सद्धीर्भुवनविजयोऽत्यन्त-मतिमान्,
प्रकाशाह्वः श्रीमानतिविनयि-भद्रङ्करमुनिः ॥ ६०६ ॥

द्रुतविलम्बितम्-

चरण-चम्पक-वल्लभसाधवो,
मलयनामधरस्तपसांकरः ।
नव-शशिप्रमिता मुनयस्त्विमे,
जुजुषिरे सततं गुरुपत्कजम् ॥ ६०७ ॥

उपजातिः

आवश्यकं सूत्रमशेषमेष,
ह्यशुश्रवत्सार्थमिहत्यसंघम् ।
स्त्रियः पुमांसो बहुशो हि लोकाः,
श्रोतुं समागुः प्रतिवासरेषु ॥ ६०८ ॥

मासोपवासं द्वि-गुणप्रमाण-
दिनोपवासं च जनाः प्रचक्रुः ।
तदर्थ-माष्टाहिक उत्सवोऽभूत्,
सुशान्तिक-स्नात्रसमर्चनं च ॥ ६०९ ॥

श्रीमद्-यशस्वद्-धनजीतिनाम्नः,
पुत्राऽवतंसो धनि-जीवराजः ।
उद्यापनं सोत्सवमन्वतिष्ठत्,
तदर्थमष्टाह्निकमुत्सवं च ॥ ६१० ॥

अष्टोत्तर-स्नात्र-विशेष-पूजां,
सुस्वामिवात्सल्यमपि प्रशस्ताम् ।

प्रभावनां श्रीफलकाऽऽदिभिश्च,
श्रेष्ठी प्रचक्रे विपुलव्ययेन ॥ ६११ ॥

सीपोरवासी शुभधीश्च वाडी–
लालो हठीसिंह–महेभ्यपुत्रः ।
अत्रोपधानं तप आरम्भत्,
तदीय मालार्पणहेतवेऽसौ ॥ ६१२ ॥

अष्टाह्निकं चारुमहामहं च,
वह्नूत्तर स्नात्रसमर्चनं सः ।
सुस्वामिवात्सल्यमपि प्रचक्रे,
चरित्रनेतुर्निरघोपदेशात् ॥ ६१३ ॥

द्रुतविलम्बितम्

अथ जनाऽनुमता जनताहिता,
जिनपशासनवृद्धिविधित्सया ।
विजयनीतिमुनीशमहाशयाः,
सकलसंघहितैकमनीषया ॥ ६१४ ॥

अपि सदागमवेदिसुसाध्वरं,
भवति शासनवृद्धिविधायिनी ।
इति विचिन्त्य सुशास्त्रविशारदा,
रचयितुं वरपाठनपद्धतिम् ॥ ६१५ ॥ (युग्मम्)

मालिनी

ऋषभपदपवित्रे पादलिप्ताभिधाने,
भविकभवनमध्ये जैनसंघाश्रितेऽध्ये ।
निखिलजिनपतीनां मन्दिरैर्मण्डिते वै,
सकलकरणयुक्ते जीवनाख्ये निवासे ॥ ६१६ ॥

धनिकधनजिदाख्यस्यात्मजं जीवराजं,
सुकृतकृदुपदेशैर्बोधयित्वा मुनीशः ।
प्रथमपठनमुख्यां जैनसाध्वीजनानां,
कृतिषु जगति मुख्योऽस्थापयत् पाठशालाम् ।६१७।
(युग्मम्)

शार्दूलविक्रीडितम्

यस्यां श्रावकसंघभूषणसमश्रीजीवराजात्मजै-
र्धन्यश्रीधनजीसुनामविदितैः श्रीसिद्धक्षेत्रे(भूमौ) कृते ।
यात्राकृद्धितकारिजीवनमुखश्रीमद्विलासाऽभिधे,
प्रासादे सततं पठन्ति सकला अद्यापि साध्व्यो मुदा ॥६१८॥

उपजातिः

साध्वीसमूहः खलु यत्र तिष्ठन्,
विज्ञानवृद्धिं प्रकरोति भूयः ।
अद्यापिपर्यन्तमतुल्यशीलै-
रध्यापकैः श्रीजिनसंघभक्तैः ॥ ६१९ ॥

तीर्थोद्धारकरे नृणां मलहरे चारित्रचर्यापरे,
चाऽष्टाह्नि(?)क महोपधानतपसामासीत् प्रवृत्तिः परा ॥६२४

धर्मौन्नत्यमिहाऽभवद् बहुतरं प्रोत्साहिसंघे समे,
नैकेऽलासिषुरुत्तमा नियमनं सावद्यकर्माऽजहुः ।
धर्मे दार्ढ्यमयासिषुश्च सकलाः सुश्रावका भावुकाः,
सम्यक्त्वं प्रतिपेदिरे सुभविनः शुध्धोपदेशाद् गुरोः ।६२५।

उपजातिः

पूर्णे चतुर्मासनिवासकार्ये,
महोपधानादिकधर्मकृत्यैः ।
श्रीनीतिसूरीश्वरसूरिसूर्या,
विहर्तुमैच्छन् नियमानुयुक्ताः ॥ ६२६ ॥

शार्दूलविक्रीडितम्

श्रीमन्नेमिजिनेश्वरं गुणिवरं प्रेम्णा प्रणन्तुं तदा,
भव्यान् बोधयितुं मुदा जिनमतं विश्वेऽभिवि(?)वृत्सया ।
आचार्यैकधुरन्धराः शमपराः कृत्वा विहारं शुभं,
साध्वोघैः सह पादलिप्तपुरतः श्रीजीर्णदुर्गं गताः ॥६२७॥

वसन्ततिलकावृत्तम्

सूरीश्वरो हि विधिविज्जिननेमितीर्थं,
शिष्य-प्रशिष्यकसमं गिरिमुज्जयन्तम् ।

आरुह्य नाकपथवच्च मुदाऽनमत्तान्,
श्रीनेमितीर्थपतिमुख्यजिनेश्वरान् सः ॥ ६२८ ॥

ते उज्जयन्तगिरिराजविराजमान-
श्रीयादवान्वयविभूषणभूषणस्य ।
श्रीमत्समुद्रविजयाभिधभूपपुत्र-
द्वाविंशति(१)तमसुतीर्थकरस्य तस्य ॥ ६२९ ॥

आजन्मनैष्ठिकमहाव्रतधारकस्य,
सद्ब्रह्मचर्यचरणैकधुरन्धरस्य ।
दृष्ट्वा हि नेमिजिनपस्य सुमूर्तिमद्धा,
आत्मोन्नतिं परमभावनयाऽन्वभूवन् ॥ ६३० ॥
(युग्मम्)

उपजातिः

पुरे तु तस्मिन् समस्तूरिधुर्या,
दुर्गेषु वर्ण्ये वरजीर्णदुर्गे ।
द्वि-नन्द-नन्दैकमिते प्रसिद्धे,
श्रीवैक्रमीये शुभवत्सरे ते ॥ ६३१ ॥

श्रीपौषमासस्य सुकृष्णपक्षे,
षष्ठ्यां तिथौ सौम्यदिने सुलग्ने ।
जिनेशभक्तं भविकं विरक्तं,
दीक्षामदुः श्रावकवर्यमेकम् ॥६३२॥ (युग्मम्)

मालिनीवृत्तम्

अरुणविजयमुच्चैर्नाम कृत्वा वरेण्यं,
विजयिविजयनीति(ती)सूरिसूर्यास्तदीयम् ।
अरुणसमप्र(चि)काशं पापतापप्रणाशं,
निजचरणसुगुप्त्यै बोधमस्मै व्यतार्षुः ॥ ६३३ ॥

उपजातिः

श्रीमद्दयादेर्विजयान्तनाम्नो,
दयापरस्याऽत्र्यमुनीश्वरस्य ।
उच्चैरुपाध्यायपदान्वितस्य,
शिष्यं व्यधुस्ते नवदीक्षितं तम् ॥ ६३४ ॥

शार्दूलविक्रीडितम्

श्रीप्रह्लादपुरीयधन्यधनिकः श्रीकान्तिलालाभिधो,
डाह्याभाइतनूद्भवोऽत्र समये श्रीजीर्णदुर्गं गतः ।
संसाराब्धिसुपातिमोहहतये स्वात्मीयदीक्षाकृते,
वैराग्याद् भववासतो गुरुवरं श्रीसूरिमातिर्थत[1] ॥ ६३५ ॥

उपजातिः

श्रीसूरिवर्योऽपि शमप्रधानः,
तस्यात्मकल्याणकृतेऽतिभव्यम् ।

१ अभ्यर्थयते स्म ।

तं श्रावकं भावयुतं विदित्वा,
तत्प्रार्थनां पुण्यपरोऽन्वमंस्त ॥ ६३६ ॥

तथा च तस्मिन् वरवत्सरे हि,
श्रीमाघमासस्य सिते सुपक्षे ।
पूर्णाभिधायां दशमीतिथौ वै,
सौम्ये दिने शोभनकारिलग्ने ॥ ६३७ ॥

चतुर्विधांस्तन्नगरस्य संघान्,
कौटुम्बिकांस्तस्य जनांश्च पृष्ट्वा ।
सर्वानुमत्या मुनिपाश्च तस्मै,
दीक्षामदुर्भागवतीं पवित्राम् ॥ ६३८ ॥
(युग्मम्)

दत्त्वाऽभिधानं स्वगुणानुरूपं,
श्रीकञ्चनाद्यं विजयान्तरम्यम् ।
सत्काञ्चनां तस्य तनूमकार्षुः,
सम्यक्त्वचारित्रसमर्पणेन ॥ ६३९ ॥

हरिणी

अथ जिनरतो जैनाचार्यः सुशास्त्रविशारदः,
जगति विदितस्तीर्थोद्धर्ता भवाब्धिसुपारदः ।
मुनिगणवृतो मान्यः सर्वैर्जिनमत(नेशसु)संघकै-
र्विजयिविजयाद्याख्याख्यातः स नीतिमुनीश्वरः ॥६४०॥

उपजातिः

ततो जनानां प्रतिबोधनार्थं,
श्रीनीतिसूरीश्वरसूरिस्तु(नु)त्याः ।
शिष्यैः प्रशिष्यैः सह धर्मधुर्या,
व्यहार्षुरस्मात् पुरजीर्णदुर्गात् ॥ ६४१ ॥

क्रमेण गत्वा पुरि जेतपुर्यां,
ततोऽगमन् श्रीपुरगोंडलाख्याम् ।
सर्वत्र सर्वैरभिवन्द्यमाना,
धर्मोपदेशैरभिनन्द्यमानाः ॥ ६४२ ॥

ततो विहारं प्रविधाय सारं,
भवाब्धितारं भविनां मुनीशाः ।
राज्ञां सुहर्म्यैः प्रविराजमानं,
श्रीराजकोटाख्यपुरं प्रयाताः ॥ ६४३ ॥

द्रुतविलम्बितम्

तदनु नैकपुरादिवनादिषु,
सरलसौम्यजनैः कृतधामसु ।
स विहरन् जिनभक्तनिवासिषु,
मुनिवरो वरवङ्कपुरं गतः ॥ ६४४ ॥

वंशस्थवृत्तम्

विराजितं यद् ध्वजदुर्गमुद्रया,
मत्स्योदरीनामनदीपरिश्रितम् ।
गिरीन्द्रकल्पैर्गिरिगुम्फगुम्फितं,
जिनेशप्रासाद(हर्म्यादि)गणैर्विभूषितम् ॥६४५॥

उपजातिः

तथा च तस्यां वरवङ्कपुर्यां,
श्रीमत्सुदामापुरनामपुर्याः ।
वास्तव्यवर्या गुणशीलधुर्या,
सच्छ्राविकां सूरिरदीक्षयत् सः ॥ ६४६ ॥

शार्दूलविक्रीडितम्

तस्मिन्नेव सुवत्सरे सुखकरे मासोत्तमे फाल्गुने,
शुक्ले पञ्चमिते(?) तिथौ शुभदिने श्रीवङ्कपुर्यां तदा ।
श्रीसूरीश्वरसन्निधौ ध्वजवरः श्रीजैनदेवालये,
संघैस्तत्पुरवासिभिर्हि समहं हर्षात्समारोपितः ॥ ६४७॥

उपजातिः

एवं क्रमेणोत्तमसूरिराजाः,
सर्वत्र भव्यान् प्रतिबोधयन्तः ।
वर्षापनाकार्यविवर्धमानाः,
श्रीस्थानदुर्गारण्यपुरं प्रयाताः ॥ ६४८ ॥

ततोऽनु मूलीतिशुभाभिधानं,
　　ग्रामं विहृत्यात्मविदामधीशाः ।
श्रीवर्धमानादिककेम्पनाम्नि,
　　पुरे विहारं व्यदधुर्मुनीशाः ॥ ६४९ ॥

तत्रत्यसंघैश्च मुदामुदारं,
　　पात्रैः सुपात्रात्मगुरूत्तमानाम् ।
भव्योत्सवैर्भव्यजनैश्च सार्धं,
　　पुर्यां प्रवेशः परिकारितस्तैः ॥ ६५० ॥

श्रीवर्धमानाख्यपुरे ततोऽनु,
　　श्रीपाटडीति(?)शुभनामपुर्याम् ।
कृत्वा विहारं मुनिराजराजा-
　　स्ततो बजाणाख्यपुरं प्रयाताः ॥ ६५१ ॥

ततो दसाडाख्यपुरात् क्रमेण,
　　विहृत्य पञ्चासरनामरम्यम् ।
ग्रामं च गत्वा विजयादिनीति-
　　सूरिः स शङ्खेश्वरतीर्थमागात् ॥ ६५२ ॥

शार्दूलविक्रीडितम्

आकाले वसुधाविवृद्धविभवः श्रीमत्प्रतापोद्धतः,
　पुण्यासप्रतिवासुदेवपदवीयुक्तो जरासन्धराट् ।

शत्रोः शक्तिजिहीर्षया निजबलस्यौजःप्रकाशेच्छया,
श्रीमत्कृष्णबलौघदुर्बलकरीं विद्यां जरां मुक्तवान् ॥ ६५३ ॥

यस्याः स्नात्रजलस्य सेचनविधेः सा कृष्णसैन्यस्थिता,
मुक्ता श्रीप्रतिवासुदेवबलिना नष्टा जरा सत्वरम् ।
तां शङ्खेश्वरपार्श्वनाथजिनपश्रीमत्प्रभावान्वितां,
मूर्तिं सुचितकरीं नृणामघहरां दृष्ट्वा मुदं प्राप्नुवन् ॥६५४॥
(युग्मम्)

तस्मिन् तीर्थवरे वरेण्यवरदे श्रीजैनधर्मोद्धुरे,
श्रीशङ्खेश्वरपार्श्वनाथविदिते भव्यात्मबोधिप्रदे ।
सच्चारित्रयुतां सतां सुखकरे तत्रैव संवत्सरे,
सन्मासोत्तमचैत्रकृष्णदलके सौम्ये द्वितीयादिने ॥६५५॥

श्रीमत्पट्टनपूर्निवासिभविकं श्रीकान्तिलालाभिधं,
भोगीलालतनूद्भवं सुकृतिनं वैराग्यरङ्गान्वितम् ।
श्रीमन्नीतिमुनीश्वराः सुसमये तच्छ्रूयते(से)ऽदीक्षयन्,
नाम श्रीकनकादिमं विजययुक् तद्दीक्षितस्य व्यधुः ।६५६।
(युग्मम्)

उपजातिः

ततस्तदा राधनपूर्निवासी,
श्रीप्रेमचन्द्रेभ्यतनूज आसीत् ।

दलाल इत्याद्युपनामधारी,
रतीशतुल्यो रतिलालनामा ॥ ६५७ ॥

तस्य स्वसा श्रीमथुरीतिनाम्नी,
वैराग्यरङ्गोदयतस्तदानीम् ।
श्रीनीतिसूरीश्वरसूरिसूर्या-
च्चारित्रवित्तात् स्वगुरूत्तमाच्च ॥ ६५८ ॥

महाप्रभावौघविराजमानात्,
तदुत्तमश्लाघ्यकराम्बुजात् सा ।
दीक्षां ग्रहीतुं निजकर्म हन्तु-
मैच्छत्तदाऽऽत्मीयहिते स्वचित्ते ॥ ६५९ ॥
(त्रिभिर्विशेषकम्)

ततः सुरम्यो रतिलालनामा,
स प्रेमचन्द्रात्मजसौम्यधामा ।
श्रीराधनादि(?)पुरतो निरीय,
शङ्खेश्वरे तीर्थवरे तदागात् ॥ ६६० ॥

विनम्य सूरीश्वरपूज्यपादान्,
न्यवेदयत् स्वीयपुरागमाय ।
तथैव तत्रत्यसमस्तसंघो,
गुरूत्तमं प्रार्थयत प्रसिद्धम् ॥ ६६१ ॥ (युग्मम्)

द्रुतविलम्बितम्

विजयनीतिमुनीन्द्रगणाग्रणीः,
सकलशास्त्रविशारदपारदः ।
जिनमते सुरतो जनतास्तुतः,
रसिकराधनपूर्भविनां हिते ॥ ६६२ ॥

सकलशिष्यसमूहसमन्ततः,
परिवृतो गणनातिगनागरैः ।
सुखविहारविहारकरोऽभवत्,
नगरराधनपूर्गमनाय सः ॥ ६६३ ॥ (युग्मम्)

शार्दूलविक्रीडितम्

श्रीमद् राधनपूर्निवासिपुरुषैः सौजन्यभक्ति(क्त्या)युतै-
र्जैनाचार्यधुरन्धरस्य महतः श्रीनीतिसूरेस्तदा ।
नानावाद्यपुरस्सरैः सुकृतिभिर्गीतादिसन्मङ्गलै-
स्तीर्थोद्धारकरस्य भावसहितोऽकारि प्रवेशोत्सवः ॥ ६६४॥

वसन्ततिलका

युग्म-ग्रह-ग्रहमहीप्रमितेऽब्दकेऽस्मिन् [१९९२],
श्रीविक्रमार्कनृपतेः प्रविवर्तमाने ।
वैशाखशुक्लदशमीशुभवासरे हि,
चारित्रपात्र-समतायुतशिष्यरत्नम् ॥६६५॥

श्रीसंघमान्यमुनिराजवरं सुशीलं,
श्रीसंपदादिविजयं गणिनं गुणाढ्यम् ।
सम्यक्त्वतत्त्वविदुरं भिदुरं भवार्तेः,
श्रीमङ्गलादिविजयं विदुषा च वर्ण्यम् ॥ ६६६ ॥

वंशस्थवृत्तम्

चतुर्विधश्रीयुतसंघसन्निधौ,
चतुर्विधप्रौढकषायकाषिणोः ।
सम्यक्त्वतत्त्वागमसारवेदिनोः,
स्वकीयशिष्योत्तमयोस्तयोस्तदा ॥ ६६७ ॥

वसन्ततिलका

चारित्ररत्नगुणदर्शिमहापदेन,
'पन्न्यास' इत्यभिधया श्रुतभूषणेन ।
सूरीश्वराः सुगुणिनोश्च शुभाभिधाने,
सम्यक्त्वभूषणयुतोः समभूषयंस्ते ॥ ६६८ ॥
(चतुर्भिः कलापकम्)

उपजातिः

दिने च तस्मिन् समदीक्षयंस्ते,
कषायशत्रून्मथनीं मथूरीम् ।
सुश्राविकां धर्मिसमूहमान्यां,
पुण्यां वदान्यां धनिकां सुभाग्याम् ॥ ६६९ ॥

दत्त्वा च दीक्षां महसां महिम्ना,
कृत्वा सुनाम्ना महिमाश्रियं ताम् ।
व्यधुश्च शिष्यां स्वयथार्थनाम्न्या,
लाभश्रियाः शीलगुणैकधाम्न्याः ॥ ६७० ॥
(युग्मम्)

स्रग्धरावृत्तम्

वैशाखे शुक्लपक्षे शुभसितदशमीसौम्यवारे सुलग्ने,
तीर्थोद्धर्ताऽग्रहर्ता विजयपदयुतो नीतिसूरीश्वरो हि ।
तस्मै श्रीकंचनादि(?) विजयपदयुजे राधनादि(?)पुरेऽदात्,
छेदोपस्थापनीयां मुनीजनसुमतां सद्बृहत्पुण्यदीक्षाम् ।६७१।

उपजातिः

श्रीप्रेमचन्द्रात्मजधर्मधामा,
दलालवित्तो रतिलालनामा ।
प्रभावनां भावभृतो ह्यकार्षीत्
फलप्रदां श्रीफलसत्फलौघैः ॥ ६७२ ॥

तथाऽन्यसुश्रावकवर्गमान्याः,
श्रीशार्कराद्युत्तमखाद्यमुख्याम् ।
महोत्सवेऽस्मिन् प्रविवर्तमाने,
प्रभावनां धर्महिते व्यधुश्च ॥ ६७३ ॥

तथैव चाऽस्मिन् महति प्रसङ्गे,
आदीशदेवायतने वरिष्ठान् ।
अष्टाह्निकादीन् सुमहोत्सवांश्च,
श्रीसंघमान्याः समुदो व्यतन्वन् ॥ ६७४ ॥

द्रुतविलम्बितम्

अथ विहर्तुमितो नगरादसौ,
विजयनीतिमुनीश्वर इष्टवान् ।
अपि तु तादृशमान्यमहात्मनां,
गुणगणार्जितगौरवसंपदाम् ॥ ६७५ ॥

गुरुवरोत्तमशुद्धतमात्मनां,
सदुपदेशवचोऽमृतवर्षणम् ।
अधिकलाभकरं भवतीत्यसौ,
सकलराधनपूर्जन इष्टवान् ॥ ६७६ ॥ (युग्मम्)

वंशस्थवृत्तम्

न्यवेदयन् राधनपूर्निवासिनो,
गुरूंश्चतुर्मासनिवासकाम्यया ।
परोपकारप्रवणा मुनीश्वरा,
भव्यात्मबोधाय तदन्वमंसत ॥ ६७७ ॥

द्वि-नन्द-नन्दैकमिते [१९९२] सुवत्सरे,
तदा चतुर्मासमिमे मुनीश्वराः

प्रवर्तयन्तोऽत्र जनान् जिनागमे,
महैरनेकैर्व्यदधन् तपःपराः ॥ ६७८ ॥

मालिनी

अथ स(च) भविकभव्ये राधनाख्ये पुरेऽस्मिन्,
मुनिवरविजयादेर्नीतिसूरीश्वरेण ।
सकलपुरनिवासिश्रावक-श्राविकाणां,
तनुजतनुजुषाणां तत्त्वसंस्कारणार्थम् ॥ ६७९ ॥

जलधि-वसु-नवैके (१९८४) वैक्रमार्के सुवर्षे,
जगति विदितनामश्रीमशालीयवंश्यम् ।
जिनरतजमनादेर्लालनाम्नः सुपुत्रं,
धनिकगणवरिष्ठं बापुलालं सुबोध्य ॥ ६८० ॥

जिनपतिगदितेऽच्यं धर्मसंबोधनार्थं,
पठनकरणरम्या कारिता पाठशाला ।
अलभत जनताया बालिका-बालकौघः,
प्रतिदिनमनुधर्मं ज्ञानलाभं च यस्याम् ॥६८१॥
( त्रिभिर्विशेषकम् )

युगल-निधि-नवैके (१९९२) वैक्रमीये शुभेऽब्दे,
प्रगतिकृतिपरायाः पाठशालावरायाः ।

भवनमतिसुभव्यं नूतनं सोऽप्यकार्षी–
जिनकृतमतवृद्ध्यै बापुलालो वदान्यः ॥६८२॥

उपजातिः

उद्घाटनं तद्भवनस्य पूर्व,
व्यधापयत् श्रीयुतबापुलालः ।
श्रीसूरिवर्योत्तमहस्तपद्मै–
र्गुरूत्तमाशीर्वचनैश्च सार्धम् ॥ ६८३ ॥

श्रीपाठशालाभवनाऽभिधानं,
पन्न्यासइत्युच्चपदान्वितेन ।
रत्नादिमश्रीविजयान्तनाम्ना,
सूरीशवर्याः समयोजयंश्च ॥ ६८४ ॥

तथैव पूजां जिनपुङ्गवस्य,
श्रीपाठशालाभवने नवीने ।
अबीभणच्छ्रेष्ठिवरः सहर्षं,
स्वधर्मसद्भावविवर्धनार्थम् ॥ ६८५ ॥

अथो च तस्मिन् दिवसे सुभव्ये,
श्रीपाठशालाध्ययनार्थकानाम्- ।
श्रीसंघसद्बालक–बालिकाना–
माचार्यवर्यो व्यदधत् परीक्षाम् ॥ ६८६ ॥

भवनमतिसुभव्यं नूतनं सोऽप्यकार्षी-
जिनकृतमतवृद्ध्यै बापुलालो वदान्यः ॥६८२॥

उपजातिः

उद्घाटनं तद्भवनस्य पूर्वं,
व्यधापयत् श्रीयुतबापुलालः ।
श्रीसूरिवर्योत्तमहस्तपद्मै-
र्गुरूत्तमाशीर्वचनैश्च सार्धम् ॥ ६८३ ॥

श्रीपाठशालाभवनाऽभिधानं,
पन्न्यासइत्युच्चपदान्वितेन ।
रत्नादिमश्रीविजयान्तनाम्ना,
सूरीशवर्याः समयोजयंश्च ॥ ६८४ ॥

तथैव पूजां जिनपुङ्गवस्य,
श्रीपाठशालाभवने नवीने ।
अचीकरच्छ्रेष्ठिवरः सहर्षं,
स्वधर्मसद्भावविवर्धनार्थम् ॥ ६८५ ॥

अथो च तस्मिन् दिवसे सुभव्ये,
श्रीपाठशालाध्ययनार्थकानाम् ।
श्रीसंघसद्बालक-बालिकाना-
माचार्यवर्यो व्यदधत् परीक्षाम् ॥ ६८६ ॥

रथोद्धता

पारितोषिकविधिं व्यधापयत्,
सूरिवर्यवरहस्तपङ्कजैः ।
बालिकागण–सुबालतुष्टये,
धार्मिकाध्ययनकार्यवृद्धये ॥ ६८७ ॥

उपजातिः

तथैव सूरीश्वरभव्यभक्तः,
पुण्याकृतिः पूनमचन्द्रपुत्रः ।
श्रीवाडिलालाह्व उदारचेताः,
श्रीसंघसद्भक्तिसुसेवनार्थम् ॥ ६८८ ॥

श्रीराधनादि(दौ)पुरनामपुर्यां,
गुरूत्तमानां सविधे विधानैः ।
महोपधानोद्वहनाभिधानं,
तपः प्रसिद्धं समकारयत् सः ॥६८९॥ (युग्मम्)

शार्दूलविक्रीडितम्

चातुर्मासविधौ विधानसहिते संपूर्णतामागते,
श्रीमत्पूनमचन्द्रनामधनिनः पुत्रस्य धर्मात्मनः ।
'वाडीलाल' इति शुभाह्वकृतिनः सत्प्रार्थनाप्रार्थितः,
सूरीस्तस्य गृहे दयोदयवशात् स्थानान्तरं विव्यधात् ॥६९०॥

१ 'वाडीलालशुभाभिधानकृतिनः, इति साधु प्रतिभाति.

श्रीमत्कार्तिकमासि मासमहिते श्रीकृष्णपक्षान्तरे,
सङ्ख्याऽन्वितसद्ग्रहद्विकदिने श्रीशैवगञ्जीयकम् ।
एकं श्रावकभूषणं गृहिवरं सूरिस्तदाऽदीक्षयत्,
कृत्वा श्रीभरतादिमं विजयभाक् तस्याऽभिधानं शुभम् ।६९१।

मालिनी

सुमतिविजयनाम्नः शुद्धबोधैकधाम्नो,
मुनिवरगणदाम्नः शिष्यमिष्टं व्यधात् सः ।
भरतविजयसाधुं शीलसाधुं मुनीशो,
विनयगुणगरिष्ठं ब्रह्मरक्षापटिष्ठम् ॥ ६९२ ॥

उपजातिः

तथा च पौषाऽसितपुण्यपक्षे,
षष्ठ्यां तिथौ सौम्यदिने सुलग्ने ।
श्रीशैवगंजीयगृहस्थमन्यं,
सूरीश्वरो भव्यमदीक्षयत् सः ॥ ६९३ ॥

विधाय दीक्षां नवदीक्षितस्य,
श्रीहिम्मताव्यं विजयान्तनाम(संज्ञं) ।
शिष्यं व्यधात् श्रीसुमतीतिमुख्य-
पदान्वितानां विजयान्तनाम्नाम् ॥ ६९४ ॥

द्रुतविलम्बितम्

अपि च सूर्यपुराभिजनं जनं,
परमनन्यजिनेश्वरसेवकम् ।

विजयनीतिमुनीश्वरधर्मकृद्,
महति तद्दिवसे समदीक्षयत् ॥ ६९५ ॥

उपजातिः

नाम्ना च तं श्रीभगवानदासं,
सूरीश्वरोऽसौ खलु दीक्षयित्वा ।
श्रीभूषणाख्यं विजयान्तरस्थं,
नाम व्यधात् तन्नवदीक्षितस्य ॥ ६९६ ॥

कृत्वा विहारं नगरादमुष्मात्,
श्रीराधनादेः पुरतस्तदानीम् ।
शङ्खेश्वरं तीर्थवरं गतास्ते,
श्रीपार्श्वनाथाऽङ्घ्रिविवन्दनार्थम् ॥ ६९७ ॥

शार्दूलविक्रीडितम्

श्रीशङ्खेश्वरपार्श्वतीर्थवरतः काले तदा सूरय-
श्चाणस्मापुरवासिजैनजनतासद्भावयाञ्चावशाः ।
स्वीयैः शिष्यवरैः प्रशिष्यमुनिभिः कृत्वा विहारं शुभं,
चाणस्मापुरमागताः शमपरा भव्यौघबोधेच्छया ॥ ६९८ ॥

एतस्मिन् समये च पट्टनपुरे श्रीश्रावकश्रेणिषु,
द्वौ पक्षौ प्रविरोधतः स्वतितरां जातौ हि मिथ्याग्रहात् ।
एकः श्रीयुवसंघ आत्ममतपोऽन्यो जैन-सोसायटिः,
संघक्लेशकरौ समाऽसुखकरौ वृद्धिं गतौ सर्वदा ॥ ६९९ ॥

सोऽयं पट्टनवासिजैनजनतासंक्लेशदावानलो,
योऽन्योऽन्यप्रविरोधकार्यकरणैर्जाज्वल्यमानः सदा ।
विद्वेषो विषसन्निभोऽथ तकयोस्तावत् प्रवृद्धिं गतः,
सप्ताष्टाधिकवर्षतोऽन्यपरयोर्भोज्यादिकृन्नाऽभवत् ॥ ७०० ॥

उपजातिः

इत्थं विरोधे परिवर्धमाने,
संघस्य पक्षद्वयके तदानीम् ।
कन्यादिदानं व्यवहारकार्यं,
अन्योऽन्ययोर्नाऽभवदेव कुत्र ॥ ७०१ ॥

एतादृशक्लेशविनाशनार्थं,
श्रीपट्टनाख्यस्य पुरान्तरस्य ।
सत्क्षेत्रयुक्खेतरवासनाम्नः,
सत्पाटकस्योभयपक्षमुख्याः ॥ ७०२ ॥

श्रीशासनोद्धारकसूरिवर्यं,
सत्पट्टनाह्वस्वपुराय नेतुम् ।
न्यवेदयन् साग्रहभावपूर्णं,
श्रीसंघसंक्लेशविनाशनार्थम् ॥ ७०३ ॥

श्रीजैनसंघेषु तदा वदान्यः,
श्रीनीतिसूरीश्वरसूरिवर्यः ।

सम्मेलनं शान्तिमयं विधातुं,
तत्संघविज्ञापनमन्वमंस्त ॥ ७०४ ॥

ततोऽनु तस्मान्नगराद् विहृत्य,
समागमत् पट्टननामपुर्याम् ।
सदा सतां नीतिपथे प्रवृत्तिं,
विधापयन्नीतिमुनीश्वरोऽसौ ॥ ७०५ ॥

वसन्ततिलका

तत्रैव पट्टनपुरे विजयादिनीति-
सूरीश्वरः सदुपदेशकृते जनानाम् ।
माध्यस्थ्यवृत्तिमवलम्ब्य पुरस्य संघे,
व्याख्यानमारभत भव्यहितैककामः ॥ ७०६ ॥

उपजातिः

आचार्यवर्यस्य महाप्रभावि-
व्याख्यानशैलेः सुभगाकृतेर्हि ।
पुण्यानुभावाच्च पुरस्य लोकाः,
सर्वे समासन् गतवैरभावाः ॥ ७०७ ॥

द्रुतविलंवितम्

विजयनीतिमुनीश्वरसद्गुरोः,
समसुशान्तिमयादुपदेशतः ।

उभयपट्टनजैनविभागिषु,
समभवद् महदैक्यकरं मतम् ॥ ७०८ ॥

उपजातिः

आचार्यवर्यस्य निरन्तराच्च,
सार्धद्विमासाऽवधिकोपदेशात् ।
बाबूपनाम्नो ह्यमिचन्द्रपुत्र-
श्रीमज्जुषो दोलतचन्द्रनाम्नः ॥ ७०९ ॥

लहेरचन्द्राख्यधनीशपुत्र-
श्रीभोगिलालेतियथार्थनाम्नः ।
इत्यादिसच्छ्रावकनायकानां,
नष्टो विरोधः सततप्रयासात् ॥७१०॥ (युग्मम्)

वंशस्थवृत्तम्

जातं च पक्षद्वयके प्रमेलनं,
गतं विषं वैरविभाववर्धनम् ।
मुनीशवाचामृतवर्षणेऽभवत्,
पुरस्य संघे परितापशोषणम् ॥ ७११ ॥

उपजातिः

श्रीपट्टनाख्यस्य पुरोत्तमस्य ।
श्रीमत्कनासाऽभिधपाटकस्य ।

लहेरचन्द्राह्वधनीशपुत्र—
श्रीभोगिलालाख्यधनीश्वरेण ॥ ७१२ ॥

कृता यथार्था नवकारशीति,
श्रीसंघभोज्यादिकृतौ प्रसिद्धा ।
अभुञ्जताऽथोभयपक्षजैनाः,
सहोपविश्यैव तदा सहर्षम् ॥७१३॥ (युग्मम्)

शार्दूलविक्रीडितम्

अस्मिन् प्रीतिकरे नृणां हितकरे सौख्यप्रसङ्गे तदा,
श्रीमत्पट्टनपूःस्थिते हि सकले श्रीजैनदेवालये ।
वादित्रादिकगायनादिसहितं नृत्यादिपूजापरं,
श्रीसंघः समकारयद् वरमहं साडम्बरं हर्षतः ॥ ७१४ ॥

श्रीतीर्थेश्वरमन्दिरेषु परितस्तस्मिन् पुरे पुण्यदाः,
प्रारभ्यन्त सुधार्मिकाश्च कृतयः साधर्म्यवात्सल्यदाः ।
यासु श्रावकवर्ग ऐक्यजनकश्च श्राविकाणां गणः,
संघस्योभयपक्षयोः सुखकरो हर्षावृतः संगतः ॥ ७१५ ॥

श्रीमत्पट्टनपूर्निवासिजनतास्नेहार्द्रचित्ते तदा,
आचार्ये विजयादिनीतिविदिते सूरीश्वरे शर्मदे ।
तच्चारित्र—सुबोध—शील—समता—ऽतुल्यप्रभावादिषु,
सद्भावः समजायत पृथुतरः सर्वस्य सौख्यप्रदः ॥७१६॥

उपजातिः

श्रीपट्टनाख्यं नगरं तदानीं,
सन्नीतिसूरेर्जयघोषणाभिः ।
शब्दायमानं सकलं समन्ताद्,
आसीत् स्वधर्मोद्धृतिकारिणीभिः ॥ ७१७ ॥

आगम्यते यत्र सदागमज्ञै-
रेतादृशैः सत्पुरुषैर्महद्भिः ।
शाम्यन्ति तत्रस्थमनुष्यवर्गे,
कषायजन्याः खलु वैरभावाः ॥ ७१८ ॥

तथैव जातोऽत्र सुसाम्यभावो,
जनेषु सर्वत्र च भ्रातृभावः ।
देदीप्यमाना समुदाहृतिः सा,
[1]समस्ति नीति(?)मुनिराट्कृतैषा ॥७१९॥ (युग्मम्)

ततश्चतुर्मासविधिं विधातु-
महम्मदावादपुरस्य संघैः ।
अभ्यर्थितः सूरिवरस्तदानीं,
सद्भावयुक्साग्रहप्रार्थनाभिः ॥ ७२० ॥

ज्ञात्वा तदीयां शुभभावपूर्णा-
मभ्यर्थनां सूरिवरास्तदानीम् ।

१ 'समस्ति सूरीश्वरसत्कृतैषा' इति पाठः साधुः ।

विहर्तुमैच्छन् पुरपट्टनाद्धि,
अहम्मदावादपुरं प्रयातुम् ॥ ७२१ ॥

ज्ञात्वा च तत् पट्टनवासिसंघैः,
सूरिश्चतुर्मासविधानकृत्यै ।
अभ्यर्थितस्तद्वरदेशनाभिः,
कृष्टैः सुबोधाऽमृतवर्षिणीभिः ॥ ७२२ ॥

स्वीकृत्य सूरिः पुरसंघयाञ्चां,
ततो ह्युपाध्यायपदाधिरूढम् ।
चारित्रवित्तं सरलस्वभावं,
समादिशत् साधुसमूहमान्यम् ॥ ७२३ ॥

वसन्ततिलकावृत्तम्

श्रीमद्दयाविजयनामदयाप्रपूर्णं,
श्रीसंघमान्यबहुबोधधरं मुनीन्द्रम् ।
'पन्न्यास' इत्युरुपदेन सुभूषिताख्यं,
श्रीशान्तिपूर्वविजयाह्वमथोच्चशीलम् ॥ ७२४ ॥

उपजातिः—

चतुर्मितैः साधुभिरत्र सार्धं,
तदा चतुर्मासविधिं विधातुम् ।
समादिशन् तौ मुनिवर्गमान्यौ,
श्रीपट्टनाख्ये नगरे मुनीशाः ॥७२५॥ (युग्मम्)

श्रीपट्टनाख्यानगराद् विहृत्य,
शिष्यैः प्रशिष्यैः सह सूरिसूर्याः ।
अहम्मदावादपुराय गन्तुं,
यावत् कियन्मार्गमयांश्च तावत् ॥ ७२६ ॥

शार्दूलविक्रीडितम्

वारेजापुरवासिसद्गृहपतेश्चैकस्य तद्ग्रामके,
आचार्याद् विजयादिनीतिमुनिपात् सूरीश्वरोत्तंसकात् ।
उद्भूता शुभभावना जिनपतेर्दीक्षां ग्रहीतुं तदा,
तस्माच्छ्रीगुरुराजपादसविधे तद्भ्रातृवर्गोऽगमत् ॥ ७२७ ॥

गत्वा सूरिवरांह्रिवारिजमिमे नत्वा महामोदतः,
वारेजाख्यपुरं मुनीशचरणैः पूतं विधातुं तदा ।
याञ्चानम्रतया व्यधुश्च सकलास्ते श्रावका आग्रहं,
वारेजाह्वपुरं गता मुनिवराः स्वीकृत्य तत्प्रार्थनाम् ।७२८।

ज्येष्ठाख्ये शुभमासके सितदले सत्यां नवम्यां तिथौ,
वारेजाऽभिधरम्यधामनगरस्थश्रावकस्य स्वयम् ।
दीक्षादानकृतिः कृता मुनिवरैः सार्धं महैर्मङ्गलैः,
कृत्वा नाम च तस्य रंगविजयेत्यात्मीयशिष्यं व्यधुः ।७२९।
( चतुर्भिः कलापकम् )

बारेजाख्यपुराद् विहृत्य मुनिभिः सार्धं ततः सूरिराट्,
संख्यातीतजनान् जिनेशगदिते धर्मे मुदा स्थापयन् ।
भव्यौघान् प्रतिबोधयन् शमपरो मार्गे मतः सर्वतः,
श्रीमच्छ्रावकराजिराजनगरे श्रीनीतिसूरिर्गतः ॥ ७३० ॥

उपजातिः

अहम्मदावादपुरस्य संघै-
राह्लादिवादित्रविशालदृश्यम् ।
सूरीश्वराणां समहं सहर्षं,
सुस्वागतं भावयुतं व्यधायि ॥ ७३१ ॥

त्रि-नन्द-नन्दैकमिते च वर्षे, [१९९३]
सूरिश्चतुर्मासविधिं व्यधत्त ।
अहम्मदावादपुरे वरेण्ये,
उपाश्रये लोहकृतां हि वीथ्याम् ॥ ७३२ ॥

अहम्मदावादपुरे प्रथिष्ठे,
चाऽन्यत्र भागेऽपि जिनेन्द्रवाचाम् ।
लाभार्थमत्रत्यनृणां समेषां,
संप्रैषयत् सूरिवरः स्वशिष्यान् ॥ ७३३ ॥

तत्तत्स्थलश्रावकसंघभावात्,
तत्प्रार्थनाभिर्वरसूरिवर्याः ।

श्रीमहुहेलाख्य उपाश्रये च,
श्रीवीरपूर्वे विजयाभिधाने ॥ ७३४ ॥

तथा तदीये नगरोपकण्ठे,
श्रीसाम्रमत्याख्यसुवित्तवासे ।
सूरीश्वरः स्वीयसुविज्ञशिष्यान्,
तदा चतुर्मासकृते न्ययुङ्क्त ॥७३५॥ (युग्मम्)

एतेषु नित्यं सदुपाश्रयेषु,
सर्वेषु सूरीश्वरशिष्यशिष्टाः ।
सर्वज्ञसद्धर्मविवर्धनार्थं,
व्याख्यानमर्हद्‌गदितं व्यधुस्ते ॥ ७३६ ॥

शार्दूलविक्रीडितम्

श्रीमत्पर्युषणाभिधानविदिते सन्मङ्गले पर्वणि,
सच्छ्रेष्ठीश्वरराजिराजनगरे श्रीशामलावासके ।
तस्मिन्नेव पुरे च पौरविदिते सद्देवशापाटके,
शस्ये सरपुरनामके स्थलवरे सद्बोधहेतोस्तदा ॥७३७॥

उपजातिः-

श्रीजैनसोसायटिवासके च,
तत्तत्स्थलश्रावकसज्जनानाम् ।

एतादृशः श्रेष्ठमहोत्सवस्य,
समुत्समाराधनकार्यहेतोः ॥ ७३८ ॥

शार्दूलविक्रीडितम्

प्रत्याख्यानविधापनादिकृतये व्याख्यानहेतोस्तथा,
श्रीप्रातिक्रमण-व्रतादिनियमानित्थं हि धर्मक्रियाः ।
सर्वान् कारयितुं जनान् जिनमतान् श्रीनीतिसूरीश्वरः,
सद्धर्माधिविराजिराजनगरे धर्माभिवृद्धर्धिया ॥ ७३९ ॥

उपजातिः

विद्यावरिष्ठान् सुचरित्रशीलान्,
शान्तान् स्वशिष्यान् जिनसंघमान्यान् ।
गुरूत्तमः शासनवर्धनार्थं,
न्ययुङ्क्त सवत्र पदे मुनीन्द्रान् ॥ ७४० ॥
(चतुर्भिः कलापकम्)

शार्दूलविक्रीडितम्

श्रीमत्पर्युषणे सुपर्वणि वरे संवत्सरेऽस्मिन् शुभे,
श्रीमज्जैनजनेषु मुख्यमहिते संवत्सरीसत्तिथौ ।
जैनाचार्य-जिनोक्तशास्त्रविदुषां सूरीश्वराणां तदा,
पक्षौ द्वौ स्वमते दृढावभवतां शास्त्रार्थसंसूचकौ ॥७४१॥

१ प्रतिक्रमणमेव प्रातिक्रमणम्, स्वार्थेऽण् प्रत्ययः ।

श्रीमन्नीतिमुनीश्वराः शमपरा निष्पक्षपाताश्रिता,
माध्यस्थ्यं सकले च जैनजनतापक्षे समालम्ब्य तत् ।
सत्यत्वप्रतिपादकेन मनसा मिथ्याग्रहैर्वर्जितात्,
सत्यात्तीर्थकरोपदेशकरणान्निर्विघ्नपर्व व्यधात्(धुः) ।७४२।

उपजातिः

प्रभावना-पूजनधर्मकर्म,
साधर्म्यवात्सल्यविधिस्तथैव ।
श्रीशासनोन्नत्यकराणि तत्र,
कार्याणि सर्वाणि तदोद्भूवन् ॥ ७४३ ॥

तथा तदा सूरिवरोपदेशात्,
श्रीशामलापाटकसंघमुख्यैः ।
श्रीजैनधर्मोद्न(न्न)तिकारिवर्या,
संस्थापिता जैनसुपाठशाला ॥ ७४४ ॥

तथैव ढालामिधपूःसुतीर्थ्यां,
श्रेष्ठीश्वरश्रीमनलालनामा ।
श्रीघोलिदासाख्यधनीशपुत्र,
उद्यापनं सोत्सवमन्वतिष्ठत् ॥ ७४५ ॥

शार्दूलविक्रीडितम्

श्रीरूपासुरचंदवीथिवसतौ पूर्णां प्रसिद्धिं गतः,
श्रीमच्छ्रीमनलालनामधनिकः सुश्रावकैः सम्मतः ।

श्रेष्ठिश्रीमनसूखरामतनुजो भ्राता तदीयस्तथा,
तौ श्रीसूरिवराङ्घ्रिपद्मसविधे सद्भावनाभावितौ ॥७४६॥

स्वीकर्तुं समजैनदर्शनमतं श्रीमच्चतुर्थं व्रतं,
कर्तुं पादसुपावितं निजगृहं संप्रार्थयेतां तदा ।
आचार्या अपि तद्गृहे शमपरास्तद्भावनाऽऽवर्जिता–
श्चातुर्माससनिवासपूर्तिजनकस्थानान्तरार्थं गताः ॥७४७॥
(युग्मम्)

उपजातिः—

महामहिम्नो विजयादिमश्री–
नीतिमुनीशा(नीतीश्वरस्या)ङ्घ्रिसरोजमाप्य ।
उभौ गृहस्थौ तनुपावनार्थं,
तुर्यव्रतस्वीकृतिमातनिष्टाम् ॥ ७४८ ॥

अहम्मदावादपुराद् विहृत्य,
ततो नरोडाख्यपुरे च तस्मात् ।
श्रीमद्भोडादिपुरे च गत्वा,
सूरीश्वराः शिष्यसमूहसार्धम् ॥ ७४९ ॥

श्रीमार्गशीर्षस्य सिते सुपक्षे,
तिथौ दशम्यां शुभवासरे च ।

प्रांतीजनाम्नि(जसंज्ञे) सुपुरे वरेण्ये,
समागताः क्षान्तिपरास्तदानीम् ॥ ७५० ॥
( युग्मम् )

शार्दूलविक्रीडितम्

श्रीप्रांतीजनिवासिसंघजनता सूरीश्वराणां तदा,
प्रीत्या स्वागतमातनोत् सह महैर्वादित्र-गीतादिभिः ।
(तस्मिन्नेव नृणां सदा सुखकरे श्रीमार्गशीर्षाभिधे,
शुक्लैकादशमी(?)तिथौ वरदिने सल्लग्नके सौम्यमे ॥७५१॥

श्रीप्रह्लादनपूःसुनामनगरीवास्तव्यसच्छ्रावकं,
'पानाचन्द्र' इतीड्यनामधनिनः पुत्रावतंसं तदा ।
डाह्याभाइशुभाभिधानविदितं वैराग्यरङ्गान्वितं,
श्रीमन्नीतिमुनीश्वरा धृतिपरास्तच्छ्रेयसेऽदीक्षयन् ॥७५२॥
( युग्मम् )

उपजातिः

आनन्दपूर्वं विजयान्तवित्तं,
कृत्वाऽभिधानं नवदीक्षितस्य ।
दत्त्वोपदेशं स्वचरित्रगुप्त्यै,
स्वकीयशिष्यं व्यदधुर्मुनीन्द्राः ॥ ७५३ ॥

प्रांतीजसद्ग्रामवराद् विहृत्य,
'रूपाल-टींटोइ' सुविश्रुतायाम् ।

तथाऽपरग्रामसमूहभूमौ,
श्रीसूरिसूर्यो व्यहरन् समन्तात् ॥ ७५४ ॥

द्रुतविलम्बितम्

स गतवान् प्रभुकेसरियाऽभिधे,
जगति तीर्थवरे वरसंयमी ।
वृषभलाञ्छनकेसरियाप्रभो-
रनुपमां प्रतिमां समवन्दत ॥ ७५५ ॥

उदयपूर्नगराऽभिनिवासिभि-
र्जिनपशासनसम्मतसंघकैः ॥
विजयनीतिमुनीशवरस्तदा,
स्वनगराऽऽगमनाय निमन्त्रितः ॥ ७५६ ॥

अथ मुनीश्वर आत्मगणैः सह,
जिनपशासनवृद्धिविधित्सया ।
उदयपूर्नगरस्थजनाऽर्थनां,
हृदि विधृत्य तदीयपुरेऽगमत् ॥ ७५७ ॥

उपजातिः

श्रीपौषमासस्य सिते सुपक्षे,
सुपञ्चमीपूर्णतिथौ सुलग्ने ।
आचार्यवर्यस्य पुरप्रवेश-
स्तत्रत्यसंघैः कृत उत्सवौघैः ॥ ७५८ ॥

१ इदं सम्यग्न प्रतिभाति, एवमग्रेऽप्यनेकस्थलेषु ज्ञेयम् ।

शार्दूलविक्रीडितम्

अत्र श्रीमहुधानिवासविदितं सच्छ्रावकालङ्कृतिं,
श्रीमच्चंपकलालनामवणिजं सद्भावनाभावितम् ।
उद्यच्छ्रीरुदयादिनामनगरे श्रीसं(रे सं)घप्रणीतोत्सवं,
माघस्याऽसितपक्षदितिथिदिने सूरीश्वरोऽदीक्षयत् ॥७५९॥

उपजातिः

कृत्वा तदैतन्नवदीक्षितस्य,
चन्द्रोदयाख्यं विजयाभिधानम् ।
आचार्यवर्याः समकार्षुरेनं,
श्रीसुन्दरादेर्विजयस्य शिष्यम् ॥ ७६० ॥

स्थितिं च मासद्वयमत्र कृत्वा,
विहर्तुमैच्छन्मुनिराजराजः ।
आचार्यवर्यस्य विचार आसीत्,
श्रीमन्महीयोमरुभूविहारे ॥ ७६१ ॥

मालिनी

अपि तु जिनपभक्तैः प्रार्थितः सूरिराज,
उदयपुरनिवासिश्रावकश्रेष्ठसंघैः ।
इह सुमुनिविहारो दुर्लभो मेदपाटे,
इति गुरुमुनिपूज्यैः स्थीयतामत्र तस्मात् ॥७६२॥

उपजातिः

श्रीमेदपाटस्थितजैनभक्ताः,
श्वेताम्बरीयैर्मुनिभिश्च सार्धम् ।
समागमाऽभाववशात् सदैव,
जिनार्चनायां शिथिलीभवन्ति ॥ ७६३ ॥

शार्दूलविक्रीडितम्

किन्तु स्थानकवासिसाधुनिवहैः सार्धं सदा संगमात्,
तेरापंथमतानुयायिमुनिदुर्व्याख्यानबोधात्तथा ।
अत्रत्या प्रचुराऽपि जैनजनता श्रीवीतरागप्रभोः,
श्रीदेवायतनेषु मूर्तिनतिषु श्रद्धासु हीनायते ॥ ७६४ ॥

उपजातिः

पूज्यो भवान् श्रीजिनशासनस्य,
वृद्ध्यर्थमत्यर्थमनोदितोऽपि ।
समुद्यतो भव्यजनोपकारे,
ह्यत्र स्थितिं कर्तुमतोऽर्हतीत्थम् ॥ ७६५ ॥

स्रग्धरा

तस्माच्छ्रीमन्त एतान् भ्रमगहनवने भ्रष्टमार्गान् विमूढान्,
मेवाडाख्याप्रसिद्धाऽभिजनवसतिकान् जैन-जैनेतरांश्च ।

तीर्थोद्धारादिकार्याऽर्जितवरपदवीधारका धर्मवृध्यै,
जीवानुद्धृत्य शिष्या सकलभुवि पदं कुर्वतां सार्थकं स्वम् ॥

उपजातिः

भवादृशां सूरिवरोत्तमानां,
प्रभाव-चारित्रविभूपितानाम् ।
समागमस्योत्तमलाभ आप्तो,
मेवाडभूपुण्यमहोदयाद्धि ॥ ७६७ ॥

अपीह मेवाडभुवि(मही) च सन्ति,
जिनेशदेवायतनानि सन्ति ।
पुरातनानि त्रिसहस्रकाणि,
चिरन्तनोद्भूतकलाश्रितानि ॥ ७६८ ॥

भूयांसि तेषामतिजीर्णकानि,
जातानि देवायतनानि तानि ।
तदीयजीर्णोद्धरणं विधातु-
मावश्यकं वर्तत इत्थमत्र ॥ ७६९ ॥

पूज्यैर्भवद्भिर्जिनतत्त्वविज्ञैः,
प्राचीनदेवालयरक्षणार्थम् ।
श्रीश्रावकश्रेष्ठिसमूह उच्चै-
रुद्बोधनं कर्तुमतोऽर्हणीयः ॥ ७७० ॥

१ सुन्दराणि ।

मालिनी

उदयपुरनिवासिश्रावकश्रेष्ठिसंघै-
रिति गदिततमां तां सत्कथामशृणोच्च ।
तदनु विजयनीतिः सूरिसूर्यस्तदानीं,
सकलजनहितार्थं ध्यातवान् कार्यजालम् ॥७७१॥

उपजातिः

श्रीसूरिराजाः समचिन्तयंस्ते,
मेवाडभूस्वीयविहारकार्यात् ।
श्रीशासनस्याऽतिहितप्रकर्षं,
विहारमत्रैव ततः समैच्छन् ॥ ७७२ ॥

मालिनी—

उदयपुरपुरात् सत्फाल्गुने शुक्लपक्षे,
प्रतिपदि च विहृत्याऽगुस्त आघाटपुर्याम् ।
विहरणमिति कृत्वा गूरलीग्रामकादौ,
निखिलजनमनांसि(मनोऽब्जं) रञ्जयन्तो व्यहार्षुः ॥

उपजातिः

फत्तेहनाम्नि(हसंज्ञे) नगरे प्रगत्य,
श्रीसेनवाडाख्यपुरं(रं हि) तस्मात् ।

श्रीफाल्गुनाख्ये शुभकारिमासे,
शुक्लाष्टमीश्रेष्ठतिथौ मुनीशः ॥ ७७४ ॥

श्रीमत्करेडाऽभिधपुण्यतीर्थे,
समागमल्लोकसमूहमान्यः ।
तस्मिन् करेडाभिधपार्श्वनाथ-
प्रभोः सुमूर्तिं समवन्दतोच्चैः ॥७७५॥ (युग्मम्)

विहृत्य तस्मात् खिमलीतिनाम-
ग्रामं गताः श्रीमुनिराजराजाः ।
नीस्मां ततो रास्मिमितश्च पानां,
पुरं ततोऽनुव्यहरन् सशिष्याः ॥ ७७६ ॥

श्रीभीलवाडेत्यभिधाप्रसिद्धं,
ग्रामं ततः कोटडिनामवित्तम् ।
इत्यादिसद्ग्रामभुवं मुदा ते,
विहृत्य धर्मोद्धृतिमत्यकार्षुः ॥ ७७७ ॥

अनेकभव्यान् भववर्त्मनीत्थं,
भ्रान्तान् प्रमाद् भव्यजिनोपदेशैः ।
जिनोक्तसत्ये वरधर्ममार्गे,
प्रास्थापयन् सूरिवरास्तदानीम् ॥ ७७८ ॥

ततोऽगमन् संघसमस्तमान्या,
धर्म्योपदेशे च सदा वदान्याः ।

आचार्यवर्याश्चमलेश्वराख्ये,
तीर्थे पुराणे समतीर्थमुख्ये ॥ ७७९ ॥

शार्दूलविक्रीडितम्

लोके नाऽतितरां प्रसिद्धिगमके तीर्थे पुराणे परे,
उच्चैः पर्वतशृङ्गभूषणसमं देवालयं राजते ।
भव्यश्रीश्चमलेश्वराऽभिधजिनश्रीपार्श्वनाथप्रभो-
स्तस्मिन् वेलुमयी सुमूर्तिरधुना राराज्यमानाऽस्ति हि ॥

उपजातिः

किञ्चाऽपि सेयं प्रतिमा पुराणा,
चतुर्थ आरेऽपि विवर्तमाना ।
प्रागष्टलक्षाब्दविवर्तनीति,
लोकश्रुतिरप्यनुभूयतेऽत्र ॥ ७८१ ॥

एदंयुगं पार्श्वजिनालयं च,
जीर्णोद्धृतं 'खेमपरा'ऽभिधाने ।
गोत्रे भवैः श्रावकवंश्यवर्यै-
र्लोकश्रुतिः सा बहुविश्रुताऽत्र ॥ ७८२ ॥

वंशस्थम्

गिरेरधस्ताद् वरचर्मणाऽभिधा,
सदाप्रवाहाऽस्ति महत्तरा नदी ।

शिष्यैः प्रशिष्यैः सह तीर्थमानतं,
तद् नीतिसूरीश्वरसूरिपुङ्गवैः ॥ ७८३ ॥
(पञ्चभिः कुलकम्)

उपजातिः

आचार्यवर्याऽऽगमनं विदित्वा,
तीर्थे च तस्मिन्नुदयादिपुर्याः ।
आसन्नपञ्चाश(?)सुयात्रिका वै,
समागताः सूरिवराऽङ्घ्रिपद्मम् ॥ ७८४ ॥

ततो विहृत्यात्मविदामधीशाः,
पारोलि शाहीपुरनामरम्ये ।
तथा वनेडादिपुरे व्यहार्षुः,
श्रीनीतिसूरीश्वरधर्मधुर्याः ॥ ७८५ ॥

शार्दूलविक्रीडितम्

सांगानेरपुरादिरम्यनगरे मेवाडभूभूषणे,
सर्वस्मिन् विचरन्ननेकजनतामुद्बोधयन् सूक्तिभिः ।
श्रीमान् शास्त्रविशारदो गुरुवरो रागादिदोषान् जयन्,
तत्र स्थानकवासिसङ्घकलुषां शुद्धां व्यधात्सूरिराट् ।७८६।

उपजातिः

अस्मिन् विशाले वरमेदपाटे,
ग्रामादिभूमौ नगरे पुरे च ।

सर्वस्थले स्थानकवासिसाधु-
संघस्य बाहुल्यविहारहेतोः ॥ ७८७ ॥

तथा च तेषां प्रचुरात् प्रसङ्गाद्,
भूयांश्च सुश्रावकवर्ग आसीत् ।
देवालयादौ गमने विरक्तो,
जिनेन्द्रमूर्तिन(र्तेर्न)ति-पूजनादौ ॥ ७८८ ॥

उद्बोध्य भव्यान् सकलान् मुमुक्षून्
जिनोक्तवाचाऽमृतवर्षणेन ।
मिथ्यात्वमोहं सकलं च तेषां,
सूरीश्वरः सर्वगतं निरास्थत् ॥ ७८९ ॥
( त्रिभिर्विशेषकम् )

जनान् सदा श्रीजिनमन्दिराणि,
गत्वा हितं मूर्तिसमीक्षणादि ।
सामायिकं श्रीजिनबिम्बपूजां,
व्यधापयत् पौषधधर्मकार्यम् ॥ ७९० ॥

शार्दूलविक्रीडितम्

अज्ञान् स्थानकवासिसाधुनिवहोद्बोधैर्विमूढान् जनान्,
श्रीमत्तीर्थकरोदितेषु विधिषु श्रीमूर्तिपूजादिषु ।
मेवाडाऽभिधभूमिवासिमनुजान् धर्मोक्तिभिः प्रेरयन्,
श्रीमज्जैनमतप्रवृद्धिमकरोद् मार्गे मुनीशस्तदा ॥ ७९१ ॥

उपजातिः

इत्थं मुनीशो विचरन् क्रमेण,
श्रीभीलवाडाख्यपुरं विहृत्य ।
श्रीचैत्रमासस्य सिते सुपक्षे,
पुरं पुराख्यं च ततः समायात् ॥ ७९२ ॥

ततः पुराख्यात् पुरतस्तदानीं,
चित्तोडदुर्गाऽभिधतीर्थनत्यै ।
सूरीश्वराज्ञामधिगम्य विद्या-
दयस्त्रयः संयमिनो व्यहार्षुः ॥ ७९३ ॥

मार्गागतायां मधुकृष्णपक्षे,
षष्ठ्यां तिथौ सौम्यदिने सुलग्ने ।
नाथादिलालाऽभिधवैश्यवर्यो,
हम्मीरपुर्यामग्रहीत् सुदीक्षाम् ॥ ७९४ ॥

वसन्ततिलकावृत्तम्

न्यायादिमं विजययुक् शुभनाम तस्य,
श्रीदीक्षितस्य मुनिराजवरश्च कृत्वा ।
श्रीमान्मुनिश्चरणयुग्विजयः स्वशिष्यं,
बोधामृतैस्तमसिचद् व्रतिनामधीशः ॥ ७९५ ॥

शार्दूलविक्रीडितम्

श्रीमेवाडभुवि(महौ) पुराख्यनगरं तेराख्यमार्गाश्रितां,
जैनानां प्रथमं स्थलं च गणितं लोके दरीदृश्यते ।
यत्तेराऽभिधमार्गिसाधुनिवहैः संसेवितं सर्वदा,
तत्र श्रीमुनिराजनीतिविजयः सूरिः सशिष्यः स्थितः ॥७९६॥

उपजातिः—

पुरे च तस्मिन् पुरनामधेये,
तेराख्यमार्गाश्रितसाधुसङ्घात् ।
सदोसवालाख्यवणिग्वराणां,
सार्धं शतं श्रावकसद्गृहाणि ॥ ७९७ ॥

आसँश्च तेराख्यमताश्रितानि,
तेषां चतुःसंख्यमिताऽब्दकेभ्यः ।
आसन्नपञ्चाशगृहाणि तत्र,
जिनेशबिम्बाऽर्चनतत्पराणि ॥७९८॥ (युग्मम्)

तस्मिन् पुराख्ये पुरसंघभूषणे,
जिनेशदेवायतनानि पञ्च ।
तेषां हि त्रीणि(त्रीण्येव तेषां) शिखराश्रितानि,
भव्यानि भान्तीह पुरातनानि ॥ ७९९ ॥

तेषु त्रिषु प्रोक्तजिनालयेषु,
नाऽऽसीद् ध्वजादण्ड इतीष्टधर्मा ।
तत्रत्यसंघस्य विचिन्त्य शक्ति,
ध्वजाप्ररोहण्यथ कार्यहीनाम् ॥ ८०० ॥

शार्दूलविक्रीडितम्

तस्माच्छ्रीजिनशासनस्य सुहितं ध्यायन् मुनीनां पतिः,
श्रीमत्संघविराजिराजनगरे श्रीराधनादौ पुरे ।
आदैषीत् सुदलानि जैनधनिषु श्रीधर्मवृद्ध्यै कृती,
प्राप्ते कारयितुं च चित्तनिवहे प्रोच्चैर्ध्वजारोपणम् ॥ ८०१ ॥

उपजातिः

वैशाखमासस्य सिते सुपक्षे,
श्रीमत्तृतीयातिथितस्तदानीम् ।
प्रारभ्यत श्रीजिनधर्मवृद्ध्यै,
अष्टाहवित्तः सुमहोत्सवोऽत्र ॥ ८०२ ॥
(त्रिभिर्विशेषकम्)

शार्दूलविक्रीडितम्—

वैशाखस्य सिते दले शुभकरे श्रीमत्तृतीयातिथौ,
तस्मिन् श्रीपुरनामके पुरवरे सच्छ्रावकश्रेष्ठिनम् ।
'हीरालाल' इतीड्यनामविदितं सुश्रद्धया सेवितं,
सूरिः श्रीविजयादिनीतिमुनिपो भव्यं तदाऽदीक्षयत् ॥८०३॥

उपजातिः

कृत्वाऽभिधानं नवदीक्षितस्य,
उमङ्गपूर्वं विजयान्तरम्यम् ।
दानादिभाजो विजयस्य शिष्यं,
व्यधाच्च पन्यासपदाश्रितस्य ॥ ८०४ ॥

वैशाखमासस्य च शुक्लपक्षे,
सौम्याऽष्टमीवासरके वरेण्ये ।
सद्धस्तियुक्तो वरघोटकश्च,
निष्कापि(सि)तः पौरवरैः सुभव्यः ॥ ८०५ ॥

तन्मासशुक्ले नवमीतिथौ वै,
तथा च शान्त्यै ग्रहपूजनादि ।
ध्वजासमारोहकृते ह्यकारि,
स्नात्राऽभिषेको विधिपूर्वं उच्चैः ॥ ८०६ ॥

वैशाखशुक्ले दशमीतिथौ हि,
प्रातः सुकाले नवबादनान्ते ।
आरोपयन् दण्डयुतं ध्वजं ते,
सद्भावनाभावितश्राद्धवर्याः ॥ ८०७ ॥

शार्दूलविक्रीडितम्

शान्तिस्नात्रमपाठयत् सुविधिना श्रीसूतरीयोपधः,
श्रीमान् श्रीमगुभाइनामविदितः श्रीचूनिलालात्मजः ।

एवं श्रीध्वजदण्डरोपणविधिं कर्तुं समागुस्तदा,
श्रीमद्राजिविराजि-राजनगरात् सच्छ्रावकश्रेष्ठिनः ॥८०८॥

वैशाखोत्तमशुक्लपक्षदशमीतिथ्यां सुलग्ने तदा,
तस्मिन् श्रीपुरनामके पुरवरे श्रीनीतिसूरीश्वराः ।
श्रीचन्द्रोदयपूर्वसद्विजययुग्नाम्ने च सत्साधवे,
दीक्षां जैनमुनिव्रतेषु बृहतीं श्रीमन्मुनीशा अदुः ॥ ८०९ ॥

स्रग्धरा--

छेदोपस्थापनीयाऽभिधविधिबृहतीं साधुवर्याय दीक्षां,
दत्त्वा नूत्नाऽभिधानं विजयपदपरं श्रीचिदानन्दपूर्वम् ।
दत्तं श्रीशासनस्य प्रगतिकरमिदं कार्यजातं पुरेऽस्मिन्,
आदावासीत्ततोऽस्यां भुवि जनमनसां मोदकृत्तत्प्रजातम् ॥

उपजातिः

जैने तथा स्थानकवासिसंघे,
तेरापन्थमार्गाश्रितलोकवर्गे ।
जैनेतरस्मिन् जिनशासनस्य,
लोके सुभव्या शुभभावनाऽऽसीत् ॥ ८११ ॥

शार्दूलविक्रीडितम्

श्रीमानुच्चतमः प्रसङ्ग इह सन्मेवाडभूमीतले,
लोकानामनुमोदनाविषयभाग् ग्रामे पुरे चाऽभवत् ।

भूरिस्थानकवासिभव्यमनुजास्तेराख्यमार्गाश्रिता,
आसंस्तेऽपि जिनेशपूजनविधौ युक्ता मुदा ये तदा ॥८१२॥

उपजातिः

अस्यां च पुर्यां समुपागतैर्हि,
चित्तोडदुर्गस्य निवासिजैनैः,
संप्रार्थिताः सूरिवरास्तदानीं,
स्वकीयपुर्यागमनाय नम्रैः ॥ ८१३ ॥

स्वीकृत्य याञ्चां पुरतस्तदानीं,
शिष्यैः प्रशिष्यैः सह सूरिसूर्याः ।
विहृत्य तस्मादगमन् पुराणं,
चित्तोडदुर्गं समदुर्गवित्तम् ॥ ८१४ ॥

चित्तोडदुर्गं खलु पूर्वकाले,
समृद्धिमत् ख्यातपुरं बभूव ।
अस्त्यत्र चैकं सुपुरातनोच्चं,
दुर्गं मनोह्लादि सुविश्ववर्ण्यम् ॥ ८१५ ॥

बभूव तस्योपरि सद्गृहाणां,
लक्षत्रयं पौरसमृद्धियुक्तम् ।
इदंप्रकारा किल किंवदन्ती,
चाऽत्रत्यलोकोदितविश्रुताऽस्ति ॥ ८१६ ॥

किञ्चाऽपि दुर्गोपरि मन्दिराणि,
छिन्नाऽल्पभागानि जिनेश्वराणाम् ।
बिम्बैर्विहीनान्यतिप्राक्तनानि,
सन्तीह सत्पञ्चदशाङ्ककानि ॥ ८१७ ॥

वसन्ततिलका

श्रीमन्नृपाधिवसतिप्रथितोच्चहर्म्य-
प्राकारसारसविधेऽस्ति जिनालयं च ।
श्रीसातवीशिवरदेवरिनामवित्तं,
पञ्चाशता द्विकयुता वरमन्दिरैर्युक् ॥ ८१८ ॥

शार्दूलविक्रीडितम्

श्रीमत्तज्जिनमन्दिरे हि विदिता मूर्तिप्रतिष्ठा पुरा,
विद्वच्छ्रीहरिभद्रसूरिकरिणां हस्तैर्बभूवोत्तमा ।
आचार्या अपि सर्वशास्त्रविबुधास्ते विश्वविद्वन्मता-
श्चित्तोडाऽभिधदुर्गवासविदिता लोके बभूवुः श्रुताः ॥८१९॥

उपजातिः -

किञ्चाऽपि तीर्थाधिपतिप्रसिद्ध-
श्रीसिद्धशैलोपरि शान्तिमा सा ।
सप्ता-ऽष्ट-भूतैकमिताङ्कवर्षे,
तीर्थोद्धृतिर्येन कृता यथार्था ॥ ८२० ॥

स श्रेष्ठिवर्यो बहुपुण्यशाली,
श्रीमत्सु मुख्यः करमादिशाहः ।
चित्तोडदुर्गे प्रबभूव चेत्थम्,
ऐतिह्यलेखे बहुधा प्रसिद्धम् ॥८२१॥ (युग्मम्)

तैरेव श्रीमत्करमादिशाहैः,
श्रीपार्श्वनाथस्य जिनेश्वरस्य ।
सुपार्श्वनाथस्य च मन्दिरे द्वे,
चित्तोडदुर्गे प्रविधापिते स्तः ॥ ८२२ ॥

शार्दूलविक्रीडितम्

पुण्ये श्रीकरमादिशाहचरिते गीर्वाणवाण्यां कृते,
सर्वं तत् परिदृश्यतेऽस्य चरितं विस्पष्टमुल्लेखितम् ।
श्रीमत्पार्श्व-सुपार्श्वतीर्थकरयोर्देवालये ते द्वके,
विद्येते स्वतिजीर्णतां परिगते चाऽद्यापि तत्र स्थले ॥८२३॥

उपजातिः

किञ्चाऽपि तत्रैव गुहाऽस्ति रम्या,
यस्यां मुनिश्रेष्ठसुकोशलाख्यः ।
विदीर्णकर्मा समसाम्यधर्मा,
सत्केवलज्ञानमसाववाप ॥ ८२४ ॥

स्रग्धरा—

कीर्तिस्तम्भाः सुरम्याश्चिरतरचरितद्योतका नैकसंख्या,
अन्ये प्राचीनकालस्थितबहुतरका हस्तलेखाः सुरम्याः ।
चित्राश्चेतोहरास्ते सकलजनपदे विश्रुताः सत्पदार्था,
विद्यन्ते विद्यमाना विविधकृतियुता यात्रिकैर्दृश्यमानाः ॥

उपजातिः

अथो च धीमत्कलिकालवित्तः,
सर्वज्ञ इत्युच्चपदाऽभिधर्ता ।
आचार्यवर्यो विभुहेमचन्द्रः,
स्वसौम्यतानिर्जितपूर्णचन्द्रः ॥ ८२६ ॥

वंशस्थम्

स्वनिर्मिते श्रीसकलार्हताभिधे,
भुवि प्रसिद्धे वरचैत्यवन्दने ।
सस्मार सद्भन्धतमः पुरातने,
तच्चित्रकूटाऽभिधतीर्थमुत्तमम् ॥ ८२७ ॥ (युग्मम्)

अन्येऽपि चाऽऽचार्यवराः पुराणाः,
सुकूटरम्यं वरचित्रकूटम् ।
सर्वाणि तीर्थानि वै वन्दनीयं,
संमेनिरे विश्रुतधर्मधुर्याः ॥ ८२८ ॥

१ इवार्थेऽव्ययम् ।

सौभाग्यवद्भिः पुरुषैर्महद्भि-
रनेककोटीवररूप्यकाणाम् ।
व्ययं च कृत्वाऽत्र विनिर्मितानि,
देवालयानि (?) शतशो बभूवुः ॥ ८२९ ॥

सदा प्रभातस्मरणीयनाम,
तच्चित्रकूटाख्यपुराणतीर्थम् ।
प्रणाशकृत्पश्चमकालदोषाद्,
सुनष्टभावं परिदृश्यते हि ॥८३०॥ (युग्मम्)

एतच्च दृष्ट्वा विजयादिनीति-
श्रीसूरिसूर्यो जिनधर्मधुर्यः ।
तीर्थोद्धृतिं प्रत्यनुबद्धचित्तो,
रात्रिंदिवं शासनवृद्धिहेतोः ॥ ८३१ ॥

अचिन्तयद् भावनया समेतः,
प्राचीनतीर्थप्रवरस्य तस्य ।
श्रीचित्रकूटस्य समुद्धृतिं स,
दृष्ट्वाऽस्य तीर्थस्य दशां सुजीर्णाम् ॥ ८३२ ॥
(युग्मम्)

तदा प्रभृत्येव धनाढ्यधन्यान्,
सद्भाग्यशीलान् सुगृहस्थवर्यान् ।

उद्बोध्य वाचाऽमृतवर्षणाभि-
स्तीर्थोद्धृतौ प्रेरयति स्म सर्वान् ॥ ८३३ ॥

गते कियत्काल इदं हि तीर्थं,
प्रभाविसूरीश्वरहस्तपद्मैः ।
अवश्यमुद्धारमवाप्स्यतीत्थ-
माशास्यते सर्वजनैः सुभावैः ॥ ८३४ ॥

एतत्सुतीर्थोद्धरणव्ययेषु,
लक्षाधिकानां खलु रूप्यकाणाम् ।
सम्मेलनाऽऽवश्यकताऽस्ति तत्र,
साहाय्यकार्थं क्रियते प्रयत्नः ॥ ८३५ ॥

स्रग्धरा-

चत्वारिंशत्सहस्री खलु समधिगता रूप्यकाणां हिताय,
तीर्थोद्धाराय तस्मै निखिलजनमनोह्लाददात्रे सुभव्यान् ।
अद्याप्युच्चैः प्रयासं मुनिजनसुमताः सूरिराजा यतन्ते,
सत्साहाय्याय पूर्णं निजवचनसुधासेचनैर्बोधयित्वा ॥ ८३६ ॥

शार्दूलविक्रीडितम्

वन्दित्वा समतीर्थवर्ण्यमिमकं श्रीचित्रकूटाभिध-
माचार्या विजयादिनीतिमुनिपास्तीर्थोद्धृतावुद्यताः ।

कानोडाख्यपुरस्य जैनजनतासद्भाविकैः प्रार्थिता-
रात् प्रत्येव पुरं व्यहार्षुरखिलैः शिष्यैः प्रशिष्यैः सह ॥८३७॥

कानोडाख्यपुरं गता उदययुक्पुर्यास्तदा श्रावकाः,
श्रीमद्-रोशनलालनामविदिता अम्बादिलालाभिधाः ।
इत्याद्याः पुरवासिजैनजनतास्वग्रेसराः श्रेष्ठिन-
श्चातुर्मासविधापनाय यमिनां ते पञ्चविंशाधिकाः ॥८३८॥

उपजातिः—

ते प्रार्थयन्तात्मगुरुं मुनीश-
मुदेपुरं पावयितुं स्वकीयम् ।
तेषां विदित्वाऽऽग्रहयुक्तयाच्ञां,
सूरीश्वराः स्वीकृतवन्त एतुम् ॥ ८३९ ॥

विहृत्य कानोडपुरात्तदानीं,
मार्गागतग्रामजनान् सुबोधैः ।
धर्माऽभिवृद्ध्यै प्रतिबोधयन्त,
उदेपुरं सूरिवरा अगच्छन् ॥ ८४० ॥

द्रुतविलम्बितवृत्तम्

जलधि-नन्द-नवैकमिते [१९९४] शुभे,
नृपतिविक्रमनिर्मितवत्सरे ।

विजयनीतिमुनीश्वरसूरयो,
निजसुशिष्यसमूहसमावृताः ॥ ८४१ ॥

उदयवत्सुदयादिपुराऽभिधे,
पुरवरेण्यपुरे भविकैर्भृते ।
घनघनागमकालमजीगमन्,
पुरजने प्रविलोक्य सुभावनाम् ॥ ८४२ ॥
( युग्मम् )

उपजातिः

तदीयसद्बोधकरोपदेशाद्,
व्याख्यानकार्यादतिसारयुक्तात् ।
उदेपुरान्तर्वसतां जनानाम्,
आसीत् स्वधर्मे वरजागृतिश्च ॥ ८४३ ॥

व्रतोपवासादिककर्ममुख्याः,
शुभास्तपस्या नियमाश्च धर्म्याः ।
परास्तथा पर्युषणामहेऽस्मिन्,
आराधना उच्चतराः समासन् ॥ ८४४ ॥

सम्यक्त्वसंभूषितसाधुराजा,
जैनाश्च सच्छासनसंघभक्ताः ।
जैनेतरा अप्यनुजैनधर्म-
मासन् प्रवृत्ता मुनिपोपदेशात् ॥ ८४५ ॥

वंशस्थवृत्तम्

केचिद् व्यधुः षोडशवासरावधि,
पक्षाहसंख्याऽन्वितमुत्तमं तपः ।
चैकादशाहःप्रमितं परे जना,
नवाह्निकाऽष्टाहमितं तथेतरे ॥ ८४६ ॥

उपजातिः

एवं यथाशक्ति जपोपवासान्,
धर्मक्रियायुग्नियमान् यमाँश्च ।
चतुर्विधाः संघजना विधाय,
व्यधुः स्वकर्मौघह(वि)निर्जरां ते ॥ ८४७ ॥

वंशस्थवृत्तम्

सदश्वयुङ्मासशुक्लपक्षके,
तिथेर्दशम्याः शुभवासराद् धनी ।
लुनावतोपाह्वककेसरीमलः,
शुभोपधानोद्वहनं ह्यकारयत् ॥ ८४८ ॥

तदीयसत्कुङ्कुमपत्रिकाः शुभा,
औदार्यवृत्त्या सुधिया तदा मुदा ।
श्वेताम्बरश्रीजिनमूर्तिपूजक–
श्रीसंघनाम्ना धनिना विलेखिताः ॥ ८४९ ॥

उपजातिः

तत्रोपधानोद्वहनक्रियायां,
तपस्विनां धर्म्यतपःपराणाम् ।
सेवाभरो वर्ण्यतमः समासीत्,
श्रेयःप्रवृत्तान् सकला भजन्ते ॥ ८५० ॥

चतुः-ख-नन्दैकमिते[१९०४ मे] सुवर्षे,
पुरोपधानोद्वहनं बभूव ।
ततः परं तन्नगरे वरेण्ये,
अद्यापि नाऽभूदुपधानकार्यम् ॥ ८५१ ॥

संवत्सराणां नवतेश्च पश्चाद्,
अस्मिन् सुवर्षे जन-ताप-कर्षे ।
महाप्रभावाऽन्वितसूरिराज-
श्रीनीतिसूरेरुपदेशतोऽभूत् ॥ ८५२ ॥

श्रीमार्गशीर्षाख्यसुमान्यमासे,
सिताह्वपक्षे प्रतिपत्तिथौ च ।
महैः सहोच्चैर्वरघोटकोऽस्मिन्,
निष्काशितः पौरवरैः महर्षम् ॥ ८५३ ॥

वंशस्थम्

असावलङ्कारयुतैर्हि पञ्चभि-
र्गजैस्तुरङ्गैश्च सुवेषशोभितैः ।

विचित्रवाद्यैः पदिका-ऽश्ववारणैः,
सुरम्ययानैरभवन्मनोहरः ॥ ८५४ ॥

ઉપજાતિઃ

एतादृशेनोच्चमनोहरेण,
जनौघविस्मापनकारकेण ।
प्रभावना श्रीजिनशासनस्य,
आसीत् प्रशस्या परमादरेण ॥ ८५५ ॥

श्रीमार्गशीर्षस्य सिते सुपक्षे,
शुभ्यां तिथौ पञ्चमिताऽङ्कभाजि ।
सन्मालिकारोपणकार्यमासीत्,
सूरीश्वराणां वरदात् कराब्जात् ॥ ८५६ ॥

उदेपुरस्योपपुरं त्विदानी-
माहेडनामाऽस्ति पुरं प्रसिद्धम् ।
यस्मिंश्च मेवाडधराधिपाना-
मासीद्धि मुख्या निजराजधानी ॥ ८५७ ॥

तथा च यत्रोपपुरे पुराणे,
पूर्वोक्तनाम्नि (?) धनि-धर्मियुक्ते ।
मेवाडभूमीपतिराणकेन,
सुशौर्यभाजा मनुजेश्वरेण ॥ ८५८ ॥

सदा प्रभातस्मरणीयनाम्ने,
तपस्विशस्याथ तपाविरुदम् ।
ददे जगत्पूज्यतमाय वित्तं,
श्रीमज्जगच्चन्द्रमुनीश्वराय ॥ ८५९ ॥ ( युग्मम् )

सन्मार्गशीर्षाऽभिधमासकस्य,
शुक्लात्पक्षस्य तिथौ च षष्ठ्याम् ।
पूर्वोक्तसूरीशधुरन्धराणां,
सुभव्यबिम्बस्य शुभा प्रतिष्ठा ॥ ८६० ॥

तीर्थोद्धृतौ सन्ततबोधमानां,
श्रीनीतिसूरीश्वरधर्मपानाम् ।
गुरूत्तमानां वरदैः कराब्जै-
र्विधापिता पौरवरैः सुभावैः ॥८६१॥ ( युग्मम् )

तथा तदाष्टाहपूर्वं पर्वणे,
ध्वजाग्रमारोहमहोत्सवोऽभूत्,
आचार्यवर्यागमनेन चात्र;
जातानि कार्याणि सुमङ्गलानि ॥ ८६२ ॥

अस्मिंश्च सान्द्रमहोत्सवेऽत्र,
चतुःसहस्री मिलिता जनानाम् ।
साधर्मिवात्सल्यविधिस्तथा ना-
र्थोद्धतं संघ उत्साहमाप ॥ ८६३ ॥

उदेपुरे धार्मि-धनीश्वराढ्ये,
भव्यान् विबोध्याऽऽत्मवचोऽमृतेन ।
एवं च कृत्वा जिनशासनस्य,
प्रभावनाकार्यमधौघदारम् ॥ ८६४ ॥

आचार्यवर्या उदयादिपुर्याः,
श्रीमार्गशीर्षाऽसितयुग्मतिथ्याम् ।
विहृत्य सत्केसरियाजितीर्थं,
समागताः शिष्यसमूहसार्धम् ॥८६५॥ (युग्मम्)

तीर्थे च तत्केसरियाख्यवित्ते,
आदीश्वराणां परमेश्वराणाम् ।
महाप्रभावां प्रतिमां निपीय,
अलौकिकानन्दमविन्दतेमे ॥ ८६६ ॥

श्रीमार्गशीर्षाऽसितपक्षकस्य,
सद्द्वादशीश्रेष्ठतिथौ तदानीम्,
विहृत्य तत्तीर्थवरात् सुधैर्याः,
शिष्यैः प्रशिष्यैः सह सूरिसूर्याः ॥ ८६७ ॥

शार्दूलविक्रीडितम्

श्रीमड्डुंगरपूर्वरम्यनगरे चागत्य सूरीश्वरा,
मोडासा-हरसोलनामनगरे रख्यालनाम्नि (?) तथा ।

भव्यानां प्रतिबोधनाय विबुधाः श्रीदेहगामं तथा,
इत्थं ते विहरन्त उच्चचरणाः श्रीमद्भुमोडां गताः ॥८६८॥
( युग्मम् )

उपजातिः

अनेकभव्यान् प्रतिबोधयन्तो,
जिनोक्तधर्मं प्रविवर्धयन्तः ।
ततो विहारं व्यदधुर्मुनीन्द्रा,
अहम्मदावादपुरं प्रयातुम् ॥ ८६९ ॥

सत्पौषमासस्य सुकृष्णपक्षे,
तिथौ द्वितीयाख्य (?) इमे सुमान्याः ।
शुभे मुहूर्तेऽत्र पुरे प्रविष्टाः,
सदा सदाचारयुता मुनीन्द्राः ॥ ८७० ॥

इन्द्रवंशावृत्तम्

तत्रत्यसंघो बहुमानतस्तदा,
पुर्यां प्रवेशोत्सवमुच्चसंपदा ।
गीतादिवादित्रपुरस्सरं व्यधात्,
सूरीश्वरस्वागतकारकं मुदा ॥ ८७१ ॥

उपजातिः

विधाय सुस्वागतमुत्तमानां,
सूरीश्वराणां पुरसंघमुख्याः ।

श्रीनालिकेरादिकसत्फलैश्च,
प्रभावनां धर्महितामकार्षुः ॥ ८७२ ॥

अहम्मदावादपुरे वरेण्ये,
प्रसिद्धरूपासुरचन्दवीथ्याः ।
श्रीसंघ आत्मीयसुपाटकान्त-
र्विनिर्मिते श्रीजिनमन्दिरे वै ॥ ८७३ ॥

श्रीवीतकालुष्यजिनेश्वराणां,
कर्तुं प्रतिष्ठां प्रतिमावराणाम् ।
महाप्रभावं शुचिशीलशोभं,
सूरीश्वरं प्रार्थयताऽऽग्रहाढ्यः ॥८७४॥(युग्मम् ।)

आचार्यवर्यो ह्यपि धर्मधुर्यो,
जिनेन्द्रसच्छासनवृद्धिहेतोः ।
तत्प्रार्थनां भावयुतोऽन्वमंस्त,
भव्यात्मबोधं प्रति लग्नचेताः ॥ ८७५ ॥

श्रीपौषमासाऽसितपुण्यपक्षे,
एकादशीशुद्धतिथौ स संघः ।
बिम्बप्रतिष्ठापनसन्निमित्तं,
श्रीकुम्भसत्स्थापनमन्वतिष्ठत् ॥ ८७६ ॥

आरभ्य तस्माद् वरवासराच्च,
प्रावीवृतद्रु(ध्यु)च्चमहोत्सवोऽत्र ।

आचार्यवर्यस्य वरोपदेशात्,
श्रीशासनोत्कर्षकरोऽतिभव्यः ॥ ८७७ ॥

वंशस्थम्

सुमाधमासस्य शुभे सिते दले,
तिथौ द्वितीयाऽभिध उत्तमे दिने ।
जनैः सुशोभी वरघोटकस्तदा,
पुरेऽत्र निष्काशित उत्तमर्द्धिभिः ॥ ८७८ ॥

उपजातिः

तथैव तस्मिन् दिवसे वरेण्ये,
नवग्रह-श्रीदशदिक्पतीनाम् ।
श्रीसंघशान्त्यर्थकरीं सुभावां,
व्यधत्त पूजां विधिभिः स संघः ॥ ८७९ ॥

तथा च तन्माससिते सुपक्षे,
शुभे तृतीयाख्यदिने सुलग्ने ।
जिनेन्द्रदेवप्रतिमाः सुपूज्याः,
प्रवेशिता गर्भगृहे तदानीम् ॥ ८८० ॥

वंशस्थम्

तथोत्तमे श्रीप्रदमाघमासके,
तिथौ प्रसिद्धे वरपञ्चमीदिने ।

ध्वजासमारोहविधिं व्यधुर्जनाः,
सुमङ्गलं श्रीकलशाऽधिरोपणम् ॥ ८८१ ॥

उपजातिः

तथा च मूलादिमनायकस्य,
श्रीवासुपूज्यस्य कृताः सुमूर्तेः ।
अष्टादशाङ्कप्रमिताऽभिषेका,
नन्दादिवर्तोत्तमपूजनं च ॥ ८८२ ॥

शार्दूलविक्रीडितम्

श्रीमत्पञ्च-नव-ग्रहैक[१९९५]सुमिते श्रीवैक्रमे वत्सरे,
सन्मासोत्तममाधमासविदिते श्रीशुक्लपक्षे शुभे ।
पूर्वाह्णे शुभसप्तमीमिततिथौ सौम्ये सुलग्ने तथा,
पादोनप्रमिते प्रगे सुसमये रुद्राङ्कके वादने ॥ ८८३ ॥

वन्द्यश्रीविजयादिनीतिमुनिपश्रीयुक्तहस्ताम्बुजैः,
कल्याण्यः प्रतिमाः प्रभाविजिनपां संघैः प्रतिष्ठापिताः ।
तस्मिन्नेव दिने तथैव समहं पापापहारक्षमं,
स्नात्रं तत्र सुपाठितं सुविधिभिश्चाऽष्टोत्तरं सन्मतम् ॥८८४॥
( युग्मम् )

तस्मिन्नेव सुमासके सितदले भव्याष्टमीसत्तिथौ,
चत्वारिंशदभीष्टपञ्चसहितश्रेष्ठागमानां तदा ।

एवं शुक्लत्रयोदशाऽङ्कितर्तिथौ श्रीमत्प्रतिष्ठामहे,
पूजां सत्तरभेदिनामविदितां संघो मुदाऽपाठयत् ॥८८५॥

उपजातिः

अस्मिन् प्रतिष्ठासुमहोत्सवे च,
श्रीजैनसंघः समुदारभावात् ।
साधर्म्यवात्सल्यविधानकादौ,
धनव्ययं धर्मकृतात्रकार्षीत् ॥ ८८६ ॥

तथैव तस्मिन् प्रथितोत्सवे च,
द्वाविंशतिः श्रेष्ठसहस्रमुद्राः ।
साहाय्यकार्थं वरमन्दिरस्य,
प्राप्ता धनीशां समुदारवृत्त्या ॥ ८८७ ॥

तथा च रूपासुरचन्द्वीथ्यां,
सप्ताऽङ्कसंख्याप्रमिता जना नु ।
श्रीपञ्चबाह्या अभवंश्चिराय,
दोषेण केनाऽपि महत्तरेण ॥ ८८८ ॥

सदाजयिश्रीविजयादिनीति
सूरीश्वरस्याऽन्यहितैककर्तुः ।
श्रीसंघकृत्स्नैक्यकरोपदेशाद्,
अस्मिन् प्रतिष्ठासुमहोत्सवे हि ॥ ८८९ ॥

माङ्गल्यरूपे प्रथिते प्रसङ्गे,
पञ्चैर्गृहीता अभवंस्तदा ते ।
अतो यदासीत् पृथु वैमनस्यं,
गुरूपदेशाद् विगतं जनानाम् ॥ ८९० ॥

शार्दूलविक्रीडितम्—

श्रीमत्खूतरियोपनामधनिकः श्रीचूनिलालात्मजः,
श्रेष्ठिश्रीमगुभाइनामविदितः सच्छ्रावकाऽग्रेसरः ।
जैनेन्द्रोत्तमशासने च सुगुरौ भक्तोऽर्हति (जिने) धार्मिकः,
श्रीमद्राजिविराजिराजनगरे सद्धर्मवृद्धीच्छया ॥ ८९१ ॥

वंशस्थम्

सुचैत्रमासस्य शुभे सिते दले,
तिथौ वरेण्ये शुभपूर्णिमादिने ।
प्रभौ सुभक्त्या जिनधर्मनिष्ठया,
ह्यचीकरत् सोत्सवदेववन्दनम् ॥८९२॥ (युग्मम्)

उपजातिः

धनाभिधश्रीरथकारवीथि-
निवासिसञ्जीवनचन्द्रनाम्नः ।
पुत्रो धनी सांकलचन्द्रनामा,
जिनेशधर्मे दृढभक्तिधामा ॥ ८९३ ॥

शार्दूलविक्रीडितम्

वैशाखाऽभिधमासके जनमनोमोदप्रदे चोत्तमे,
श्रेष्ठे शुक्लदले तिथौ शुभकरे वर्ण्ये वरे वासरे ।
छोडेत्युत्तमनामधेयसुजुषां सद्विश्रुतानां भुवि,
पद्मानां बहुमूल्यकान्तिविभृतामुद्यापनं स व्यधात् ॥८९४॥
( युग्मम् )

उपजातिः—

एवं जिनेन्द्रोक्तसुशासनस्य,
प्रभावनाकार्यकरा वरेण्याः ।
विद्वद्वरा भव्यजनोपदेशा-
द्यनेकसत्कार्यविधायकाश्च ॥ ८९५ ॥

आचार्यवर्या विजयादिनीति-
सूरीश्वराः संयमपालकाश्च ।
जीवोद्धृतौ जीवनधारकास्ते,
जयन्त्यजेया गुरवो जगत्याम् ॥८९६॥ (युग्मम्)

स्रग्धरा

आजन्म-ब्रह्मचारि-प्रसृतशशिसम-स्फारकीर्तिव्रजस्य,
वादीन्द्राऽखर्वगर्वक्षितिकरणपटोः सच्चरित्रस्य जिष्णोः ।
स्वीयाऽन्याऽशेषशास्त्राऽधिकतरविदुषः शासनाम्भोजभानो-
र्जैनाचार्यप्रभाविक्षितितलपवितुः सर्वजीवोपकर्तुः ॥८९७॥

पृथ्वी-छन्दः

दिवाकरसमुज्ज्वलद्-विजयनीतिसूरीशितुः,
रसोऽग्निगुणधारका-ऽमलतनोर्महायोगिनः ।
स्वभक्तजनतारणे जगदपारपाथोनिधे-
र्गतस्य दृढपोततामखिललोकमान्यप्रभोः ॥ ८९८ ॥

वैतालीयम्

शशि-नव-निधि-भूमिवत्सरा-
ऽवधिक-जीवनचरित्रमुज्ज्वलम् ।
जन्मतः सुचारुवृत्तकै-
र्भू-ग्रह-नन्दधरामितेऽब्दके ॥ ८९९ ॥

इन्द्रवज्रा

पन्यास-कल्याणमुनेस्तदीय-
शिष्यस्य भाषामयलेखमात्रम् ।
आश्रित्य तेनैव विपश्चिता च,
गुम्फेन नानाकमनीयवृत्तैः ॥ ९०० ॥

वैतालीयम्

पादलिप्तपत्तने मया,
व्याकरणतीर्थ-भूषितेन वै ।

मैथिलेन शास्त्रिणा मुदा,
व्रजनाथाऽभिधधीमता कृतम् ॥ १०१ ॥
( पञ्चभिः कुलकम् )

उपजातिः

आचार्यवर्यस्य गुणैर्वरेण्यै
राकर्षितेनाऽऽत्मनि हर्षितेन ।
साहित्य-सद्व्याकरणे च शास्त्रे,
आचार्य इत्युच्चपदाऽङ्कितेन ॥ १०२ ॥

वसन्ततिलकावृत्तम्-

श्रीपादलिप्तनगरे नगरेषु नन्द्ये,
शत्रुञ्जयाश्रयतया समविश्ववन्द्ये ।
मोरारजीतनुजुषा शिवशङ्करेण,
पूर्णीकृतं सुचरितं च यतोऽवशिष्टम् ॥ १०३ ॥
( युग्मम् )

पञ्च-ग्रह-ग्रह-धराऽङ्कमिते सुवर्षे,
मासोत्तमे नभसि शुक्लसुपूर्णिमायाम् ।
आचार्यवर्यचरितं चरिताऽवदातं,
पूर्णीकृतं सुगुणपूर्णतमं तदेतत् ॥ १०४ ॥

नेदं कृतं कविवरेन्द्रसुकीर्तिलोभाद्,
नैवाऽथवाऽऽत्मगतबुद्धिविशिष्टमोहात् ।

किन्त्वीदृशो मुनिपतेश्चरितं विधाय,
　　भव्योच्चबोधजननाय मम प्रयासः　॥ १०५ ॥

उपजातिः

अद्यन्तमेतत् सुधियः पठन्तो,
　　भवन्तु चाऽऽदर्शमया जगत्याम् ।
एतद्धियैवैष महोच्चबुद्धिः,
　　पन्न्यास-कल्याणमुनिर्महात्मा　॥ १०६ ॥

आदर्शपुंसां महतामभीषां,
　　श्रीमद्गुरूणां चरितं पवित्रम् ।
विलिख्य भाषामयमेतदाशु,
　　सद्भव्यकाव्यं निरमीमपद्धि ॥१०७॥ (युग्मम् ।)

इति श्रीविजयनीतिसूरीश्वरचरितं समाप्तम्.



# अथ चातुर्मास्याऽऽख्यानम्

...

उपजातिः

चरित्रनेता निजहस्त-दीक्षां,
स्वीकृत्य नन्दाऽब्धि-निधीन्दुवर्षे [१९४९] ।
प्रावृष्यवात्सीत् प्रथमं स मेरु-
वाडाऽभिधाने नगरे गरीयान् ॥ १ ॥

ख-पञ्च रन्ध्र-क्षितिवत्सरीये [१९५०],
चोर्जेऽसिते विश्वतिथौ [१३] स दीक्षाम् ।
पार्श्वे विजितकान्तिमुनेर्गृहीत्वा,
पन्न्यासजिद्भावमुनेश्च शिष्यः ॥ २ ॥

वसन्ततिलका

माघे सिते गणपतेः सुतिथौ च शुक्रे,
पं० श्रीप्रतापविजयस्य शुभङ्करेण ।
पाण्यम्बुजेन बृहतीं परिगृह्य दीक्षां,
बीजापुरे न्यवसदेष पयोदकालम् ॥ ३ ॥

उपजातिः

मृगाङ्कबाणाङ्कमहीमितेऽब्दे [१९५१],
श्रीराजपूर्वे नगरे न्यवात्सीत् ।

ल्योकार-पोलीय-उपाश्रयेऽसौ,
शास्त्राण्यधीयान उदारबुद्धिः ॥ ४ ॥

पक्षेषु-रन्ध्रैकमितेऽपि वर्षे,[१९५२]
तत्रैव रुग्णस्य गुमानगाधोः ।
कर्तुं नदीयां महतीं सुभक्तिं,
वर्षर्तुकालं गमयाञ्चकार ॥ ५ ॥

हुताश-भूत-ग्रह-चन्द्रवर्षे,[१९५३]
चक्रे चतुर्मास्यमसौ मुनीन्द्रः ।
संघाऽऽग्रहात्पट्टणपत्तने हि,
शास्त्रं समभ्यस्य तपश्च कुर्वन् ॥ ६ ॥

सांसारिकं तत्र समेतवन्तं,
श्रीफूलचन्द्रं पितरं च गाढम् ।
सम्बोधयामास विशेषमेष,
विचक्षणस्तीक्ष्ण-विशाल-मेधः ॥ ७ ॥

वेदेषु-नन्द-क्षितिसम्मितेऽब्दे,[१९५४]
शीपोरपुर्यां चतुरश्च मासान् ।
सन्तस्थिवान् पौरजनाऽऽग्रहेण,
सुखेन धीमान् गुरुभिः सहैषः ॥ ८ ॥

भुजङ्गप्रयातम्

समुत्साहि-पौरा अशेषा विशेषं,
दिनान्यष्ट तस्मिन् महश्चातिरम्यम् ।

व्यधुः पञ्चतीर्थ्या विनिर्माणमर्हत्-
समर्चाऽऽदिकृत्यं प्रशस्तं सहर्षम् ॥ ९ ॥

उपजातिः

भूतेषु-निध्येकमिते [1955] च वर्षे,
तत्राऽमदावादविशालपुर्याम् ।
डेलाऽभिधोपाश्रय एष तिष्ठ-
श्चक्रे चतुर्मास्यमतुच्छबुद्धिः ॥ १० ॥

इहाऽऽगमं नैकमवाचयत्स,
सम्यक्सुमेधा मुनिरुग्रतेजाः ।
तर्काऽऽशुगाऽङ्कक्षितिसंख्यवर्षे, [1956]
स्वधीत-तर्कादिकभूरिशास्त्रः ॥ ११ ॥

औपच्छन्दसिकम्

वडनगरमसौ पयोदकालं,
समध्यवात्सीत् सच्चरित्रतावान् ।
उत्पेदे मारिकाऽत्र गुर्वी,
जैने गुरुकृपया तु शान्तिरासीत् ॥ १२ ॥

उपजातिः

तुरङ्ग-पञ्चाऽङ्क-शशाङ्कसंख्ये, [1957]
सम्वत्सरे सूर्यपुरे न्यवात्सीत् ।
वर्षासु संघाऽऽग्रहतोऽत्र योग-
मुद्वोढवानेष गुरोः समीपे ॥ १३ ॥

अवन्तिकायां वसु-पञ्च-नन्द-
[१९५८] भू-सम्मिताऽब्दे जनताऽऽग्रहात्सः ।
प्रावृण्निवासं कृतवानशेष-
लुम्पाकसंघं समबोधयच्च ॥ १४ ॥

निपीय पीयूषसमोपदेश-
ममुष्य चैतच्चरिताऽधिनेतुः ।
प्रबोधमापद्य महोत्सवाऽऽदि,
तेऽप्यत्र चक्रुर्गुरुदेवभक्ताः ॥ १५ ॥

[१९५९] निधीषु-रन्ध्रै-क्षिति-मापितेऽब्दे-
ऽसौ राजपूर्वे नगरे व्यधात्सः ।
डहेलकोपाश्रय एव धीमान्,
विद्वाँश्चतुर्मास्यमदभ्र-तेजाः ॥ १६ ॥

सत्पुस्तकाऽगारिक-सुव्यवस्था-
मप्यत्र चक्रे महता श्रमेण ।
विलोक्य सर्वाण्यपि तानि चाऽऽशु,
प्रज्ञानिनामग्र्यतमो मुनीन्दुः ॥ १७ ॥

झवेरि-छोटायुतलाल-वज्जू-
नामेभ्यसञ्चालित-संघ-सत्रा ।
शत्रुञ्जयं तीर्थममावुपेत्य,
युगाऽऽदिनाथं प्रभुमालुलोके ॥ १८ ॥

व्योमाऽङ्क-नन्देन्दुमिते [१९९०] च वर्षे,
प्राप्नोदसौ सूर्यपुरे प्रतिष्ठाम् ।
तेन-स्थितस्याऽऽर्हत-चैत्यकस्य,
विधातुमस्यापि समस्त सर्वैः ॥ १९ ॥

मही-तर्क-निध्येकमिते [१९६१] च वर्षेऽ-
करोच्चतुर्मास्यमयं महेन ।
श्रीपादलिप्ते नगरे सुतीर्थे,
गत्वा ततः सूर्यपुरं पुरं सः ॥ २० ॥

सहःसिते सोमतिथौ गणीति-
पदं प्रपेदे गुरुदत्तमेषः ।
सूंदरपुर्यां स महोपधानं,
धनैश्च लोकैः समचीकरच्च ॥ २१ ॥

सेना चुनीलाल-समाख्य इभ्यः,
श्रीभोयणीपावन-तीर्थमध्ये ।
उद्यापनं तत्र महामहेन,
चक्रेऽस्य नेतुश्चरितस्य वाचा ॥ २२ ॥

वसन्ततिलका

नेत्राऽङ्गनन्दवसुधामित-विक्रमाऽब्दे [२००८],
चोर्जे सितेतरदले शुभ-विश्वतिथ्याम् ।

पन्न्यास-भावविजयो मुनिराजवर्यः
शत्रुञ्जये परम-पावनतीर्थमध्ये ॥ २३ ॥

उपजातिः

ददौ च पन्न्यासपदं महेन,
महीयसा सद्गुणसागराय ।
विद्वत्तमायाऽतुलतेजसेऽस्मै,
चरित्रनेत्रे सदसि प्रसन्नः ॥ २४ ॥ (युग्मम्)

ततस्ततश्चैष समेत्य राज-
कोटं चतुर्मासिकवासमत्र ।
आचकरीभ्भूरिमहोत्सवैर्हि,
निश्शेषवादि-द्विपता-मृगेन्द्रः- ॥ २५ ॥

ततो विहारं प्रविधाय चाऽऽगात्,
स मोरबीपत्तनमत्र पौराः ।
अष्टाह्निकं चारु-महामहं हि,
प्रारप्सतैतत्सुगुरावुपेते ॥ २६ ॥

अपूर्वदश्यो वर-घोटकश्च,
बेण्डाऽऽदिवादित्र-कदम्बकेषु ।
नानद्यमानेषु वधूजनेषु,
गायत्सु पैक-स्वर-जित्वरेषु ॥ २७ ॥

महार्हं वस्त्राऽऽभरणोज्ज्वलेष्व-
संख्येषु लोकेषु पुरःसरेषु ।
बभ्राम पुर्यां भगवद्रथेन,
शक्रध्वजेनाऽपि समं चिराय, ॥ २८ ॥

तत्राऽभवत्स्थानकवासिनां च,
महासभा तत्र हि सद्गृहस्थाः ।
येऽभ्यागतास्तन्मत-मुख्यलोकाः,
सर्वेऽपि तेऽस्मिन् परिबभ्रमुश्च ॥ २९ ॥

हुताऽशनाऽङ्ग-ग्रह-भूमि वर्षे, [१९६३]
प्रावृष्यतिष्ठत्स हि राधनाऽऽद्ये ।
पुरे सहः कृष्ण-फणीशतिथ्यां,
दिवान-सुश्रावक-धर्मचन्द्रः ॥ ३० ॥

महामनाः केशरियाजिसंघं,
निष्कासयामास सकोऽपि तस्मिन् ।
तदर्थितः सङ्गतवानुदारो,
मुनिर्महीयान् सह साधुवर्गैः ॥ ३१ ॥ (युग्मम्)

तत्रत्य-यात्रां विधिवद्विधाय,
संघेन सत्रा पुनराजगाम ।
स राधनाऽऽद्यं पुरमेत्य वेद-
रसाऽङ्क-भूमीमित-वत्सरे च [१९६४] ॥ ३२ ॥

श्रीमुक्ति–राजेत्यभिधे प्रचक्रे,
पन्न्यास–नीतिः प्रभुरुग्रतेजाः ॥ ३७ ॥

औपच्छन्दसिकम्

विसनगरमसावुपेत्य धीमान्,
मुनि–रस–निधि–भूमिते च[१९६७] वर्षे ।
अकृत जलदकालिकं निवासं,
समभवदुपधानाऽऽदिकृत्यमस्मिन् (धानकादिकृत्यम्)

उपजातिः

अष्टाऽङ्क–रन्ध्र–क्षिति[१९६८]वत्सरेऽसौ,
सद्वीरम–ग्राममुपेत्य तस्थौ ।
पयोदमासांश्चतुरः सुखेन,
सुधोपदेशाऽधिकवर्षणेन ॥ ३९ ॥

सन्तर्पयन् पौरजनानशेषान्,
धनैश्च लोकैरुपधानमत्र ।
करापयंश्चन्दन–मानसाध्वो–
दीक्षां च गुर्वीं ददिवानिहाऽसौ ॥ ४० ॥

अत्राऽसकौ संस्कृतपाठशाला–
संस्थापनार्थं सकलान्महेभ्यान् ।
व्याख्यानमध्ये समुपादिदेश,
ज्ञानप्रवृद्ध्यर्थमतुच्छबुद्धिः ॥ ४१ ॥

શ્રેષ્ઠી ઝવેરી ગુણવાનુદારઃ,
શ્રીમાનુજમ્સીયુતવીરચન્દ્રઃ ।
દદૌ સહસ્રં દશપઞ્ચ મુદ્રાઃ,
સુશ્રાવકસ્તત્ક્ષણમેતદર્થમ્ ॥ ૪૨ ॥

માલિની

નવ રસ-નિધિ-ચન્દ્રે[૧૯૬૯] હાયને રાધ-શુક્લે,
મદન દહન-જાયાસત્તિથૌ તત્ર પુર્યામ્ ।
નગર-જન વરિષ્ઠૈઃ સ્થાપિતા પાઠશાલા,
ચરિતપતિ-સમસ્તાઽઽદેય-સારોપદેશાત્ ॥ ૪૩ ॥

ઇન્દ્રવજ્રા

તત્રૈવ વર્ષે બૃહતી ચ દીક્ષા,
કલ્યાણસાધોર્ગુરુભિઃ પ્રદત્તા ।
પ્રસ્થાય તસ્માત્સમુપેત્ય રાધ-
નાઽદ્યે પુરે પ્રાવૃષિ તસ્થિવાન્ સઃ ॥ ૪૪ ॥

આસંશ્ચ પાર્શ્વે શર-રામસંખ્યાઃ,
સત્સાધવો બુદ્ધિમતાં વરિષ્ઠાઃ ।
તપસ્ય-શુક્લે પ્રતિપત્તિથૌ ચો-
દયસ્ય દીક્ષા બૃહતી પ્રદત્તા ॥ ૪૫ ॥

द्रुतविलम्बितम्

मतिमतां मुनिदेव-दयाऽभिध-
प्रचुर-सद्गुण-दानतपस्विनाम् ।
सुमुनि-हर्ष सुभक्त्यभिधावतां,
भगवतीवरयोगमवीवहत्  ॥ ४६ ॥

आख्यानिकी

खर्षि-ग्रहेन्दुप्रमिताऽब्द[१९७०]कीय-
सहः सिते मारतिथावमीषाम् ।
गणीत्युपाधिं प्रवितीर्य राका-
तिथौ च पन्न्यासपदं व्यतारीत्  ॥ ४७ ॥

अथाऽऽगमद्वीरम-गामनाम-
पुरं जनानामधिकाऽऽग्रहेण ।
चक्रे चतुर्मास्यमिहाऽसकौ हि,
व्योमाऽश्व-नन्द-क्षितिसंख्य[१९८०]वर्षे  ॥ ४८ ॥

मही-स्वराऽङ्क-क्षितिहा[१९७१]यने च,
सद्राजपूर्वं नगरं व्रजित्वा ।
स पिञ्जरापोलउपाश्रयेऽसौ,
सन्तस्थिवान्मासचतुष्टयं हि  ॥ ४९ ॥

अस्मिंश्च वर्षे स हि मेदपाट-
देशे परिभ्रम्य कियत्पुरेषु ।

लुम्पाकजैनानपि शुद्ध-देव-
गुरुप्रभक्तानकृतोपदेशैः ॥ ५० ॥

शालिनी

अयन-मुनि-नवेन्दौ वत्सरे पट्टणेऽसौ,
जलद-समय-धस्रान् यापयामास विद्वान् ।
सुभविक-जनवृन्दैः कारयन् धर्मकृत्यं.
सदसि विपुल-सभ्याञ्छ्रावयन्नागमं सः ॥५१॥

गीतिः

श्रीहेमचन्द्राऽऽचार्य-ग्रन्थावलीस्थापनामिह चक्रे ।
केशरियाजित्संघै-र्मोतीलाल-पोपटलाल-नामितैः ॥ ५२ ॥

वसन्ततिलका

संघाऽधिपस्य विपुलाऽऽग्रहतः सहैव,
गत्वा चकार विधिवद्वर-तीर्थयात्राम् ।
श्रीमानुदारचरितः प्रभुतीर्थनाथं,
तुष्टाव रम्य-सरस-स्तुतिभिश्चिराय ॥ ५३ ॥

रामर्षि नन्द-वसुधामित-विक्रमाऽब्दे,
तस्थौ सुखेन नगरे पृथु-चाणसाऽऽख्ये ।
वर्षानिवासमसकौ जनताऽऽग्रहेण,
दूरीचकार जनता-स्थित-वैरभावम् ॥ ५४ ॥

प्रादुर्बभूव विभु-शीतलनाथमूर्ति-
रुर्वीतलात्तत उदारमना इहाऽसौ ।
प्रातिष्ठिपच्च पुरि शीतलनाथमण्ड-
लं वादिकुञ्जरहरिश्चरिताधिनाथः ॥ ५५ ॥

उपजातिः

उदन्वदश्व-ग्रह-भूमिवर्षे[१९७४],
चोंझापुरे प्रावृषमध्युवास ।
संघाऽऽग्रहात्तत्र घनोऽम्बुधारा-
मिवोपदेशं सुचिरं ववर्ष ॥ ५६ ॥

औपच्छन्दसिकम्

राधनपुरवासिनं लिलासुं,
वीरवेषमिह सोमचन्द्रसंज्ञम् ।
परिव्राज्य सम्पदाख्यमेष,
कृत्वा सेवासंसदं न्ययौक्षीत् ॥ ५७ ॥

वसन्ततिलका

आगत्य राजनगरं शर-वाजि-नन्द-
पीयूष-रश्मि-परिमाणित-विक्रमाऽब्दे[१९७५] ।
व्योकार-चैथिक-तते सदुपाश्रयेऽसौ,
जीमूतकालमखिलं गमयाञ्चकार ॥ ५८ ॥

उपजातिः

श्रेष्ठी हठीसिंह उदार-भावो,
दिनाऽष्टकीयं कृतवान् महं च ।
पाडादिपोलस्थित-कालिदासः,
कृती मलीचन्द-सुनन्दनश्च ॥ ५९ ॥

धनैश्च लोकैरुपधानमत्र,
स्त्रीभिश्च पुम्भि-र्महता व्ययेन ।
कारापयामास तदन्त्य-धस्रे,
माला-समारोपण-सूत्सवञ्च ॥ ६० ॥

श्रीमद्गुरोस्तानवबाधनेन,
पडश्च-नन्देन्दुमितेऽपि वर्षे ।
तत्रैव तस्थौ चतुरश्च मासान्,
पट्शास्त्र-पारीण-चरित्रनेता ॥ ६१ ॥

रस-स्वराऽङ्कक्षिति-मानवर्षे,
सहः सिते पन्नगराजतिथ्याम् ।
रसाऽग्नि गुण्याय महामहिम्ने,
यशस्विनेऽशेप-जनप्रियाय ॥ ६२ ॥

पन्यास-भावो गुरुरेतकस्मै,
सहर्षमाचार्यपदं गरीयान् ।

प्रदत्तवान् संसदि सज्जनानां,
महाजनानामतिमोदमानः ॥ ६३ ॥ (युग्मम्)

तुरङ्ग-सप्त-ग्रहं-शीतरश्मि-
वर्षे च शत्रुञ्जयतीर्थमध्ये ।
चक्रे चतुर्मास्यमसौ महीयान्,
आचार्य-वर्यः प्रभु-नीतिसूरिः ॥ ६४ ॥

आर्या

राजनगरपुरि सूरि-श्छगनलाल-इच्छाचन्दाख्येन ।
कारयित्वोपधानं, पादलिप्तनगरमुपयातः ॥ ६५ ॥

इन्द्रवज्रा

आष्टाहिकश्चारु-महामहोऽत्र,
शान्त्यादिकस्नात्रसमर्चनं च ।
सेवासमाजाऽभिध-संसदश्च,
संस्थापनाऽभूदुपदेशतोऽस्य ॥ ६६ ॥

उपजातिः-

स जीवराजो धनजीभ्यपुत्रः,
प्राचीकरच्चात्र महोपधानम् ।
तपोऽधिक स्व-द्रविण-व्ययेन,
प्राप्तो च मालापरिधापनाऽऽदि ॥ ६७ ॥

अष्टाऽश्व-रन्ध्रेन्दुमिते (१९७८) च वर्षे,
वेरावले चाऽस्य बभूव सूरेः ।
रम्यश्चतुर्मास्य उदारबुद्धे-
र्लाभो महान् पौरजनस्य जज्ञे ॥ ६८ ॥

इतो गतो रैवत-भूधरोप-
रिष्टादपश्यन्महतीं च तत्र ।
आशातनां सूरिवरस्ततोऽयं,
जूनागढं चाऽऽगतवान् सुशिष्यैः ॥ ६९ ॥

संस्थापयामास च तत्र पुर्यां,
सेवासमाजं नरराज-मन्त्री ।
अत्यन्त-धर्मिष्ठ-कुशाऽग्रबुद्धिः,
समाययौ तेन सहाऽमिलच्च ॥ ७० ॥

औपच्छन्दसिकं

गोविन्द-खुशालचन्दनामाऽऽ-
दिक-सुधियां साहाय्यदानतश्च ।
रैवताद्रिपर्वतोपरिष्टा-
जीर्णोद्धृतिमारम्भयच्च सूरिः ॥ ७१ ॥

उपजातिः

नव-स्वराऽङ्केन्दुमिते (१९७९) च वर्षे,
जूनागढेऽसौ स्थितवान् प्रविद्वान् ।

वर्षर्तुकालं सह भूरिशिष्यैः,
सज्जैन-धर्माऽम्बुज-पद्मबन्धुः ॥ ७२ ॥

सूरीश्वरस्याऽस्य महोपदेशा-
च्छ्राद्धाऽऽदिलोकाः सकलाश्च पौराः ।
जीर्णोद्धृतेः कार्यमकारयन्त,
कायेन वित्तेन गिरा च बाढम् ॥ ७३ ॥

नभः सिते भूधरजासुतिथ्यां,
पन्न्यास-भावाऽऽख्यगुरोः प्रयाणम् ।
स्वर्गीयमाकर्ण्य जना इहत्या,
आष्टाहिकाऽऽद्युत्सवमारभन्त ॥ ७४ ॥

वियद्गिरीन्द्र-ग्रह-चन्द्रवर्षे, (१९८०)
स राजपूर्वे नगरे विशाले ।
डेलाऽभिधोपाश्रय इद्धतेजाः,
समस्थित प्रावृषि वेदमासान् ॥ ७५ ॥

रेमन्त-भूध्रोपरि-जीर्णचैत्य-
समुद्धृताविभ्यगणा इहत्याः ।
पादोनलक्षं व्यतरंश्च मुद्राः,
श्रीनीतिसूरीश्वर-सूपदेशात् ॥ ७६ ॥

मालिनी

गुण-कमलसुमुन्योरत्र दीक्षाऽजनिष्ट,
शशधर-वसु-नन्द-क्ष्मामिते वत्सरेऽसौ । (१९८१)

सुविहित-वर-सूरि-व्राजि-चूडामणीयान्,
जलद-समय-वाँकानेरवासी बभूवान् ॥ ७७ ॥

गीतिः—

गुर्जर-पट्टणपुर्यां, पन्यासदयाविजयाय धीमते ।
इहोपाध्यायपदवीं, शान्तिमुनयेऽदित पन्यासपदवीम् ॥७८॥

भुजङ्गप्रयातम्

इतो रैवताद्रिं कियद्भिर्विनेयैः,
सहाऽऽगात्स दण्ड-ध्वजाऽऽरोपणार्थम् ।
प्रतिष्ठामहेऽस्मिन् सहस्रं समागु-
र्महेभ्याऽऽदिलोकाः समुत्साहवन्तः ॥ ७९ ॥

इन्द्रवज्रा

धोराजिनाम्नि प्रथिते पुरे च,
सेवासमाजं समतिष्ठिपत्सः ।
भव्यांश्च जीवान् भव-कूपपाता-
दत्रायतैष प्रथित-प्रभावः ॥ ८० ॥

आर्या

जीवराज-धनजीभ्यो, वाँकानेरपुरे चाऽऽचार्यगिरा ।
उपाश्रयं रमणीयं, कारयित्वा प्रथयाञ्चक्रे ॥ ८१ ॥

गीतिः—

कृतवांश्च तदर्थमेष, आष्टाहिकमहोत्सवं बहुचारुम् ।
शान्तिस्नात्रं विधिना, स्वामिवात्सल्याऽऽदिकं शुभकृत्यम् ।८२।

उपजातिः—

द्व्यष्टाऽङ्कभूमीमितविक्रमाऽब्दे, [१९८२]
स राजपूर्वनगरं समेत्य ।
वैरे महोपाश्रय एष तस्थौ,
वर्षादिनानि प्रभुनीतिसूरिः ॥ ८३ ॥

त्रिंशत्सहस्रं विततार मुद्राः,
समस्तसंघः सुगुरूपदेशात् ।
रेमन्त-शैलोपरि-जीर्णचैत्यो-
द्धाराय तत्रत्य उदारभावः ॥ ८४ ॥

गीतिः—

वाडीलाल-छगनला-
लः श्रेष्ठी कारितवानुपधानम् ।
मालाऽऽरोपणहेतो-
राष्टाहिकं महामहं विततान ॥ ८५ ॥

आर्या

पट्टण-वसति-महेभ्य-
श्चुनीलाल-नानचन्द इत्याख्यः ।

शङ्खेश्वरे च कृतवान्,
आचाम्लाऽऽवलिकोद्यापनम् ॥ ८६ ॥

उपजातिः—

गुणाऽष्ट-नन्द-क्षितिविक्रमाऽब्दे,
श्रीमानयं जेतपुरे प्रचक्रे ।
समस्त-तत्पौर-जनाऽऽग्रहेण,
वर्षानिवासं सह भूरिशिष्यैः ॥ ८७ ॥

कच्छीय सत्तीर्थिक-संघमेष,
नगीनदासाऽभिध इभ्य-मुख्यः ।
श्रीकर्मचन्दाख्य-महेभ्य-सूनुः,
प्रवृद्ध-भावान्निरजीगमच्च ॥ ८८ ॥

सहैव तेनैष सुसंघकेन,
चचाल यात्रा-प्रविधित्सया सः ।
जूनागढे तैर्थिकमालया तं,
संघाऽधिपं सम्यगभूषयच्च ॥ ८९ ॥

तोटकम्

उपधान-तपः परमं समहं,
समभूदिह चारुतरं विधिवत् ।
अजनिष्ट सुकृत्यमनेकजनान्,
प्रतिबोधितवानसकौ सुगुरुः ॥ ९० ॥

उपजातिः

उदन्वदष्ट-ग्रह रोहिणीश-
[१९८४] सम्वत्सरे प्रावृषमध्यवात्सीत् ।
स राधनाऽऽह्वं पुरमार्हतानां-
मत्याग्रहाद्भूरिमहामहेन ॥ ९१ ॥

आर्या—

उपदिश्य सर्वपौरा-ञ्छ्रीरत्नविजय-जैन-पाठशालाम् ।
इहाऽतिष्ठिपत्सूरिः, स जैनबोर्डिङ्गमपि रम्यम् ॥ ९२ ॥

उपगीतिः—

मगालिया-बापुलाल-जमनादासाऽभिधः श्रीमान् ।
[१५०००] शर-शशि-सहस्रमुद्रा, वितीर्यौदार्यमदर्शयच्च ॥ ९३ ॥

उपजातिः

[१९८५] पञ्चाऽष्ट-रन्ध्र-क्षितिविक्रमाऽब्दे,
राजाऽऽदिके सन्नगरे गरीयान् ।
चक्रे चतुर्मास्यमनल्पलोकाऽऽ-
ग्रहेण सौशील्यचणः प्रविद्वान् ॥ ९४ ॥

मानोदयाभ्यामददाद्गणीति-
पदं मुनिभ्यां सुमहेन तत्र ।

नानातपस्या सुमहाश्च नैके
बभूवुरेतत्सुगुरूपदेशात् ॥ ९५ ॥

द्रुतविलम्बितम्

कपडवञ्ज-पुरे विबुधाऽग्रणी,
रस वसु-ग्रह-भूमिमिताऽब्दके[१९८६] ।
जलमुचां समयं व्यनयन्मुदा,
सुमुनि-भक्तिमदीक्षयदेषकः ॥ ९६ ॥

उपजातिः

जाबालपुर्यामकरोच्चतुर्मा-
सीमेष सप्ताऽष्ट-नवेन्दुवर्षे[१९८७] ।
अत्रीभवद्धर्ममनेकमत्र,
सत्पौरलोकैर्महता महेन ॥ ९७ ॥

सद्विद्य-मोती-मुनि-मुक्ति-धीर-
विचक्षण-श्रीतिलकाऽभिधानाम् ।
सद्बुद्धिकश्रीउदयाऽऽख्य-कल्या--
णयोश्च मुन्योर्विहितोत्सवेन ॥ ९८ ॥

गणीत्युपाधिं प्रवितीर्य पश्चात्,
प्रादाच्च पन्न्यासपदं ह्यमीषाम् ।
तदर्थमाष्टाहिकमुत्सवं हि,
सच्छान्तिकस्नात्रसमर्चनं च ॥ ९९ ॥ (युग्मम्)

सुस्वामिवात्सल्यमजस्रपूजा–
प्रभावनाङ्गीरचनाऽऽदिकृत्यम् ।
प्रोत्साहिनस्ते भविका अकार्षुः,
सुश्रावकाः शासन–दीप्तिकाराः ॥ १०० ॥

गणीत्युपाधिं मुनये महेन्द्र–
नाम्ने च पन्न्यासपदं ददानः ।
श्रीमङ्गलस्याऽथ मनोहरस्य,
श्रीसम्पदश्चाऽत्र गणीत्युपाधिम् ॥ १०१ ॥

रेमन्तजीर्णोद्धृतये च लोकै[१४]–
सहस्रमुद्रा उपचित्य सर्वे ।
चरित्रनेतुर्विशदोपदेशात्,
प्रदत्तवन्तः शुभभाववन्तः ॥ १०२ ॥

कुम्भारियाजिद्वहु–जीर्णचैत्यो–
द्धाराय चाऽदादिह संघवर्यैः ।
वादीन्द्र–मत्त–द्विरदाऽङ्कुशस्य,
सूरीश्वरस्याऽस्य महोपदेशात् ॥ १०३ ॥

वसन्त०

श्रीसुन्दराह्वविजयस्य जयस्य साधोः,
सद्बी–शुभाऽऽख्य–विजयस्य ददौ च दीक्षाम् ।
देवेन्द्रनाम–विनयाऽह्वक–जीवनाम्ना–
मेतच्चरित्र–वरनायक–नीतिसूरिः ॥ १०४ ॥

वस्वष्ट-नन्द-वसुधामित-विक्रमाब्दे,
सन्तस्थिवांश्च फलवर्द्धिपुरे महीयान्।
वर्षामृतुं गमयितुं सह भूरिशिष्यैः,
तत्पौर-मुख्यजनता-विपुलाऽऽग्रहेण ॥ १०५ ॥

उपजातिः

आसीच्च यस्तत्र महान् विरोधः,
संघे समस्ते सुचिरात्तमेषः।
उदच्छिदत्सूरिवरः स्वकीय-
सारोपदेशप्रखराऽसिनाऽऽशु ॥ १०६ ॥

गीतिः

कृष्णलाल इह सम्प-ल्लालसुतः कारितवानतिभव्यम्।
जिनमन्दिरमतितुङ्गं,धर्मशालां च महतीमतिरम्याम्॥१०७॥

तोटकं

उपधानतपो बहुभिः सुजनैः,
समचीकरताऽधिकभक्तिभरैः।
द्रविणं विपुलं स हि वीक्ष्य निजं,
वसु-वासर-चारुमहं कृतवान् ॥ १०८ ॥

मालिनी

नव-वसु-निधि-भूमीसम्मिते हायने रा-
जनगर-वरपुर्यां लोहकारीय-वीथ्याम्।

न्यवसदतिगरिष्ठोपाश्रये सूरिराजः,
सह विपुलविनेयैः प्रावृषेण्याऽब्धिमासान् ॥ १०९ ॥

उपजातिः-

वियद्ग्रहाऽङ्केन्दुमिते [१९९०] च वर्षे,
स मोहमय्यां पुरि तस्थिवांश्च ।
श्रीसंघ-बह्वाग्रहतश्चतुर्मा
स्यामेष शास्त्रार्णव-पारदृश्वा ॥ ११० ॥

गीतिः

राजनगरीय-वाडी-लालछगनलाल इहोपधानम् ।
कारयामास विधिना, महता महेन स बहुस्त्रीपुरुषैः ॥१११॥
रेमन्ताऽचलतीर्थो-द्धारार्थं यथाशक्ति वसुदानम् ।
अकृषत सकला इभ्या, आष्टाहिकमहामहं बहुचारुम् ॥११२॥

उपजातिः

मृगाङ्क-रन्ध्राऽङ्कमहीमितौ [१९९१] ऽब्दे,
सत्पादलिप्ते नगरे जनानाम् ।
अत्याग्रहाद्वार्षिकवासमेष,
चरित्रनेता कृतवान् सुखेन ॥ ११३ ॥
अष्टाह्निकाऽनेकमहामहं हि,
शान्त्यादिक-स्नात्रसमर्चनाऽऽदि ।
समस्त-साध्वीजनपाठशाला-
संस्थापनं चारुमहोपधानम् ॥ ११४ ॥

सीपोर-वासी सुकृती च वाडी-
लालो हठीसिंह उदारभावः ।
चकार सर्वं स्व बहुव्ययेन,
शत्रुञ्जये पावन-तीर्थमध्ये ॥ ११५ ॥ (युग्मम्)

द्वि-नन्द-नन्दैकमिते सुवर्षे,
श्रीविक्रमार्केण विनिर्मिते वै ।
आचार्यवर्या विजयादिनीति-
सूरीश्वराः शिष्यसमूहसार्धम् ॥ ११६ ॥

सम्यक् चतुर्मासनिवासकार्यं,
श्रीराधनादौ पुर उच्चहर्म्ये ।
श्रीसंघसंपार्थनया सुभावं,
दक्षा अकार्षुर्जिनधर्मवृद्ध्यै ॥ ११७ ॥ (युग्मम्)

श्रीमन्मशालीयकुलप्रदीप-
श्रीबापुलालाऽभिधसद्धनीशा ।
प्रस्थापिताऽऽसीद् वरपाठशाला,
पुरा श्रुतज्ञानविवर्धनार्थम् ॥ ११८ ॥

तस्यास्तु भव्यं भवनं नवीनं,
विधापितं संघहिताय तेन ।
उद्घाटनं तस्य सुमन्दिरस्य,
श्रेष्ठीश्वरो ज्ञानविवृद्धिकाङ्क्षी ॥ ११९ ॥

वर्षर्तुमासस्थितिकारिणां श्री-
सूरीश्वराणां वरदैः कराब्जैः ।
महोत्सवैः सार्धमसौ सहर्ष-
मचीकरत् सोत्तमभावनाढ्यः॥१२०॥(विशेषकम्)

तत्रोपधानादिकसत्तपांसि,
श्रीजैनधर्मोन्नतिकारकाणि ।
प्रभावना-सन्महपूर्वकाणि,
अकारयन् सद्विधिना मुनीशाः ॥ १२१ ॥

त्रि-नन्द-नन्दैकमितेऽब्दके च, (१९९३)
श्रीनीतिसूरीश्वरसूरिसूर्याः ।
अहम्मदावादपुरे वरेण्ये,
शिष्यैः प्रशिष्यैः सह धर्मधुर्याः ॥ १२२ ॥

श्रीलोहकाराऽभिधवित्तवीथ्या,
उपाश्रये साधुवराश्रये वै ।
वर्षाब्धिमासान् विधिना ह्यवात्सुः,
संघाग्रहाद् धर्मविबोधनार्थम् ॥१२३॥ (युग्मम्)

सम्पद्विशाले नगरे विशाले,
उपाश्रयेषु ह्यपरेषु तत्र ।
शिष्यान् स्वकीयान् भविबोधनाय,
प्रैष्यंश्चतुर्मासनिवासहेतोः ॥ १२४ ॥

संवत्सरीनिर्णयविग्रहेऽपि,
सर्वत्र साम्यस्य निदर्शनेन ।
सर्वज्ञसूक्ताऽमृतवर्षणेन,
भव्यात्मचेतःपरितर्पणेन ॥ १२५ ॥

लोकस्य मिथ्यात्वविकर्षणेन,
श्रीसंघसन्मानसहर्षणेन ।
सूरीश्वराः पर्युषणादिपर्वा-
ण्यचीकरन्नुच्चमहोत्सवेन॥१२६॥(त्रिभिर्विशेषकम्)

द्रुतविलम्बितम्

उदधि-नन्द-नवैकमिताङ्कके, [१९९४]
नृपतिविक्रमनिर्मितवत्सरे ।
गुरुवरा उदयादिपुरेऽभवन्,
घनघनागमसासनिवासिनः ॥ १२७ ॥

विजयनीतिमुनीशमनीषिणां,
सदुपदेशविधेः सुविधानतः ।
उदयपूर्जनतासु च जागृतिः,
समभवज्जिनधर्मकृतौ तदा ॥१२८॥ ( युग्मम् )

तदाऽकरोत् पर्युषणादिपर्वणि,
तपःप्रवृत्तिं महतीं तदातनीम् ।
उदेपुरे जैनसमूह उच्चकै-
र्जिनार्चनाभिर्निजकर्मनिर्जराम् ॥ १२९ ॥

उपजातिः

नाऽऽसीच्च तत्राऽऽनवतेः शरद्भ्यः,
महोपधानस्य पुरा प्रवृत्तिः ।
श्रीनीतिसूरीशहितोपदेशाद्,
अस्मिंश्चतुर्मास इहाऽभवत् सा ॥ १३० ॥

सपञ्च-नं-द-ग्रह-भूमिसंख्ये, (१९९५)
अहम्मदावादपुरेऽब्धिमास्सु ।
आचार्यवर्या विजयादिनीति-
सूरीश्वराः संघमहाग्रहाच्च ॥ १३१ ॥

श्रीलोहकारस्य सुविस्तवीथ्यां,
शिष्यैः प्रशिष्यैः सह बोधवित्तैः ।
मुदा ह्यवात्सू रुचिरेऽत्र वर्षे,
जिनेन्द्रधर्मोन्नतिलग्नचित्तैः ॥१३२॥ (युग्मम्)

तोटकवृत्तम्

व्रजनाथविपश्चिदुदारधिया,
शिवशङ्करशास्त्रिसुधर्मधिया ।
कृतमुच्चमिदं च सुपद्यमयं,
समवार्षिकवर्णनमीडयतमम् ॥ १३३ ॥

स्रग्धरा

श्रीमत्पन्न्यासकल्याणविजयवरधी-शुद्धभाषासुलेखं,
चाऽऽश्रित्यैतद्गुरूणा-मनुपममहिम-स्फारकीर्तिव्रजानाम् ।

सूरीशां नीतिनाम्नां विहितसमचतुर्मास्यसंख्यानमेतत्,
संक्षिप्तं श्लोकबद्धं विपुलमतिमतां तुष्टयेऽमत्सराणाम् ॥१३४॥

तोटकवृत्तम् -

शर-नन्द-नवैकसुवत्सरके, [१९९५]
विमलाचलतीर्थपवित्रपुरे ।
परिपूर्णमभूत् सुमुनीन्द्रपते-
श्चरितं भवताद् भुवि मोदकरम् ॥ १३५ ॥

इति श्रीविजयनीतिसूरीश्वरचरित्रे

चातुर्मास्याख्यानं

समाप्तम् ॥

अनुयोगाचार्य-पंन्यास-श्रीमद्

# भावविजयगणिवर्याणां पट्टपरम्परा ।



वसन्ततिलकावृत्तम्

पन्न्यास-भावविजयस्य महीयसोऽस्य,
जैनागमाऽब्धि-परिमन्थन-मन्दरस्य ।
विश्वप्रसारि-शशिगौर-यशोधरस्य,
शिष्या बभूवुरिह वेदमिताः सुधीराः ॥ १ ॥

आचार्यवर्य-सकलाऽऽर्हतशास्त्रपारा-
वारीण-धीर-धिषणोऽनुपमोपदेष्टा ।
ज्ञानासिना निहतमोहविपक्षपक्ष-
स्तेष्वादिमो विजयनीति-गरिष्ठसूरिः ॥ २ ॥

स्रग्धरा

आजन्म-ब्रह्मचारी स्वपरसमयवित् तारकाणां वरीयान्,
भक्ताऽज्ञानान्धकार-प्रचयपरिहृतौ भास्करो भूतलेऽस्मिन् ।
प्रौढात्य-प्रतापी सदसि च विदुषां वाग्मितावान् सुविद्वान्,
जैनाचार्यप्रकाण्डः सकलवरगुणाऽलंकृतो वर्त्ततीति ॥ ३ ॥

शिखरिणी--

महोपाध्यायः स प्रथित-वरविद्वान् सुमतिमान्,
दयोपाह्वः श्रीमान् सरलहृदयो वाचनपटुः ।
अखण्डं सौशील्यं दधदखिलजैनागमविदः,
समासीत् सच्छिष्यः शम-दम-दयावानतितराम् ४

उपजाति

तदीय-शिष्यो मुनिनायको हि,
जितेन्द्रियेषु (याणां) खलु नायकोऽभूत् ।
अखण्डबोधिस्तपसि प्रकृष्टो,
दिवं गतोऽर्हत्सु विलीनचित्तः ॥ ५ ॥

मालिनी--

रविविजयसमाख्यो योग्यशिष्यो द्वितीयः,
सतत-विहरमाणो नैकदेशेषु धीमान् ।
गुणिजन-गणनीयः शुद्धचारित्रशाली,
शुभगति-मतिदायी वर्तते श्रावकाणाम् ॥ ६ ॥

अरुणकिरणकान्तः शान्त-दान्तस्तृतीयो,
मुनिवरसुमतस्य श्लाघ्यचारित्रभाजः ।
अरुणविजयनामा दीप्तधामा विनेयो,
जिनवर-गुरुभक्तो विद्यते धर्मसक्तः ॥ ७ ॥

वसन्ततिलकावृत्तम्

पन्न्यासभावविजयस्य गणीश्वरस्य,
आसीद् ऋजूत्तमधियो हि तृतीयशिष्यः ।
गम्भीरपूर्वविजयेतिशुभाभिधानः,
सम्यक्त्वतत्त्वविदुरश्छिदुरोऽहसां यः ॥ ८ ॥

उपजातिः

ख-वेदवर्षाणि[४०] च पालयित्वा,
चारित्ररत्नं जनदुर्लभं सः ।
प्रान्ते तपस्यां कठिनां विधाय,
सत्स्वर्गलोकाभरणं प्रजातः ॥ ९ ॥ ( युग्मम् )

योऽभूत्तुरीयः सुविनीत-चारि
त्राढ्यः सुशिष्यो बहुतीक्ष्णबुद्धिः ।
गम्भीरतादि-प्रगुणोपपन्नः,
सद्ब्रह्मचर्यव्रतिनां प्रमुख्यः ॥ १० ॥

कौटुम्बिकः पट्टण-सत्पुरेभ्य-
मुख्यस्य जैनागम-पारदृश्वा ।
मेधाविनां मुख्यतमः स आसीत्,
तपिष्ठ-तेजिष्ठ उदारकीर्तिः ॥ ११ ॥ ( युग्मम् )

प्राचीनतीर्थोद्धृतिकारि-जैना
ऽऽचार्यप्रकाण्डा-ऽखिलवादिजिष्णोः ।

जगज्जनाऽऽदर्शमयाऽतुलस्य,
चरित्रनेतुः प्रभुनीतिसूरेः ॥ १२ ॥
सच्छिष्यवर्गाः समधीतशास्त्राः,
परीषहाऽशेषसहाः सुधीराः ।
नखप्रमाणा विलसन्ति मह्यां,
विनीतवेषाः सकलाऽऽगमज्ञाः ॥ १३ ॥

वसन्ततिलकावृत्तम्

पन्न्यास-दानविजयो वहुदान्त-शान्त,
आत्माऽनुचिन्तनरतो जितमोहमल्लः ।
आचार्यवर्य-विजयादिकहर्षसूरि-
जैनागमादि-कतिशास्त्रविशेषविद्वान् ॥ १४ ॥
एतच्चरित्र-वरनायक-पट्टसंस्थः,
स्वीया-ऽन्यदीयवहुशर्मकरो गुणाब्धिः ।
सद्देशनादद्न-दक्षिणतामुपेतः,
सद्वादिजित्वर उदारयशाः सुशान्तः ॥१५॥ (युग्मम्)
पन्न्यास-मुक्तिविजयो वहुशास्त्रवेदी,
मुक्तिस्त्रिया परिरिरंसुमना महात्मा ।
विश्वोपकारिवर-संस्कृतकोशकारी,
विद्याऽनुरागमधिकं स हि विभ्रदस्ति ॥ १६ ॥
सत्पूज्य-राजविजयः परमोत्सहिष्णुः,
सोढा परीषहततेरतितीक्ष्णवुद्धिः ।

सद्देशनाकरणपाटववानुदारः,
सौशील्यवानभवदुज्ज्वलकीर्तिकारी ॥ १७ ॥

पञ्चचामरम्

स चन्दनाऽभिधो मुनिर्द्विवर्षमेव संयमं,
सुनिर्मलं कुशाग्रधीः प्रपाल्य सौव-सद्गुरोः ।
वशंवदः समुच्चकैर्भवन्नुदारमानसः,
करालकाल-वश्यतामियाय शुद्धशीलवान् ॥ १८ ॥

वसन्ततिलका

पन्न्यासभाक् सुमतिमानुदयो गणी च,
जैनागमाऽभ्यसन-तत्परतामुपेतः ।
व्याख्यानतः सकलसज्जन-चित्तमोदी,
श्रीमान् महान् कविवरो गुरुसेवकोऽस्ति ॥ १९ ॥

उपजातिः

गणीत्युपाधिर्मुनिसंपदाख्यः,
पन्न्यास-इत्युच्चपदाऽङ्कितश्च ।
शास्त्रज्ञ-सत्पाठक-सत्तपस्वी,
शेश्रीयमाणोऽस्ति गुरोः क्रमाब्जम् ॥ २० ॥

वैतालीयम्

कमलमुनिर्वत्सरत्रयं,
चारित्रं परिपाल्य नाकिनाम् ।

सहवासी भूतवान् सकः,
संध्यायन् जिनपाद-पङ्कजम् ॥ २१ ॥

गुणविजयो द्व्यब्दिकाऽवधिं,
परिपाल्य संयमं महामनाः ।
देवलोकमध्यगादितो,
हृदये निधाय चाऽर्हतं पदम् ॥ २२ ॥

उपजातिः

मुनिर्जयाख्यः सुतपांसि भूरि,
कृत्वा विनिर्धूय समस्तपापम् ।
जीनोऽपि दीक्षामुपनीय काले,
समाधिना द्यामुपयातवान् सः ॥ २३ ॥

मुनिश्च विद्याविजयो जनोप-
देशैकरागी निपुणोऽस्ति तस्मिन् ।
महाविनीतः कुशलः क्रियायां,
सत्साधुभक्तावधिकोत्सहिष्णुः ॥ २४ ॥

इन्द्रवज्रा

पश्चाऽब्दमात्रं परिपाल्य चारि-
त्रं भक्तिनामा सुमुनिर्विनीतः ।
सम्यक् श्रुताऽभ्यासकृति-प्रसक्तः,
संप्राप लोकान्तरमात्मचिन्तः ॥ २५ ॥

માલિની

શુભવિજયમુનિસ્તુ સ્વાત્મ-સંધ્યાનકારી,
સતત-તપસિ લીનો વર્તતે તીવ્રબુદ્ધિઃ ।
બહુવિનય-વિવેકી શુદ્ધ-ચારિત્રશીલઃ,
પ્રથિત-ગુણગરિષ્ઠઃ સચ્ચરિત્રઃ પવિત્રઃ ॥ ૨૬ ॥

ઉપજાતિઃ

દેવેન્દ્રસાધુઃ પ્રભુબિમ્બપૂજા-
કરાપણે દક્ષતરઃ સુશીલઃ ।
સંપાલિતાઽઽદક્ષ્ય સંયમસ્તુ,
જીવો મુનિઃ સ્વર્ગપુરીમિયાય ॥ ૨૭ ॥

દ્રુતવિલમ્બિતમ્

ભુવનનામમુનિર્બહુસદ્ગુણી,
ગુરુવરાઽઙ્ઘ્રિસરોરુહ-ષટ્પદઃ ।
સતતસાધુ-સુસેવનકારકો,
નિરતિચારસુસંયમ-પાલકઃ ॥ ૨૮ ॥

ઉપગીતિઃ

રાજનગર-પુરજન્મા,
ચમ્પકમુનિરતિનિર્મલશીલઃ ।
કુરુતે વિદ્યાઽભ્યાસં,
મેધાવી વિનયાદિગુણૌઘઃ ॥ ૨૯ ॥

इन्द्रवज्रा

श्रीवल्लभाख्यो मुनिरस्ति तर्क-
वादे पटीयान् गुणवान् सुमेधाः ।
सौशील्यधारी मलयो मुनिस्तु,
सद्बुद्धिरभ्यस्यति शास्त्रमेषः ॥ ३० ॥

मालिनी

कनकविजयनामा ज्ञान-चारित्रधाम,
सुकृतिततिसुरामो मोक्षसंप्राप्तुकामः ।
गुरुपदकजभक्तो जैनसिद्धान्तरक्तः,
कठिनतपसि सक्तो विद्यते दर्शनाक्तः ॥ ३१ ॥

आर्या

कञ्चनविजयाऽभिधानः,
सम्यग्ज्ञानादिसद्गुणाधानः ।
सद्गुरुशासनरागी,
जयतितरामिह सूरिसच्छिष्यः ॥ ३२ ॥

वसन्ततिलका

सच्छीलभूषणवृतो मुनिभूषणोऽन्यः,
श्रीभूषणादिविजयो वरसूरिशिष्यः ।
जैनागमाऽध्ययनतत्पर-सद्गुणाढ्यः,
सम्यक्त्वतत्त्वरसिकश्चरिताऽवदातः ॥ ३३ ॥

उपजातिः

वैराग्यरङ्गाऽन्वित उच्चबोधिः,
श्रीरङ्गपूर्वो विजयाऽभिधानः ।
श्रीनीतिसूरीश्वरपादभक्तः,
शिष्योऽपरोऽस्ति श्रितधर्मतत्त्वः ॥ ३४ ॥

वसन्ततिलका

आनन्दपूर्वविजयाऽङ्कितनामजुष्ट,
आचार्यवर्यचरणाऽद्ब(ब्ज)मरन्दतुष्टः ।
वन्द्यो जनैः सकलसन्मुनिवृन्दनन्द्यः,
सज्ज्ञान-दर्शन-चरित्रभृतोऽस्ति शिष्यः ॥ ३५ ॥

भद्रङ्करो निखिलभव्यजनात्मनां यो,
भद्रादिनन्दविजयश्च मुनीन्द्रशिष्यः ।
शान्तोऽवदातचरितो गुरु-देवभक्तो,
विद्याविशुद्धहृदयोऽस्ति जिनेशरक्तः ॥ ३६ ॥

उपजातिः

प्रभाकरस्येव समस्तजीवान्,
तपःप्रभाभि(प्रकाशै)रभिभासयन् यः ।
मुनिः प्रभानन्दसुनामधेयः,
शिष्योऽपरोऽस्ति गुरु(स्त्येष सु)नीतिसूरेः ॥३७॥

इन्द्रवज्रा

श्रीमच्चरित्राऽधिपति-प्रधान-
पट्टासनाऽऽसीन-यशस्करस्य ।
विद्यानिधेः श्रीयुतहर्षसूरेः,
सच्छिष्यमालामपि दर्शयामि ॥ ३८ ॥

वसन्त

पन्यास-मानविजयो गुरुभक्तिरागं,
बिभ्राण उज्ज्वलमतिः सकलागमज्ञः ।
साहित्य-सुकृतिकरः परमार्थवेदी,
चारित्र-शीलपरिपालनसावधानः ॥ ३९ ॥

इन्द्रवज्रा

पन्यास कल्याणविजिन्मुनिस्तु,
व्याख्यानदाने निपुणः सुविद्वान् ।
स्वा-ऽन्यात्मचिन्ताकृदशेषसाधु-
साद्गुण्यशाली निरवद्य-शीलः ॥ ४० ॥

उपजातिः

जैनागमाऽभ्यासरतस्तपिष्ठः,
स्वात्माऽभिरामी सदसि प्रवक्ता ।
परीषहाऽत्यन्तसहिष्णुरस्ति,
स्वगौरवा-ऽङ्घ्र्यब्ज-विलीनभृङ्गः ॥४१॥ (यु.)

વસન્તતિલકા

પન્યાસઇત્યનુપમોચ્ચપદાડર્ચિતાખ્યઃ,
શ્રીહર્ષસૂરિવરપાદસરોજહંસઃ ।
સન્મઙ્ગલૈકકરણો હરણો હ્યઘાનાં,
શ્રીમઙ્ગલાદિવિજયોડસ્તિ વરેણ્યશિષ્યઃ ॥ ૪૨ ॥

માલિની

સુમતિવિજયસાધુર્વર્તતે સત્તપસ્વી,
શરે–સમિતિ–સુગુપ્તો દેશના–દાનદક્ષઃ ।
શ્રમણગુણ સુયુક્તઃ સમ્યગાચારપાલી,
ગુરુચરણસરોજ–ધ્યાનસંલીનચેતાઃ ॥ ૪૩ ॥

ઉપજાતિઃ

મહેન્દ્રનામા લઘુ–બાલચેષ્ટઃ,
સુલેખકઃ શાસ્ત્રપરિશ્રમી ચ ।
વિદ્યાવિનોદી ગુરુભક્તિકારી,
ચાતુર્યધારી વરિવર્તિ સાધુઃ ॥ ૪૪ ॥

વસન્તતિલકા

પન્યાસ–માનવિજયસ્ય સુશિષ્ય એવ,
શ્રીદર્શનો મુનિરુદારમતિઃ સુધીરઃ ।
ભક્તિં પરાં નિજગુરોઃ સતતં પ્રકુર્વન્,
સંપાતિ સંયમમદૂષિતમપ્રમત્તઃ ॥ ૪૫ ॥

श्रीमांश्च तीर्थविजयः परिपाति सम्यक्,
चारित्ररत्नमनिशं निरवद्य-शीलः ।
वैदुष्यभाक् च विनयी विनयाऽभिधानः,
शश्वत्तपः स कुरुते विविधं सुधीमान् ॥ ४६ ॥

उपजातिः

पन्न्यास-कल्याणविजिन्मुनीन्दोः,
सुलक्षणः संयम-शीलशोभी ।
सच्छिष्यकः श्रीयशइत्युपाख्यो,
यशोऽधिगन्तुं यतते सदैपः ॥ ४७ ॥
श्रीदुर्लभादिर्विजयाऽभिधानः,
सुदुर्लभज्ञान-चरित्रचारुः ।
कुबोधिनृणामतिदुर्लभं यद्,
भवेऽत्र मोक्षं पदमिच्छुरस्ति ॥ ४८ ॥

मालिनी

कुशलविजयनामा सत्य सम्यक्त्वधाम,
सकलकुशलकामः सद्गुणै राजमानः ।
स्वगुरुपरमभक्तो मुक्तिमार्गे प्रसक्तो,
जिनवरपदरक्तो विद्यतेऽसौ तृतीयः ॥ ४९ ॥

वसन्ततिलका

पन्न्यास-वर्यपदवी-परिभूषितस्य,
श्रीमङ्गलादिविजयस्य गणीश्वरस्य ।

श्रीरामपूर्वविजयाऽभिध उच्चशिष्यः,
श्रीरामचन्द्र इव शुद्धचरित्रचित्तः ॥ ५० ॥

માલિની

त्रिभुवनविजयाख्यः सद्गुणप्राज्यसख्य-
स्त्रिभुवनजयकर्तुः कामदेवस्य जेता ।
प्रवरतमचरित्रः पुण्यपुञ्जैः पवित्रः,
सकलजनसुमान्यः शिष्यवर्यो द्वितीयः ॥ ५१ ॥

આર્યા

सुमतिविजयाऽभिधानः,
सम्यक्त्वादिगुणैकनिधानम् ।
शिष्यौ स्तस्तस्य शिष्टौ,
क्लिष्टाऽऽत्मकर्मविदारणे दक्षौ ॥ ५२ ॥

માલિની—

भरतविजयनामा सन्मुनिश्रेष्ठधामा,
जिनवर-गुरुपूजातत्परो मुक्तिकामः ।
मुनिजनगणनन्द्यः सर्वजैनाऽभिवन्द्यः,
श्रुत-चरणसुचित्तः शान्त-दान्तो विनीतः ॥ ५३ ॥

ઉપજાતિઃ

क्रियाप्रशस्तः शुभशीलशाली,
श्रीहिम्मतादिर्विजयाऽभिधानः ।

विनेयवर्यो ह्यपरोऽपि तस्य,
विराजते रत्नत्रयेण युक्तः ॥ ५४ ॥

वसन्ततिलका

पन्यास-दानविजयाऽभिध-सन्मुनेश्च,
पन्यासयुक् तिलकनामकशिष्यवर्यः ।
अभ्यस्यति प्रवरबुद्धिरनेकशास्त्रं,
संचर्करीति बहुधोज्ज्वलसत्तपस्याम् ॥ ५५ ॥

पन्यास-दानविजयाख्य गणीश्वरस्य,
शान्तो गरिष्ठगुणरत्नसमूहजुष्टः ।
शिष्टो गुरोः सदुपदेशनया सुतुष्टः,
श्रीकेसरादि-विजयोऽस्ति द्वितीयशिष्यः ॥ ५६ ॥

उपजातिः

उमङ्गयुक्तं विजयान्तरम्यं,
सुनाम धर्ताऽस्ति तृतीयशिष्यः ।
विद्यैकचित्तश्च सदा विनीतः,
श्रीमज्जिनेशाऽङ्घ्रि-सरोजभक्तः ॥ ५७ ॥

गीतिः

पन्यास-तिलकविजया-
ऽन्तेवासिहीर-भानु-हेमविजयाः ।
तेष्वस्ति हीरविजयो,
देशान्तरे जनतोपदेशकरः ॥ ५८ ॥

भानुविजयमुनिरनघः,
कुसुमेषुरिवाऽधिक-तानवशोभः ।
वाग्मी सदसि च जिष्णु-
र्विवदिषुमखिलं गुरुपद्-बहुभक्तः ॥ ५९ ॥

ઉપગીતિઃ

हेमविजयमुनिरस्ति,
प्रकृतिमतिसरलां बिभ्राणः ।
संयमपालनदक्षो,
निरघ-शीलसुशोभित-देहः ॥ ६० ॥

વસન્તતિલકા

सद्भानु-भानुसदृशैः स्वतपःप्रतापै-
र्भव्यौघबोध-सवितुः कुतमोऽपहर्तुः ।
सज्ज्ञान-दर्शन-चरित्रयुतोपकर्तुः,
श्रीभानुपूर्वविजयस्य मुनीश्वरस्य ॥ ६१ ॥

ઉપજાતિઃ

सुबोधजुष्टः समता सुपुष्टो,
गुरूपदेशाऽमृत-पूर्णतुष्टः ।
सुबोधपूर्वं विजयान्तनाम,
धर्ताऽस्ति शिष्यस्तप-एकधाम ॥६२॥ (युग्मम्)

वसन्ततिलका

पन्यास-मुक्तिविजयस्य च शिष्य एष,
श्रीसुन्दरादि-विजयो विनयी सुशीलः ।
भद्रात्मकः सकलमौन-गुणाऽभिरामो,
गुर्वङ्घ्रिपद्म-मकरन्द-मिलिन्दभूतः ॥ ६३ ॥

उपजातिः

सदा चिदानन्दमयः स्वनाम्ना,
चिदादिनन्दो विजयान्त-रम्यः ।
श्रीसुन्दरादेर्विजयाऽभिधस्य,
मुनीश्वरस्याऽस्ति सुशीलशिष्यः ॥ ६४ ॥

गीतिः

राजविजयमुनि-शिष्यो,
रमणिकविजयश्च सुतपांसि विधाय ।
चारित्रं निरवद्यं,
परिपाल्य जगाम दिविषदां नगरम् ॥ ६५ ॥

वसन्ततिलका

पन्यासभागुदयनाममुनेर्विनेयो,
धीमान् मनोहरगणी सरलस्वभावः ।
चारित्रमेष परिपाति विशुद्ध-चेताः,
पन्यास-प्राप्तपदविर्गुणवांश्च बाढम् ॥ ६६ ॥

ઉપજાતિઃ

अन्ते वसंस्तस्य गणीश्वरस्य,
द्वितीयशिष्योऽस्ति गुणैकधाम ।
हंसादिपूर्वो विजयाऽभिधानः,
सम्यक्त्वशोभी गुरुभक्तिकामः ॥ ६७ ॥

રથોદ્ધતા

भास्करप्रतिम-भास्करो भुवि,
स्वीयतीव्रतपसा नृणां हृदि ।
भास्करादि-विजयाऽभिधो मुनि-
र्विद्यतेऽध्ययन-तत्परो गुणी ॥ ६८ ॥

માલિની "

निपुणजनमनांसि (?) रञ्जयन् स्वोपदेशै-
र्निपुणविजयनामा शिष्यवर्यश्चतुर्थः ।
निपुणपठनकार्यः साधुसेवाऽतिदक्षो,
जयति जगति नित्यं स्वीकृतप्राणिरक्षः ॥ ६९ ॥

ઉપજાતિઃ

पन्न्यास-इत्युच्चपदाऽर्चितो यो,
गणीत्युपाधिश्च गुणैरुपेतः ।
मनोहरादिर्विजयाख्यधर्ता,
सुसंयमः संघ-मनोहरोऽस्ति ॥ ७० ॥

वसन्ततिलका

तच्छिष्य-मेरुविजयो गुरुभक्तिकारी,
भद्रङ्कराऽऽह्वविजयोऽपरशिष्यकस्तु ।
देध्रीयते रुचिमयं तपसि प्रकामं,
संसार-घोरजलधिं सुखतस्तरीतुम्॥७१॥(युग्मम्)

पन्न्यासपूज्यपदभाग्-गणिनायकस्य,
श्रीसंपदादि-विजयस्य विरक्तशिष्यः ।
जीनो जयन्त-विजयाऽभिध उच्चबोधि-
श्चारित्ररत्नमधिपाल्य दिवं गतोऽस्ति ॥ ७२ ॥

मालिनी

चरणविजयनामा गौरवाऽङ्घ्र्यब्जसेवा-
निरवधि-परिलीनः सद्विनेयो द्वितीयः ।
श्रमयति बहु शास्त्रे वाङ्मयादौ सुबुद्धिः,
प्रथयति यश उच्चैरुज्वलं सर्वमह्याम् ॥ ७३ ॥

चरणविजयनाम्नो ज्ञान शीलैकधाम्नो,
मुनिवरविदितस्य (?) शिष्यवर्योऽस्ति शिष्टः ।
सुकृतिपर सुनीतिर्न्याययुग् न्यायनामा,
जिनपतिगदित-श्रीशासनस्याऽनुसर्ता ॥ ७४ ॥

उपजातिः

सद्धीर-विद्याविजयस्य शिष्यः,
प्रकाशनाम्ना विदितश्च लोके ।

चारित्रशीलः प्रतिभात्यजस्रं,
चाऽधीयमानो निजशास्त्रमस्ति ॥ ७५ ॥

गीतिः

श्रीमदाचार्यगणाऽग्र-गण्यमानविजयनीतिविभोः ।
आज्ञोद्वाहिमुनीनां, नामोल्लेखमिह क्रियते मयका ॥७६॥

वसन्ततिलका

पन्यास रत्नविजयप्रभु-शिष्य-पट्या-
सोपाधिमद्विबुध-मोहन-सन्मुनीन्दोः ।
अन्तेनिवासि-मुनिपुङ्गव-शान्तिनामा,
पन्यासभाक् स्व-परशास्त्रविचारदक्षः ॥ ७७ ॥

इन्द्रवज्रा

सद्राजपूर्वे नगरे डहेल
क्षूपाश्रये ख्यात-महाऽऽसिकायाम् ।
पन्यासभाग् रत्नविजिन्महारा-
जस्याऽर्कशिष्येष्वधुनैतयोर्हि ॥ ७८ ॥

वसन्ततिलका

पन्यास-भावविजयस्य महीयसश्च,
पन्यासभाग्विजय-मोहन-सन्मुनीन्दोः ।

१ ' गादी ' इति भाषायाम् ।

अद्याऽवधि-प्रथित-शिष्यपरम्पराऽत्र,
पोपूज्यते सकलजैन-जनैश्च भक्त्या ॥ ७९ ॥
( युग्मम् )

उपजातिः

तयोश्च पन्यासपदाऽङ्कितस्य,
श्रीभावनाम्नः परिवार-संख्याम् ।
प्रदर्श्य पन्यास-पदाऽञ्चितस्य,
प्रदर्श्यते सा प्रभु-मोहनस्य ॥ ८० ॥

पन्न्यासिनः ख्यातविदां वरस्य,
श्रीमद्विजिन्मोहन-नामधर्तुः ।
शिष्यावभूतां मुनिधर्म-शान्ती,
पन्न्यासभाजावुभकौ गरिष्ठौ ॥ ८१ ॥

पन्न्यास-शान्तिर्विजयो मुनीशः,
शान्तिप्रधानश्चरिकर्ति शान्तिम् ।
पर्यट्य लोकानुपदिश्य धर्मं,
तंतन्यते शासन-मुन्नतिं सः ॥ ८२ ॥

वाणा-ऽक्षिवर्षैरसकौ चरित्र-
नेतुः किलैतस्य निदेशवर्ती ।
नाना प्रदेशेषु विजर्हरीति,
प्रबोधयत्येष जनांश्च भव्यान् ॥ ८३ ॥

अमुष्य सच्छिष्य-नरेन्द्रनामा,
चर्कर्ति रम्यां कवितां प्रशस्याम् ।

सुभद्रनामाऽपर-शिष्यकस्तु,
सौशील्यवान् गौरव-भक्तिदक्षः ॥ ८४ ॥

स्रग्धरा

रम्यं पन्न्यासवर्य-क्षितितलविदित-श्रीमतो भावनाम्नः,
संसाराऽब्धि-प्रपोतायित-निजजनता-बोधिबीज-प्रदातुः ।
विश्वोद्गीत-प्रभूताऽमृतकिरणनिभ-प्रोल्लसत्कीर्तिकस्य,
शिष्याऽऽद्याख्यानमेतज्जनयतु सततं सज्जनाऽन्तःप्रमोदम् ॥८५॥

उपजातिः

चरित्रनेतुर्गुरुवर्यकश्री-
पन्न्यास-भावाऽऽख्य-महामहिम्नाम् ।
शिष्योपशिष्यादिकवर्णनं हि,
यथाश्रुतं धीरधियामकारि ॥ ८६ ॥

विशुद्ध-चारित्रभवन्त एते,
तदीयकाः कर्मठ-साधुवर्गाः ।
सत्कीर्तिमन्तो जगतीं पुनन्तः,
सर्वत्र मह्यामुपदेशयन्ति ॥ ८७ ॥

अमत्सरा विज्ञजना गुणज्ञा,
महीयसां सच्चरितं पवित्रम् ।
आद्यन्तमेतत् परिपठ्य नून-
मादर्शतां स्वात्मनि संनयन्तु ॥ ८८ ॥

महीयसामप्यवनौ भवन्ति,
छद्मस्थितानां बहवश्च दोषाः ।

पश्यन्ति विज्ञा न हि तांस्तदीयान्,
गुणांश्च गृह्णन्ति सहर्षमेषाम् ॥ ८९ ॥

जगज्जनानन्दकृतां समस्त-
जैनागमज्ञानवतां महत्ताम् ।
उपेयुषामार्हत-शासनेऽस्मि-
न्नादर्शपुंसां करुणामयानाम् ॥ ९० ॥

सच्छासनं भासयतामजस्रं,
प्राचीन-तीर्थोद्धृतिकारकाणाम् ।
आजन्मसंपालित-ब्र(?)ह्मचर्य-
प्रस्थान-पञ्चादिसुकारिणां च ॥ ९१ ॥

आचार्यचूडामणि-तर्क-वह्नि-
गुणालयानां विबुधोत्तमानाम् ।
प्रख्यातिमच्छ्रीविजयादिनीति-
सूरीश्वराणां चरितं पवित्रम् ॥९२॥(त्रिभिर्विशेषकम्)

सीमन्तिनी सद्गुणिना सुभर्त्रा,
कुलं गुणाढ्येन सुनन्दनेन ।
मित्रेण यस्त्रः शशिना च रात्रिः,
शीलेन नारी वरविद्यया ना ॥ ९३ ॥

यथा तथा शासनमार्हतं हि,
शोशुभ्यतेऽनेन महत्तमेन ।
संसारकान्तार-जरादिदावा-
ऽनलाम्बुवाहेन चरित्रनेत्रा ॥ ९४ ॥ (युग्मम्)

एतर्हि काव्ये चरिताऽधिनेतु-
रवर्णयज्जीवन-सच्चरित्रम् ।
चन्द्रा-ऽङ्क-नन्दे[१९९१]-क्षितिसम्मिताऽब्द-
पर्यन्तभूतं सकलं सुपद्यैः ॥ ९५ ॥

पक्षा-ऽङ्क[१९०२] रन्ध्रेन्दुमिते सुवर्षे,
माघे च कृष्णे नवमी-शनौ हि ।
सत्पादलिप्ते नगरे किलैतत्,
समापयच्छ्रीव्रजनाथशर्मा ॥९६॥ (युग्मम्)

वसन्ततिलका

पट्टावली वरतरा मुनिवर्णनाढ्या,
पन्न्यास-भावविजयस्य गणीश्वरस्य ।
चारित्रयुक्-श्रमणसंघविराजिताऽसौ,
याऽऽसीच्च पूर्वकवि-सत्कृतितोऽवशिष्टा ॥ ९७ ॥

पञ्च-ग्रह[१९९५]-ग्रह-सितांशुमिताऽङ्कवर्षे,
शत्रुञ्जयाद्रि-शुभतीर्थवरेण पूते ।
सत्पादलिप्तनगरे परिपूर्णितेयं,
सद्धर्मसेवनविदा शिवशङ्करेण ॥९८॥ (युग्मम्)

पूज्यपाद-पन्न्यास-श्रीमद्
भावविजयगणिवर्यस्य
पट्टपरम्परा समाप्ता ।

रैवताचलादितीर्थोद्धारक-शासनप्रभावक-
आचार्य श्री विजयनीतिसूरीश्वरचरित्रं,
चातुर्मास्याख्यानं, पट्टपरम्परा च
समाप्ता ॥

# उत्तरार्द्धम् ।



वसन्ततिलकावृत्तम्

श्रीविक्रमार्कनृपतेः समयादतीते,
बाण–ग्रह–ग्रह–धराङ्कमिते सुवर्षे ।
सूरीश्वरा विजयनीतिशुभाभिधानाः,
सुवेष्टिता निजसुविस्तृतशिष्यवर्गैः ॥ १ ॥

श्रीमत्सुराजनगरे नगरातिरम्ये,
उच्चैस्तमप्रभुजिनेश्वरवासहर्म्ये ।
श्रीलोहकारवसतौ जिनभक्तिभाजि,
वर्षर्तुवासमतिगौरवतो ह्यकार्षुः ॥ २ ॥ (युग्मम्)

उपजातिः

अङ्गा–ऽङ्क–नन्दैकमिते तथैव,
संवत्सरेऽसौ वरविक्रमीये ।
मासोत्तमे कार्तिकनाममासे,
शुक्लाख्यपक्षे शुभपूर्णिमायाम् ॥ ३ ॥

श्रीयुक्तशान्तिप्रदशान्तिनाथ–
वीथ्यां समृद्धेश्वरधामधाम्नि ।

वर्षर्तुपूर्तिसमयस्य पश्चात्,
स्थानान्तरावासविधित्सयाऽस्मृ ॥ ४ ॥

द्रुतविलम्बितम्

वखतचन्द्रशुभाभिधधारिणः,
प्रचुरवित्तपतेस्तनुजन्मनः ।
मनसुखादिमरामरमापते-
र्गृहमगाद् वरसूरिपतिर्मुदा ॥५॥ (त्रिभिर्विशेषकम्।)

उपजातिः

अथाऽन्यदा स्थानकवासिजैना-
नां संप्रदायस्थमुनीश्वरस्य ।
श्रीमज्जवाहीरपदादिलाला-
ऽभिधानधर्तुः समुदायकस्थम् ॥ ६ ॥

उद्बोध्य बोधैर्मुनिपञ्चकं ते,
आचार्यवर्या हितकर्तृधुर्याः ।
श्रीवीतरागप्रतिमासुरागा-
ऽन्वितं ह्यकुर्वन् सुकृतैकसूर्याः ॥७॥(युग्मम्।)

षडङ्क-नं-दैकमिते सुवर्षे,
सन्माघमासस्य सिते दले वै ।
तिथौ दशम्यां नरवासरेऽथ,
सद्योगलग्नादिकसन्मुहूर्ते ॥ ८ ॥

मुनीश्वरं श्रीसरदारमल्लं,
स्वकर्मशत्रुस्खलनेऽतिमल्लम् ।
प्रवर्तकोपाधिधरं तथाऽन्यं,
पन्नादिलालं सुचरित्रमालम् ॥ ९ ॥

श्रीदेविलालं च गुणैः सुशीलं,
अम्बादिलालं तु तपोविशालम् ।
तथा मुनिमर्जुनलालनाम्ना,
चित्तं जिनेशप्रतिमैकचित्तम् ॥ १० ॥

विचिन्त्य चैतद् मुनिपञ्चकं वै,
श्रीमूर्तिपूजामतरक्तचित्तम् ।
श्रीमद्-हठीभाइसुनामकस्य,
सद्वृक्षसंशोभितवाटिकायाम् ॥ ११ ॥

श्रीसूरिसूर्या जिनधर्मधुर्या,
महोत्सवैः सार्धमनेकसंख्यैः ।
संवेगिनाम्नीं मुनिमान्यदीक्षां,
श्रीसंघसाक्ष्यं व्यतरंस्तदानीम् ॥ १२ ॥

( पञ्चभिः कुलकम् । )

आर्या

सोमविजय इतिनाम्ना,
प्रथमं चाऽन्यं प्रमोदविजय इति ।

दीपविजय इति तृतीयं,
अशोकविजय इति चतुर्थं च ॥ १३ ॥
उमेदविजयेतिनाम्ना,
पञ्चमकं व्यभूषयंश्च सूरिवराः ।
संवेगिदीक्षापूर्तौ,
अदुर्मुनिभ्यो हितकरमुपदेशम् ॥१४॥ (युग्मम् ।)

गीतिः

तत्रैव राजनगरे, फाल्गुनशुक्ले प्रतिपदि शुभवारे ।
मुनिपञ्चकाय बृहतीं, दीक्षामददुर्लोहकृतां वासे ॥ १५ ॥
तस्मिन् समये तत्र, सुमङ्गलाश्रीतिनामभृत्साध्व्यै ।
महिमाश्रीशिष्यायै, बृहतीं दीक्षामदुस्तथाचार्याः ॥ १६ ॥
मधुपुरीपुरीवासि-श्रीमज्जयन्तीलालनामभृते ।
दीक्षां दत्वा विधिना, जयानन्दविजयेति तन्नाम कृतम् ॥१७॥

उपजातिः

महोत्सवोऽयं महता व्ययेन,
महामहाडम्बरहर्षपूर्वम् ।
व्यधाद् धनी राधनपूर्निवासी,
श्रीलक्ष्मिचन्द्राभिध इभ्यवर्यः ॥ १८ ॥
सुमङ्गलाश्रीशुभनामिकायाः,
साध्व्याः स संसारिपिता वरेण्यः ।

श्रीप्रेमचन्द्रात्मिज उच्चभावः,
सुश्रावकाग्रेसर ईड्यकीर्तिः ॥१९॥ (युग्मम्)

आचार्यवर्या विजयेतिपूर्वाः,
श्रीनीतिसूरीश्वरसाधुसूर्याः ।
अहम्मदावादपुरात् स्वकीयं,
व्यधुर्विहारं सह वर्यशिष्यैः ॥ २० ॥

गीतिः

श्रीमत्फाल्गुनमासे, कृष्णे पक्षे तिथौ च पञ्चम्याम् ।
शुभवारे सुमुहूर्ते, विहृत्य तस्मात् सूरिः सह शिष्यैः ॥ २१ ॥

शाखानगरहरिपुरे, श्रेष्ठिश्रीमगुभाईतनुजस्य ।
जमनाभाईतिनाम्नः, श्रेष्ठिश्रेष्ठस्य तुङ्गप्रासादम् ॥ २२ ॥

तथा च शाहीबागे, ठाकरशीनामश्रेष्ठितनुजस्य ।
श्रीमगनलालनाम्नो, धनिनो रम्यं च शर्मदं हर्म्यम् ॥२३॥

निजचरणाब्जरजोभिः, पवित्रयित्वा मुनीश्वरैः सार्धम् ।
वरवरघोटकसहिताः,साबरमत्याख्यशाखापुरमगमत् ॥२४॥

( चतुर्भिः कलापकम् । )

उपजातिः

समृद्धिमन्मोहमयीपुरीतः,
श्रीलालबागाख्यनिवासवित्ताः ।

श्रीमन्नवादिपदराधकाव्य-
समाजसंचालकसभ्यमुख्याः ॥ २५ ॥

आर्या

ग्रामे पानसराभिध-पवित्रतीर्थे श्रीचैत्रमासस्य ।
ओलिकामहे समेतुं, सूरिमामन्त्रयन्त तत्रेत्य ॥२६॥ (युग्मम्)

उपजातिः

अत्याग्रहेणाद्दतवन्त एषां,
तां प्रार्थनां सूरिवरास्तदानीम् ।
विहृत्य तस्मात् परिवारयुक्ता,
भव्यप्रबोधाय निबद्धचित्ताः ॥ २७ ॥

ग्रामोत्तमं खोरजनामरम्यं,
कल्लोलनाम्ना च पुरं प्रसिद्धम् ।
अन्यांश्च मार्गस्थितखेटकान् वै,
ग्रामानलंकृत्य तथा पुराणि ॥ २८ ॥

इत्थं विहारे भविकात्मबोधं,
कुर्वन् स बेण्डादिकवाद्यपूर्वम् ।
सूरीश्वरोऽगाद् बहुमानपूर्वं,
शिष्यैः समं पानसराख्यतीर्थम् ॥२९॥ (युग्मम्)

ओलीमहं तत्र विधानपूर्वं,
महामहाडम्बरभावयुक्ताम् ।

व्यधापयत् सूरिपतिस्तदानीं,
निर्वाणदीपं सुकृतैकबीजम् ॥ ३० ॥

मालिनी

वडनगरपुरस्था भोजकज्ञातिमुख्या,
अकृपत निजद्रव्यैर्वीतरागस्य चैत्यम् ।
गुरुवरसविधे ते तत्प्रतिष्ठां विधातुं,
जिनवरमतरक्ता आगमंस्तत्र तीर्थे ॥ ३१ ॥

वडनगरवराख्यं नागराणां निवासं,
निखिलनगररम्यं धर्म्यमत्युच्चहर्म्यम् ।
निजचरणरजोभिस्तत् पवित्रं भवन्तो,
विदधतु गुरुमित्थं प्रार्थयन्ताऽतिभक्त्या ॥ ३२ ॥

उपजातिः

अस्मत्पुरे श्रीगुरवो भवन्तो,
मुदा समागत्य सशिष्यवर्याः ।
कुर्वन्तु चैत्यस्य वरप्रतिष्ठां,
जिनेन्द्रधर्माभ्युदयैषिधुर्याः ॥ ३३ ॥ (युग्मम् ।)

पुष्पिताग्रा

इति मुदितमना निशम्य नम्रां,
वडनगराख्यपुराधिवासियाच्ञाम् ।
निजमुनिजनतावृतः स सूरि-
र्वरनगरं प्रति तद् व्यधाद् विहारम् ॥ ३४ ॥

उपजातिः

सागागतान् भव्यजनान् सुबोधै-
र्विबोधयन् सूरिवरो व्रतीन्द्रः ।
क्रमादसौ डाङ्गरवा-कियोल-
नामादिकान् ग्रामवरांश्च गत्वा ॥ ३५ ॥

शिखरिणी

महेसाणानाम्नि श्रितजिनपचैत्ये पुरवरे,
समृद्धया संपूर्णे विविधवरखोटेन सहितः ।
श्रुतज्ञः सन्मान्यः शुभकृतिवदान्यो यमिपतिः,
प्रवेशं सद्वेशैः सह पुरजनैः सूरिरकरोत् ॥३६॥ (युग्मम् ।)

वसन्ततिलका

सूरिर्विहृत्य निजशिष्यगणैः सहाऽस्याः,
पुर्याश्च वीसनगराख्यपुरेऽतिरम्ये ।
वेण्डाद्यवाद्यसमलङ्कृतसज्जनौघैः,
सार्धं प्रवेशमकरोदतिमानपूर्वम् ॥ ३७ ॥

मालिनी

तदनु विजयपूर्वो नीतिसूरीश्वरोऽस्माद्,
अकृत वरमुनीन्द्रैः संवृतोऽसौ विहारम् ।
वडनगरमथाऽगात् तत्र तस्य प्रवेशं,
सकलपुरजनौघोऽकारयद् वाद्ययुक्तम् ॥ ३८ ॥

उपजातिः

पुरे हि तस्मिन् जनताऽभिरामे,
पुरप्रवेशोत्तमवासरे च ।
श्रीमज्जयानन्दमुनीतिनाम्ने,
दीक्षामदात् श्रीबृहतीं मुनीन्द्रः ॥ ३९ ॥

तत्रैव वर्षे नगरे च तस्मिन्,
वैशाखमासस्य सुशुक्लपक्षे,
सूरिस्तृतीयाख्यतिथौ मुदाऽर्ह--
चैत्यप्रतिष्ठां व्यदधाद् विधिज्ञः ॥ ४० ॥

अत्रागमन्नागमवेदिसूरेः,
संप्रार्थनार्थं स्वपुरागमार्थम् ।
सीपोरनाम्नो जिनधर्मधाम्नः,
पुरस्य चित्ता वरसंघश्रेष्ठाः ॥ ४१ ॥

तेऽभ्यर्थनां सूरिपतेः समीपे,
पुरं पवित्रं च विधातुकामाः ।
अकार्षुरत्यन्तसमादरेण,
सूरीश्वराः स्वीकृतवन्त एनाम् ॥ ४२ ॥

गुरूत्तमानां गुरुमागमं ते,
श्रुत्वा सहर्षं नगरस्य लोकाः ।
श्रीजैन--जैनेतरभावभेदं,
त्यक्त्वा व्यधुः सोत्सवपूःप्रवेशम् ॥ ४३ ॥

शार्दूलविक्रीडितम्

श्रीसीपोरपुराद् विहृत्य सनयः श्रीनीतिसूरीश्वर-
स्तारङ्गाभिधतीर्थमुत्तममगात् शिष्यैः प्रशिष्यैः समम् ।
मार्गे मार्गगतांश्च नागरजनान् ग्राम्यान् समुद्बोधयन्,
कुर्वाणो नयनोत्सवं भविनृणां, तीर्थैकतल्लीनहृत् ॥ ४४ ॥

द्रुतविलम्बितम्

अजितनाथजिनेशपरात्मनो,
भगवतः प्रतिमामतिसुन्दराम् ।
मुनिपतिः समवेक्ष्य तदा मुदा,
अनुपमां मुदमन्वभवद् हृदा ॥ ४५ ॥

उपजातिः

तत्रैव तीर्थे शिवगंजनाम्नः,
पुरस्य सुश्रावकपंचमुख्याः ।
श्रीमत्फतेलालधनीश्वराद्या-
स्तदाऽऽगमन् सूरिवरस्य पार्श्वे ॥ ४६ ॥

धर्म्यं हि वर्षर्तुनिवासकार्यं,
कुर्वन्तु पूज्याः शिवगंजनाम्नि ।
पुरे समागत्य समादरेण,
विज्ञापनामित्थमकार्षुरेते ॥ ४७ ॥

दृष्ट्वा हि तेषामतिभक्तिभावं,
संप्रार्थनामादृतिपूर्विकां च ।
सूरीश्वरोऽङ्गीकृतवांस्तदैतां,
पुरं प्रयातुं शिवगंजनाम ॥ ४८ ॥

સ્રગ્ધરા

तारङ्गानामतीर्थाद् विजयपदयुतो नीतिसूरीश्वरोऽसौ,
स्वीयैः शिष्यैः प्रशिष्यैः सह जनहितकृत् संविहारं विधाय।
तीर्थे कुंभारियाख्ये जिनभवनयुते श्रीखरेडयाख्यपुर्याम्,
आबूनामोच्चतीर्थे सकलजनमते रोहिडाह्वे पुरे च ॥ ४९ ॥

ઉપજાતિઃ

इत्यादिमार्गस्थिततीर्थसंघे,
ग्रामौघमध्ये नगरेषु चैवम् ।
कृत्वा विहारं वरपींडवाडा-
पुरं समागाद् व्रतिनामधीशः ॥५०॥ (युग्मम् ।)

तत्रत्यसंघोऽपि महाग्रहेण,
वर्षर्तुवासार्थमजिज्ञपच्च ।
सूरीश्वरं तं परिवारजुष्टं,
हर्षौ समानीय सुमानपूर्वम् ॥ ५१ ॥

परन्तु पूर्वं शिवगंजपुर्याः,
संघस्य वर्षर्तुनिवासहेतोः ।

अभ्यर्थनैवाऽनुमतेति हेतोः,
सूरीश्वरस्तं खलु नाऽन्वमंस्त ॥ ५२ ॥

विहृत्य तस्माद् गुरवस्तदानीं,
नाणाख्य वेडाभिधरम्यरूपौ ।
तथाऽपरान् श्रीवडगाममुख्यान्,
ग्रामाँस्तथा खेटक खर्बटादीन् ॥ ५३ ॥

सूरिः स्वपादाऽब्जरजस्समूहैः,
पवित्रयन्नत्रनृणां शिरांसि ।
सिञ्चँश्च बोधाऽमृतधारया तान्,
पुरं समागात् शिवगंजनाम ॥ ५४ ॥ (युग्मम् ।)

ज्येष्ठस्य कृष्णाष्टमीसत्तिथौ ते,
तत्रत्यसुश्रावकसंघमुख्याः ।
पुरप्रवेशं वरघोटकेन,
सूरीश्वराणां समचीकरन्त ॥ ५५ ॥

अङ्का-ऽङ्क-नन्दैकमिते सुवर्षे,
वर्षर्तुवासं जनबोधनार्थम् ।
पुरे हि तस्मिन् शिवगंजनाम्नि,
श्रीसूरिसूर्या व्यधुरुच्चधैर्याः ॥ ५६ ॥

धीमानुपाध्यायपदाऽभिधर्ता,
सदैव जीवेषु दयाप्रकर्ता ।

श्रीमद्दयाबुधविजयेतिनामा,
सिद्धान्तवेत्ता गुणरत्नधाम ॥ ५७ ॥

वसन्ततिलका

पन्न्यासदानविजयाख्यगणीन्द्रमान्यः,
सद्बोधिदानकरणे सुतरां वदान्यः ।
पन्न्यासमुक्तिविजयश्च गणी मुनीशो,
मुक्त्यै सदोद्यततमः सुतपोऽभिरक्तः ॥ ५८ ॥

शार्दूलविक्रीडितम्

श्रीसंपद्विजयाऽभिधो गणिवरश्चारित्रसंपद्वृतो,
नाम्ना श्रीमुनिकेसरादिविजयः सम्यक्त्वरत्नान्वितः ।
श्रद्धासुन्दरसुन्दरादिविजयो गुप्तित्रयीसुन्दरो,
नित्यं सद्गुरुपादसेवनपरो विद्याऽर्जने तत्परः ॥ ५९ ॥

मालिनी

भुवनविजयनामा शुद्धसम्यक्त्वधाम,
भविकजनहितार्थे देशनां दातुकामः ।
मुनय इति सुशीलाः संख्ययाऽऽसन्[1]विंशा,
मुनिपविजयनीतिसूरिपार्श्वे तदाऽऽसन् ॥ ६० ॥

( चतुर्भिः कलापकम् । )

१ एकोनविंशतिः ।

उपजातिः

अस्मिंश्चतुर्मासनिवासकाले, सूरीश्वरोदारसमाश्रये च ।
द्वाविंशतिरुत्तमदर्शनाढ्याः, साधूत्तमाः साध्वीवराश्च पुण्याः ६१

चारित्रयुक्ता जिनधर्मचित्ता, ज्ञानैर्वरिष्ठा विनयैकनिष्ठाः ।
व्यधुर्हि योगोद्वहनं हितं ते, श्रीसूरिपार्श्वे सुविधानपूर्वम् ॥६२॥
( युग्मम् । )

आर्या

कतिचित्तत्र मुनीन्द्रा, योगोद्वहनं व्यधुः सूरिपार्श्वे ।
उत्तराध्ययननाम्नः, सूत्रस्य सुन्दराध्ययनस्य ॥ ६३ ॥

शालिनी

केचिद् योगं चाऽवहन् साधुधुर्या,
आचाराङ्गाख्यस्य सूत्रस्य धर्म्यम् ।
अन्ये केचित् कल्पसूत्रस्य योगं,
तत्र श्रीमत्कल्पवृक्षप्रभावम् ॥ ६४ ॥

उपजातिः

महानिशीथाख्यमहत्तमस्य,
सूत्रस्य योगं व्यदधुश्च केऽपि ।
तथाऽपरे सूत्रकृताङ्गयोगं,
साधूत्तमाः साधितवन्त ईड्यम् ॥ ६५ ॥
आचार्यवर्यः श्रुतपारदृश्वा,
अवाचयद् ज्ञातयथार्थतत्त्वः ।

व्याख्यानकाले स्वयमेव ज्ञाता-
सूत्रं तथा विक्रमराट्चरित्रम् ॥ ६६ ॥
सूरीश्वराणां वरदेशनायाः,
पीयूषमव्या जनमोक्षदाव्याः ।
जैनाश्च जैनेतरभव्यवर्गा,
अलभ्यलाभं हि तदाऽलभन्त ॥ ६७ ॥
अदुश्च मासावधि सूरिराजा,
व्याख्यानमुच्चैः प्रतिबन्धशून्यम् ।
सर्वैः सुबोध्यं सरलस्वरूप-
मुदाहृतिग्रन्थतमं वरेण्यम् ॥ ६८ ॥
तत्रैव काले समभूत् शरीरे,
श्रीनीतिसूरेर्यकृतो[1] हि रोगः ।
तदुग्ररोगस्य रुजाऽर्दितोऽसौ,
व्याख्यानकृत्यै न्यदिशत् स्वशिष्यम् ॥ ६९ ॥
विद्वान् स पन्न्यासवरोऽतिधीमान्,
संपत्पदाढ्यो विजयो गणीन्द्रः ।
गुरोरनुज्ञामधिगम्य नम्रो,
व्याख्यानमारब्ध गुरूचितकल्पम् ॥ ७० ॥
सूरीश्वराणां यकृदुग्रहपीडां,
तदा हि दृष्ट्वा परिवर्धमानाम् ।

१ आधुनिकभाषायां 'लीवर' इति प्रसिद्धस्य ।

शोकाकुला भावुकसंघमुख्याः
कर्तुं चिकित्सामभिलाषभाजः ॥ ७१ ॥

राज्यप्रसिद्धौषधमन्दिरस्य,
अर्वाक्चिकित्सानिपुणं प्रसिद्धम् ।
धांचीत्युह्नं भिषजां वरिष्ठं,
समाह्वयन् डॉक्टर¹कार्यदक्षम् ॥ ७२ ॥(युग्मम् ।)

स वैद्यराजो विविधैः प्रकारै-
र्न्यरूपयत् सूरिशरीरमुच्चैः ।
व्याधेर्निदानं च विधाय सम्यग्,
निःस्वार्थभावेन सुभक्तियुक्तः ॥ ७३ ॥

प्रारब्ध सुष्ठ्वौषधदानकार्यं,
मूल्यं विना सेवकभावनातः ।
आवश्यके कार्यसमागते तु,
शीघ्रं समागाद् भिषजां प्रधानः ॥७४॥ (युग्मम्)

आचार्यवर्यस्य शरीरपीडां,
रोगप्रवृद्धिं च तदा विदित्वा ।
अहम्मदावादनिवासिवर्यः,
श्रीमच्चुनीलालतनूजमुख्यः ॥ ७५ ॥

१ पाश्चात्यपद्धत्या वैद्यविद्यानिपुणस्य भिषग्वरस्य 'डॉक्टर' इत्याधुनिकभाषायां संज्ञा ।

श्रेष्ठीश्वरोऽसौ भगुभाइनामा,
श्रीसूतरीयाख्यकुलावतंसः ।
सुडॉक्टरं तन्नगरप्रसिद्धं,
पुरोगमादाय हि तूर्णमागात् ॥७६॥ (युग्मम्)

अहम्मदावादभिषक्प्रवेको,
वैद्यश्च वित्तः शिवगंजवासी ।
न्यरूपयेतां तदुभौ मिलित्वा,
सूक्ष्मैः प्रकारैर्गुरुरोगमूलम् ॥ ७७ ॥

सूरीन्द्ररोगस्य निदानकाले,
केनौषधेनाऽस्य रुजापहारः ।
जायेत तस्मिन् विषये समाने,
मते अभूतामुभयोस्तदानीम् ॥ ७८ ॥

निर्णीतरीत्या स च धान्युपाह्वः,
सुडॉक्टरो वैद्यकृतौ प्रवीणः ।
सोत्साहचित्तो बहु सावधान,
इंजैक्शनान्यौषधिभिः सहाऽदात् ॥ ७९ ॥

१ उत्तमम् । २ प्रवेकः—प्रकृष्टः । ३ यदौषधं शुपिरसूच्यां क्षिप्त्वा तयैव सूच्या त्वग्द्वारा शरीरे प्रवेश्यते, तस्याऽर्वाचीनभाषायाम् 'इंजक्शन' इति संज्ञा ।

तड्डॉक्टरस्योचितमौषधिभिः,
कृतोपचारैश्च बहुप्रकारैः ।
आचार्यवर्यस्य स उग्ररोगो,
न्यूनोऽभवत् प्राक्समयाच्च किञ्चित् ॥ ८० ॥

यो वांकलीग्रामनिवासवित्तो,
जवानमल्लाह्वधनीशपौत्रः ।
हजारिमल्लस्य तु पुत्रमुख्यः,
श्रीचन्दुलालाऽभिध उच्चकीर्तिः ॥ ८१ ॥

श्रीवांकलीग्रामवरे हि तस्य,
प्रभाविणः सूरिपतेः समीपे ।
वरं तपः कारयितुं प्रसिद्धं,
जाता शुभेच्छा उपधाननाम ॥ ८२ ॥

ततः समादाय निजं वयस्यं,
श्रीमत्फतेलालसुनामवित्तम् ।
श्रेष्ठीश्वरः स शिवगंजनाम,
पुरं समागाद् गुरुसूरिपार्श्वे ॥ ८३ ॥

न्यवेदयत् तत्र निजाभिलाष-
माचार्यवर्याय सुनम्रभावम् ।
संप्रार्थितः सूरिवरश्च तेन,
ग्रामं समेतुं शुभवांकलीं हि ॥ ८४ ॥

तथोपधानाह्वतपोमुहूर्तं,
कदा समागच्छति दोषहीनम् ।
अपृच्छदित्थं धनिचन्दुलालः,
सूरीशभक्तो जिनधर्मरक्तः ॥ ८५ ॥

अगाधविज्ञानसमूहशक्त्या,
ज्योतिःश्रुतज्ञानविशालबुद्ध्या ।
अदुर्मुनीन्द्रा उपधानकार्ये,
मुहूर्तमेतद् शुभयोगयुक्तम् ॥ ८६ ॥

वंशस्थः

सह[1]स्यमासस्य सितेतरे दले, तिथौ दशम्यां शुभवासरे वरे ।
दत्तं मुनीन्द्रैः प्रथमं मुहूर्तकं, सुयोगयुक्तं शुभलग्नसंवृतम्॥८७॥

उपजातिः

तस्यैव मासस्य च कृष्णपक्षे, चतुर्दशीश्रेष्ठतिथौ सुवारे ।
अदुर्मुनीन्द्रा द्वितीयं मुहूर्तं,ज्योतिर्विदो भव्यहितैषिणस्ते॥८८॥

संप्रार्थयेतां च धनीश्वरौ तौ, श्रीमत्फतेलाल-सुचन्दुलालौ ।
वयं न विज्ञा उपधानरीत्या-मतः समेयुस्त्वरया भवन्तः ॥८९॥

तां प्रार्थनामाग्रह-भावपूतां, बुद्ध्वोपधानस्य विधानकृत्यै ।
श्रीमार्गशीर्षस्य सिते हि पक्षे, सूरिर्व्यहार्षीत् शिवगंजपुर्याः॥९०॥

१ पौषमासस्य ।

वसन्ततिलका

सप्त-ग्रह-ग्रह-विधुप्रमिते सुवर्षे,
श्रीमार्गशीर्षशुभमाससिते च पक्षे ।
सूरीश्वराः स्वपरिवारयुताः समागुः,
श्रीवांकलीनिवसथे हि तिथौ दशम्याम् ॥९१॥

उपजातिः

श्रीवांकलीग्रामनिवासिनोऽपि,
मुदा महाडम्बरवाद्यपूर्वम् ।
सूरीश्वराऽऽतिथ्यविधानकार्यं,
पुरप्रवेशे समकार्षुरुच्चैः ॥ ९२ ॥

काले च तस्मिन् विजयादिभाज,
आचार्यवर्योत्तमनीतिसूरेः ।
शिष्यावतंसः समशास्त्रवेत्ता,
ज्ञानादिरत्नत्रयभूषितात्मा ॥ ९३ ॥

आचार्यश्रेष्ठो विजयादिहर्ष-
सूरीश्वरः सत्परिवारयुक्तः ।
समागमद् राधनपूर्वपुर्याः,
श्रीवांकलीस्थस्वगुरोः समीपे ॥९४॥ (युग्मम् ।)

१ ग्रामे ।

तदोपधानस्य विधेर्निमित्तं,
शीघ्रं समारब्ध सुभावुकौघः ।
प्रभूतसंभारमुपस्कराणां,
संमेलनायाऽतिसमुद्यतोऽभूत् ॥ ९५ ॥

श्रीवांकलीग्रामनिवासिसंघो,
ग्रामेषु खेटेषु पुरोत्तमेषु ।
संघोपरिष्टाद् बहुमानपूर्वं,
प्रैषीत् शुभाः कुङ्कुमपत्रिकाश्च ॥ ९६ ॥

श्रीपौषमासस्य सुकृष्णपक्षे,
तिथौ दशम्यां प्रथमं मुहूर्तम् ।
तस्यैव मासस्य च तत्र पक्षे,
चतुर्दशीनामतिथौ द्वितीयम् ॥ ९७ ॥

इमे मुहूर्ते शुभयोगयुक्ते,
वरोपधानाख्यतपःप्रवेशे ।
दत्ते यमीन्द्रेण च पूर्वकाले,
शुभे मुहूर्ते हि कृतं फलाय ॥ ९८ ॥

तस्मिन् मुहूर्तद्वितये तदानीं,
सुश्रावकाः सत्तपसे सुभावाः ।
श्राद्ध्यश्च संख्यामितषट्शतानि,
शुभोपधानाह्वविधौ प्रविष्टाः ॥ ९९ ॥

व्यधापयत् सूरिवरो विधिज्ञ-
स्तदोपधानाख्यतपःक्रियायाम् ।
प्रवेशकार्यं स्वयमेव दक्षः,
सदोद्यता धर्मविधौ मुनीन्द्राः ॥ १०० ॥

जातोपधाने तपसि प्रभूता,
मरौ न संख्या ह्यतो कदापि ।
दृष्ट्वा च तां वांकलिपंचमुख्या,
उत्साहवन्तोऽतिशयेन जाताः ॥ १०१ ॥

तथोपधानाख्यतपस्क्रियाणा-
मुदारभावेन विधापको यः ।
श्रेष्ठीश्वरोऽसावपि भक्तिभावाद्,
अतिप्रभूतार्थव्ययं विधित्सुः ॥ १०२ ॥

तपश्चिकीर्षुप्रचुरात्मभाजो,
मुमुक्षुवर्गस्य विशालसंख्याम् ।
दृष्ट्वाऽतिमोदं मनसि ह्यवापद्,
भाग्येन लभ्येत तपस्विसेवा ॥१०३॥ (युग्मम् ।)

श्रद्धावतो वांकलिवासिनश्च,
श्रीसंघवर्यस्य सुभक्तिभाजः
तपस्विसेवाचरणं तथैव,
उत्साह आसामनुमोदनीयौ ॥ १०४ ॥

तावत् पुनः सूरिवरस्य देहे,
शुभेऽभवत् पूर्ववदुग्ररोगः ।
व्यग्रस्ततः संघवरोऽतिभक्तः,
सूरीशरोगोपशमं समैच्छत् ॥ १०५ ॥

कर्तुं चिकित्सां वरवैद्यराजात्,
पुरे प्रसिद्धं शिवगंजनाम्नि ।
धांचीत्युपाह्वं वरडॉक्टरं तम्,
आनाययद् रोगनिदानदक्षम् ॥ १०६ ॥

शनैः शनैस्तस्य भिषग्वरस्य,
महौषधीभिश्च वरोपचारैः ।
आचार्यमुख्यस्य सुनीतिसूरे-
रल्पार्तियुक्तं समभूत् शरीरम् ॥ १०७ ॥

महोपधानाख्यतपःस्थितानां,
सन्मालिकारोपणसन्मुहूर्तम् ।
श्रीफाल्गुनस्योत्तमशुक्लपक्षे,
त्रयोदशीपुण्यतिथौ समागात् ॥ १०८ ॥

सुनिश्चिते जाततमे मुहूर्ते,
उपाश्रयस्याऽतिशुभे विशाले ।
रम्ये चतुष्के बहुचित्रयुक्ते,
ध्वजा-पताकासमलंकृते च ॥ १०९ ॥

शत्रुंजयाद्रेर्भवतारकस्य,
मोक्षैकहेतोश्च सुरैवताद्रेः ।
कृता हि रम्या रचना वरेण्या,
मध्यात्मनां भावविवर्धिका सा॥११०॥(युग्मम्)

जिनेश्वराणां प्रतिमोत्तमानां, शुभाऽङ्गभूषा बहुमूल्ययुक्ताः ।
सुभावनावृद्धिकरीर्वरिष्ठा, व्यधापयन् वै हृदयङ्गमाश्च ॥१११॥

वंशस्थः

रम्याः स्वर-ग्राम-सुमूर्च्छनाऽन्विताः,
श्रुतिप्रिया रागयुता नवा नवाः ।
पूजा अपठ्यन्त दिने दिने महे,
सुगायकैः सुस्वरकण्ठभूषितैः ॥ ११२ ॥

महोत्सवेऽस्मिन् जनताहृदुत्सवे,
श्रीवांकलीग्रामवरेऽतिसुन्दरे ।
जिनेशबिम्बार्चनदर्शनार्थिनां,
तदाऽयुतं संमिलितं सुभावतः ॥ ११३ ॥

उपजातिः

आसन्नसार्धत्रिशतीजनानां,
महैः समं फाल्गुनशुक्लपक्षे ।
त्रयोदशीभद्रतिथावकारि,
मालार्पणं सूरिवरादिहस्तैः ॥ ११४ ॥

१ दश सहस्राणि ।

तपस्विमालार्पणपुण्यकाले,
आयः प्रभूतः समभूद् वसूनाम् ।
अदायि चैतस्य चतुर्थभागो,
जीर्णोद्धृतौ श्रीगिरिनारतीर्थे ॥ ११५ ॥

महोत्सवस्याऽस्य शुभे प्रसङ्गे,
साधर्मिकाणां बहुसंख्यकानाम् ।
सुभोजनाभिर्नवकारशीभि-
रकारि भक्तिस्तत[1]पुण्यदात्री ॥ ११६ ॥

समागतश्रावकवर्ग-वर्ण्य-
सुश्राविकाणां विविधैः प्रकारैः ।
प्रभूतसाहाय्य-सुभोज्यदानै-
र्व्यधायि सेवासुविधिस्तदानीम् ॥ ११७ ॥

श्रीवांकलीग्रामनिवासिसंघ-
खीवाणदीग्रामकसंघयोर्वै ।
कुतोऽपि हेतोः समभूद् विभेदो,
मतप्रभेदः खलु वैरकारणम् ॥ ११८ ॥

मालिनी

विजयिविजयनीतिं सूरिराजं सुनीतिं,
निखिलनिजगुणौघैर्भूषितं सन्नयज्ञम् ।

१ ततस्य—विस्तीर्णस्य पुण्यस्य दात्री ।

जगति जनमनःस्थक्लेशदोषापहारं,
सुधियमनुभवाढ्यं तौ विदित्वा हि संधौ ॥११९॥
सभगुरुभयपक्षस्थाः पूज्यमाचार्यवर्यम्,
उभयकलिविनाशे प्रक्षपातेन हीनम् ।
निजकनिजकपक्षावेदनं भेदहेतुं,
सरलविनयभाजोऽश्रावयन् निर्णयार्थम् ॥१२०॥
( युग्मम् । )

उपजातिः

अस्मद्विवादस्य सुनिर्णयो हि,
मध्यस्थवर्यैः परिदास्यते यः ।
स स्वीकृतोऽस्माभिरिति प्रदत्तं,
पत्रं स्वहस्ताक्षरचिह्नयुक्तम् ॥ १२१ ॥

वंशस्थः

तदा समाकर्ण्य च पक्षयोर्द्वयो-
र्विरोधहेतुं नयिसूरिपुङ्गवः ।
माध्यस्थ्यमाधाय निजे सुचेतने,
निध्यातवान् सूक्ष्मतया धिया ततः ॥ १२२ ॥

उपजातिः

श्रीनीतिसूरिर्मरुराड्जाना-
मसंस्तुतोऽभूत् प्रकृतेश्च रीतेः ।

१ अगमन् । २ असंस्तुतः-अपरिचितः

अतोऽयमेतद्विषयेऽन्यसुज्ञं,
प्रष्टुं समैच्छद् मरुदेशदक्षम् ॥ १२३ ॥

तस्मादसौ वांकलिवासिवर्यं,
हजारिमल्लात्मजचन्दुलालम् ।
आवश्यकैतद्विषयेष्वपृच्छद्,
न्यायं प्रदित्सुर्ह्युभयोः सुमान्यम् ॥ १२४ ॥

ततो यमीन्द्रोत्तमनीतिसूरिः,
श्रीवांकलीग्रामवरात्तदानीम् ।
महोत्सवा-ो विजिहीर्षुरासीत्,
तिष्ठन्ति नो साधुवराश्चिराय ॥ १२५ ॥

वसन्ततिलका

सप्त-ग्रह-ग्रह-हिमांशुमितोत्तमेऽब्दे,
मासोत्तमस्य फलदस्य सुफाल्गुनस्य ।
कृष्णे दले प्रतिपदीड्यतिथौ सुलग्ने,
सूरीश्वरो निजमुनीन्द्रवृतो व्यहार्षीत् ॥ १२६ ॥

उपजातिः

कुर्वन् विहारं परिवारजुष्टः,
श्रीनीतिसूरीश्वरसाधुधुर्यः ।
खीवाणदीग्रामवरे समागात्,
संघश्च तत्स्वागतमातनिष्ट ॥ १२७ ॥

आह्वाय्य तस्मिन् तदुभौ हि पक्षौ,
संमेलनार्थं वरसूरिराजः ।
शमोपदेशं समदात् सुशैल्या,
यत् साधवो वैरविनाशशीलाः ॥ १२८ ॥

कृते च तन्निर्णयपत्रमुख्ये,
आदाय हस्ताक्षरकाणि तेषाम् ।
सुनिश्चितं निर्णयमात्मदत्त-
मश्रावयद् गम्भीरया सुवाचा ॥ १२९ ॥

निष्पक्षपातं गुरुनिर्णयं तं,
हितावहं न्यायपुरस्सरं च ।
श्रुत्वा सहर्षा उभयेऽपि पक्ष्याः,
सूरेर्जयोद्घोषणमुच्चघुस्ते ॥ १३० ॥

खीवाणदी-वांकलिवासिवर्या,
अतीव मोदादुभयेऽपि पक्ष्याः ।
ततः प्रभृत्येव सदाऽमिलंस्ते,
संमेलनं सौख्यकरं शुभं हि ॥ १३१ ॥

शार्दूलविक्रीडितम्

इत्थं पोङ्कणयुक्फलोध्यभिधया वित्ते सुतीर्थोत्तमे
श्रीमत्पट्टननामके वरपुरे श्रीतरणतदुर्गे कडौ ।
चाणस्माशुभनाम्नि धाम्नि धनिनां श्राद्धोत्तमै राजिते,
श्रीमद्वीरमगामनाम्नि नगरे, सौराष्ट्रसद्वोपुरे ॥ १३२ ॥

उपजातिः

इत्यादिकग्रामवरेषु सूरि-
स्तथा सुरम्येषु पुरोत्तमेषु ।
भिन्दँश्च संघस्थितभेदभाव-
मानन्दयद् भव्यजनान् सुबोधैः ॥१३३॥(युग्मम्)

श्रीसंघभेदोऽजनि यत्र यत्र,
कृता हि शान्तिर्भुवि तत्र तत्र ।
नाऽकारि कुत्राऽप्यवनौ विरोधः,
सूरीश्वरेणोत्तमधीश्वरेण ॥ १३४ ॥

ईदृक्प्रभावं सुचरित्रपूतं,
यशस्विरेखासमलङ्कृतं च ।
प्रशान्तमुद्राऽतिगुणौघभाजं,
विद्यावरिष्ठं जनबोधनिष्ठम् ॥ १३५ ॥

एतादृशं श्रीविजयैकपूर्वं,
सन्नीतियुक्तं गुरुनीतिसूरिम् ।
दृष्ट्वा समापन् जिनधर्ममुच्चै-
र्भव्या अभूवन् भवभीरवो ये ॥१३६॥(युग्मम्।)

खीवाणदीग्रामवराद् विहृत्य,
ग्रामं गता वालिशुभाभिधानम् ।
ततः पुरं सीदडिनामवित्तं,
सूरीश्वराः शिष्यवरैः सहाऽगुः ॥ १३७ ॥

श्रीसादडीनामपुरस्य संघः,
प्रोत्साहयुक्तो वरघोटकेन ।
सुस्वागतं तोरण-वाद्यपूर्वं,
सूरीश्वराणामकरोत्तदानीम् ॥ १३८ ॥

स्थित्वा च तस्मिन् कतिचिद्दिनानि,
ततो गता राणकपत्तने ते ।
तीर्थे वरे भारतभूप्रसिद्धे,
यात्राकृते सूरिवराः सशिष्याः ॥ १३९ ॥

चतुर्मुखं तत्र युगादिदेवं,
श्रीपार्श्वनाथं जनदोषशोषम् ।
श्रीनेमिनाथं शिवदं शिवाजं,
दृष्ट्वाऽऽत्ममोदं परमं बभूवन् ॥ १४० ॥

कृत्वा हि यात्रां पुनरागमँस्ते,
श्रीसादडीनामपुरे तदानीम् ।
सम्यक्त्वजुष्टैः सह शिष्यरत्नैः,
सूरीन्द्रसूर्या जिनधर्मधुर्याः ॥ १४१ ॥

अत्रैव काले पुनरेव जातो,
ध्यानैकनिष्ठस्य हि नीतिसूरेः ।
शारीरिको व्याधिरतीव पीडा-
प्रदो मनःतोषविनाशकारी ॥ १४२ ॥

जाताऽतिचिन्ता महती तदानीं,
शिष्य-प्रशिष्यादिमुनीन्द्रवर्गे ।
संघे च श्रीसादडिनामपुर्याः,
शरीररोगेण हि नीतिसूरेः ॥ १४३ ॥

श्रद्धाऽभवत् सूरिपतेः स्वकीया,
व्याधेश्चिकित्साविषये तदानीम् ।
चित्तोडदुर्गस्य यतिप्रवेके,
श्रीबालचन्द्राभिधया प्रसिद्धे ॥ १४४ ॥

ततश्च जाता गुरुनीतिसूरे-
स्तस्यौषधं कारयितुं समीहा ।
तारं हि कृत्वा यतिपुङ्गवं तं,
संघस्य मुख्याः समुपाह्वयंश्च ॥ १४५ ॥

भुजङ्गप्रयातम्

यतीन्द्रोऽपि तं वायुसंदेशरूपं,
तदा तारनामाङ्कपत्रं निरूप्य ।
निरीयात्मवासाच्च चित्तोडदुर्गा-
दगात्सादडिनामपुर्यां हि तूर्णम् ॥ १४६ ॥

१ चिकित्सादिकारके द्रव्यादिपरिग्रहवति च साधुवेषधारिणि यतिशब्दोऽत्र व्यापृतः ।

उपजातिः

कृत्वा निदानं गुरुनीतिसूरेः,
शरीरव्याधेरवधानतोऽसौ ।
चिकीर्षुरातङ्कहृतेरुपाय-
मापृच्छतोच्चैर्विनयेन सूरिम् ॥ १४७ ॥

अवोचताचार्यवरस्तदानीं,
भवेदिदानीं भवतः स्थिरत्वम् ।
तदा भवन्तः प्रविधातुमिष्टां
प्रतिक्रियाऽस्मत्तनुरोगकस्य ॥ १४८ ॥

सेवां विधित्सुर्वरसूरिपस्य,
समुत्सुकः प्राह यतीन्द्रवर्यः ।
अप्राप्य चाऽतो भवतामनुज्ञा-
मन्यत्र नाऽस्मद्गमनं हि भावि ॥ १४९ ॥

श्रुत्वा यतीन्द्रस्य विनम्रवाणीं,
रुजाऽपहाराय निजे शरीरे ।
अदादनुज्ञां यमिनामधीशः,
प्रारम्भि तेनाऽगददानकार्यम् ॥ १५० ॥

आचार्यवर्यस्य हि नीतिसूरेः,
सुसंयमाधारशरीरमध्ये ।
अवर्धताऽऽतङ्कजतीव्रपीडा,
श्रुत्वेति वार्तामतिविह्वलात्मा ॥ १५१ ॥

अहम्मदावादनिवासिवर्यः,
श्रीमच्चुनीलालधनीशपुत्रः ।
श्रीखूतरीयाह्वकुलप्रदीपः,
श्राद्धो मगुभाईतिनामधेयः ॥ १५२ ॥

श्रेष्ठीश्वरः श्रावकलालभाई-
सुतोत्तमश्चीमनलालनामा ।
धनीशपीताम्बरदासनाम्नः,
सूनुश्च जीवादिमभाइनामा ॥ १५३ ॥

इत्यादिकाः श्रेष्ठिवरा हि शीघ्र-
महम्मदावादपुरान्निरीय ।
श्रीसादडीनामपुरं समागुः,
सूरीशगात्रस्य सुदर्शनार्थम् ॥ १५४ ॥
( चतुर्भिः कलापकम् । )

प्रणम्य सूरीन्निजनम्रभावै-
र्व्यज्ञापयंस्ते सुविचारपूर्वम् ।
महत्तमे राजपुरे वसन्ति,
भिषग्वरा डॉक्टरकार्यदक्षाः ॥ १५५ ॥

तथा महामूल्यमहौषधादि,
संप्राप्यते साधनमुत्तमं च ।

अहम्मदावादपुरागमार्थ-
मतो भवद्भिर्हि कृपा विधेया ॥ १५६ ॥
परन्तु सूरीश्वरवर्य ऐच्छत्,
श्रीसादडीनामपुरे हि वस्तुम् ।
अतो न्यषेधीद्वचनं तदीय
महम्मदावादपुरं प्रयातुम् ॥ १५७ ॥
तथापि तेषां गुरुभक्तिभाजां,
श्राद्धोत्तमानां च मुनीश्वराणाम् ।
अहम्मदावादपुराय नेतुं,
विज्ञप्तिरासीद् विनयेन युक्ता ॥ १५८ ॥
अतोऽन्वमंस्तैतदनिच्छयाऽपि,
सूरीश्वरस्तद्वचनं तदानीम् ।
गुरूत्तमस्वीकृतिवाक्यतस्ते,
श्रेष्ठीश्वरा भक्तिपरा अतुष्यन् ॥ १५९ ॥
श्रीपादलिप्ताख्यपुरे धनीशा,
अदुः समाचारमतित्वरातः ।
डोलीतिनामाङ्कितयाप्ययान-
मानायनार्थं गुरुपुङ्गवाय ॥ १६० ॥
अहम्मदावादपुरे स्ववासे,
श्रेष्ठीश्वराणां गमनस्य पश्चात् ।

शरीरदौर्बल्यमनल्परोगा-
दाचार्यवर्यस्य तदा समीक्ष्य ॥ १६१ ॥

अर्हो विहारो यदि वा न योग्यो,
मतं ग्रहीतुं त्विति डॉक्टरस्य ।
शिष्य-प्रशिष्यादिकसाधुधुर्या,
निर्णीतवन्तो गुरुभक्तिनिष्ठाः ॥१६२॥ (युग्मम् ।)

ततश्च दक्षं शिवगंजवित्तं,
पाश्चात्यभैषज्यविधौ प्रवीणम् ।
धांचीत्युपाह्वं वरडॉक्टरं तं,
श्रीसादडीनामपुरे समाह्वन् ॥ १६३ ॥

निरूप्यदेहं गुरुनीतिसूरे-
रशक्तियुग् व्याधिपरीतमुच्चैः ।
अवोचतेत्थं वरडॉक्टरोऽसौ,
हितार्थमाचार्यवरस्य भक्तः ॥ १६४ ॥

पादाधिकक्रोशशतेऽतिदूरे,
अहम्मदावादपुरे प्रयाणम् ।
दौर्बल्यबाहुल्यशरीरभाजां,
न विद्यते योग्यतमं गुरूणाम् ॥ १६५ ॥

श्रीसादडीनामपुरस्य संघ-
मुख्या मिलित्वा सममन्त्रयन्त ।

श्रेष्ठीश्वराः सेजमलाङ्गजन्म-
श्रीमूलचन्द्रादिकसूरिभक्ताः ॥ १६६ ॥

अस्मादृशश्राद्धकवासवित्तात्,
पुरात् सहस्राधिकजैनगेहात् ।
आचार्यवर्यस्य विहारजन्यः,
श्रमः शरीरार्तिनिपीडितस्य ॥ १६७ ॥

शोभास्पदो नो नहि भासते स,
यतो महापुण्यसुयोगतोऽयम् ।
प्रभावशाली सुचरित्रपात्र-
माचार्यवर्योऽत्र पुरे समागात् ॥१६८॥(युग्मम्)

ततः सुशीलान्वितसाधुजुष्टा,
अस्माभिराचार्यवराः स्वकीये ।
पुरेऽत्र वर्षर्तुनिवासहेतोः,
संप्रार्थनीया अतिनम्रवाग्भिः ॥ १६९ ॥

इत्थं विनिश्चित्य यमीन्द्रपार्श्वे,
श्रीसंघमुख्याः समगुस्तदानीम् ।
संप्रार्थयन्नाऽऽग्रहपूर्वमेनं,
वर्षर्तुवासाय पुरे स्वकीये ॥ १७० ॥

अवोचताचार्यवरेण्य इत्थं,
सुकोमलैरुपकारैर्वचोभिः ।

एतच्चतुर्मासनिवासहेतो-
बद्धोऽस्मि पूर्वं वचनप्रदानैः ॥ १७१ ॥

एकत्र वर्षर्तुनिवासकार्यं,
स्वीकृत्य चाऽन्यत्र पुनस्तदर्थम् ।
अङ्गीकृतिः साधुवरैर्न कार्या,
न निश्चयोल्लङ्घनमर्हणीयम् ॥ १७२ ॥

तथापि चाऽऽस्माकविहारकार्याद्,
दूयेत चेतो यदि युष्मदीयम् ।
तदा भवद्भिः परिलेखनीय-
महम्मदावादपुरे तदर्थम् ॥ १७३ ॥

अहम्मदावादपुराधिवासि-
श्रेष्ठीश्वराश्चेद्यदि युष्मदीयम् ।
अङ्गीकरिष्यन्ति वचः प्रमाणं,
तदा चतुर्मास इहाऽस्मदिष्टः ॥ १७४ ॥

संघस्य मुख्या गुरुवर्यवाक्य-
ममंसताऽतीव सुयुक्तियुक्तम् ।
ततोऽलिखन् राजपुरे सुपत्रं,
श्राद्धोत्तमानामुपरीत्थमेते ॥ १७५ ॥

सूरीश्वराणां सुचरित्रभाजां,
वर्षर्तुवासं खलु संविधातुम् ।

संमिल्य संघेन ततोऽनुमत्य,
सुनिश्चितं सादडिनामपुर्याम् ॥ १७६ ॥

अन्यच्च सूरीश्वरपुण्यदेहो,
दौर्बल्यभाग् रोगपरीतवाँश्च ।
अतो विनेतुं भवदाग्रहोऽयं,
विचारपूर्वं परिवर्तनीयः ॥ १७७ ॥

गन्तुं न दास्याम इतश्च पूज्यान्,
अहम्मदावादपुराय सूरीन् ।
अतश्चतुर्मासनिवासहेतो-
र्भवद्भिरत्र स्वमतं प्रदेयम् ॥ १७८ ॥

एवं सुपत्रं परिपठ्य तेषां,
श्रीसादडीश्रावकमुख्यकाणाम् ।
अहम्मदावादपुरीयसंघः,
प्रत्युत्तरं प्रैपयदित्थमस्य ॥ १७९ ॥

अहम्मदावादपुरे वसन्ति,
भिषग्वरा दक्षसुडॉक्टराश्च ।
पौर्वात्य-पाश्चात्यवरौषधानां,
पूर्णानि सत्साधनकानि सन्ति ॥ १८० ॥

निर्णीतपूर्वा वयमत्र सुष्ठु,
आरोग्यभाजस्त्वरया भवेयुः ।

आचार्यवर्या गुरवस्ततस्ते,
संप्रार्थिता आगमनाय चाऽत्र ॥ १८१ ॥

अस्माभिरस्मत्करणीयकृत्यं,
संप्रार्थनातो हि कृतं तदानीम् ।
अहम्मदावादपुरे गुरूणां,
वर्षर्तुवासाय सुभावबद्भिः ॥ १८२ ॥

तथापि सूरीश्वरवर्यदेहे,
दौर्बल्यबाहुल्यमतीव चेत्स्यात् ।
तथा विहाराद् गुरुपुङ्गवाणां,
दूयेत चेतो यदि वः समेषाम् ॥ १८३ ॥

कदाग्रहस्तद्विषये न कश्चिद्,
वेविद्यतेऽस्माकमतो भवद्भिः ।
यथा रुचिः सूरिमहोदयस्य,
भवेत्तथा कार्यमपेक्ष्य सारम् ॥१८४॥ (युग्मम् ।)

पत्रं तदेतादृशवृत्तपूर्णं,
श्रीसादडीसंघवरोपरिष्टात् ।
आचार्यवर्योपरि चाऽन्यपत्रं,
प्राहैषुरिभ्यप्रवरा उदाराः ॥ १८५ ॥

प्रपठ्य पत्रं च तदीयमीदृक्,
श्रीसादडीनामपुरस्य संघः ।

महाप्रभावाऽन्वितनीतिसूरे-
रनल्पसेवाजनितोच्चलाभः ।
संप्राप्त एवं प्रविबुध्य भव्यः,
श्रीसादडीसंघवरोऽत्यहृष्यत् ॥१९१॥ (युग्मम् ।)

ततश्च हर्षोच्छलितात्मभावाः,
सूरे ! जय त्वं सुजयेति शब्दान् ।
उच्चैर्वदन्तः समवाप्य सर्वे,
गुरोरनुज्ञां गृहमन्वगच्छन् ॥ १९२ ॥

निदानकार्ये समरोगकाणां,
तथा प्रयोगे च महौषधानाम् ।
अतिप्रवीणो यतिपुङ्गवो यः,
श्रीबालचन्द्राभिधवैद्यराजः ॥ १९३ ॥

आचार्यवर्यस्य रुजः प्रशान्त्यै,
स सार्धमासावधि संव्यधत्त ।
वरिष्ठमात्रादिमहौषधानां,
प्रयोगमुच्चैः खलु सावधानः ॥१९४॥ (युग्मम् ।)

यतीन्द्रवर्यस्य वरौषधेन,
न्यूनाऽभवत् सूरिशरीरपीडा ।
ततो नदीतीरमनु यतीन्द्रः,
स स्थण्डिलार्थं समगात् सुखेन ॥ १९५ ॥

पुरोपकण्ठस्थितमव्यमृङ्गे,
देवालये रम्यतमे वरेण्ये ।
तीर्थेशसौम्यप्रतिमोत्तमानां,
संवन्दनार्थं गमनेऽशकत् सः ॥ १९६ ॥

कियद्दिनानन्तरमागमँश्च,
बीयावराख्यान्नगरात् सुवित्तात् ।
प्रतापदुर्गाह्वपुरोत्तमाच्च,
तथा वरेण्यात्तखतादिदुर्गात् ॥ १९७ ॥

इत्यादिसद्ग्राम-पुरादिकेभ्यः,
श्रीसंघमुख्या वरनीतिसूरेः ।
वर्षर्तुवासाय समं मुनीन्द्रैः,
संप्रार्थनार्थं हि शुभैकभावाः ॥१९८॥ (युग्मम् ।)

परन्तु सूरीश्वरपुङ्गवस्य,
प्रागेव वर्षर्तुनिवासकार्यम् ।
सुनिश्चितं सादडिनामपुर्या-
मभूत्ततस्तान् खलु नाऽन्वमंस्त ॥ १९९ ॥

आचार्यवर्यस्य समीपमासन्,
मुनीश्वराः संयम-शीलधुर्याः ।
तपस्विनश्चागमबोधभाजः,
शिष्याः प्रशिष्या बहवो वरिष्ठाः ॥ २०० ॥

परन्तु सर्वे गुरुभक्तिहेतोः,
　　स्थातुं हि सूरेः सविधे समैच्छन् ।
विहाय सूरीश्वरपादसेवां,
　　नैच्छन् प्रयातुं च परत्र केऽपि ॥ २०१ ॥

तथापि कल्याणचिकीर्षया वै,
　　शरीरभाजां जगतः समेषाम् ।
शुभङ्कराः पुण्यविशालभावाः,
　　सूरीश्वरा इत्थमचिन्तयंश्च ॥ २०२ ॥

पृथक्पृथग्ग्राम-पुरस्थलेषु,
　　संप्रेषणातो मुनिपुङ्गवानाम् ।
अनेकभव्यप्रतिबोध एवं,
　　धर्मस्य वृद्धिः प्रभवेत् प्रभूता ॥ २०३ ॥

व्रतानि भव्यानि यमास्तपांसि,
　　विशेषकल्याणकराणि हि स्युः ।
तथैव सर्वज्ञसुशासनस्य,
　　प्रभावना-ख्याति-विशेषशोभाः ॥ २०४ ॥

विचिन्त्य चेत्थं वरसूरिराजः,
　　संमेल्य सर्वान् निजशिष्यमुख्यान् ।
विनीतवर्यान् विदुषः सुशीलान्,
　　संबोध्य चाऽवेदयतेतिवृत्तम् ॥ २०५ ॥

ततो हि वीयावरनामधेय-
पुरीयसंघार्थनया तदानीम् ।
प्रैषीच्च वर्षर्तुनिवासहेतोः,
सूरीश्वरोऽमून् स यमीन्द्रमुख्यान् ॥ २०६ ॥

श्रीमागुपाध्यायपदाधिजुष्टं,
श्रेष्ठं दयावुधविजयाभिधानम् ।
दयाप्रधानं सरलस्वभावं,
श्रीमज्जिनेन्द्रागमतत्त्वचञ्चुम् ॥ २०७ ॥

मालिनी

चरणविजयनाम्ना युक्तमन्वर्थसंज्ञं,
गुरुवरचरिवस्याकर्मठं शास्त्रदक्षम् ।
इति वरमुनिमुख्यान् षड्मितान् साधुधुर्यान्,
गुरुवरवरकीर्तिः प्रैषयत् तत्र सूरिः ॥ २०८ ॥
( युग्मम् । )

प्रवरतखतदुर्गात् संघसंप्रार्थनातो,
मुनिपविजयहर्षाह्वं हि सूरीश्वरं ज्ञम् ।
विजयपदयुतांस्तान् राममुख्यान् मुनींश्च,
जलदसमयवासे प्रैषयत् सूरिराजः ॥ २०९ ॥

उपजातिः

प्रतापदुर्गाख्यपुरीयवर्य-
श्रीसंघसंप्रार्थनया सुबुद्धान् ।

प्रसिद्धपन्न्यासपदाऽतिवित्तान्,
कल्याणपूर्वान् विजयान् गणीन्द्रान् ॥ २१० ॥

वसन्ततिलका

श्रीचंपकाख्यविजयादिकसाधुधुर्यान्,
गुप्त्यादिपालनपरान् चतुरस्तथैव ।
वर्षर्तुवासकरणाय तदात्मशिष्यान्,
सूरीश्वरो जनहिताय हि तत्र प्रैषीत् ॥ २११ ॥

उपजातिः

इत्थं च सेवाडिसुनामभाजो,
ग्रामस्य संघार्थनया मुनीन्द्रान् ।
तथा लुणावादिपुरीयसंघ-
संप्रार्थनातः किल प्रैषयत्सः ॥ २१२ ॥

एवं हि तत्तत्पुरवासकानां,
ग्रामस्थितानां च सुभावुकानाम् ।
संप्रार्थनातोषणतस्तदानीं,
जातो यमीन्द्रो बहुमानपात्रम् ॥ २१३ ॥

श्रीसादडीनामपुरे तदानी-
माचार्यराजेन्द्रसमीपमासन् ।

१ चतुःसंख्याकान् ।

एते मुनीन्द्रा वरशीलभाजः,
सेवार्थिनः स्वीयगुरूत्तमानाम् ॥ २१४ ॥

मालिनी

मनहरविजयाह्वो वर्ण्यपन्न्यासवर्यो,
विशदचरणधर्ता श्रीगणी साधुधुर्यः ।
चरण-करणसंपद्भूपितः संपदादि-
र्विजयपदयुतोऽसौ सद्गुणाढ्यो गणीन्द्रः ॥२१५॥

उपजातिः

श्रीसुन्दराह्वो विजयान्तरम्यो,
मुनीन्द्रमान्यो गुणसुन्दरश्च ।
तथा मुनिर्श्रीभुवनेतिपूर्वो,
गुणैर्वरिष्ठो विजयान्तनामा ॥ २१६ ॥

गीतिः

मुनिवरवल्लभविजय-
स्तथा चिदानन्दविजयनामाऽन्यः ।
मुनिसौम्यसोमविजयो,
विनयी प्रमोदविजयाभिधेयश्च ॥ २१७ ॥

उपजातिः

दीपादिमो वै विजयान्तसाधु-
रशोकपूर्वो विजयान्तसंज्ञः ।

अर्वाग्गुभेदो विजयाभिधश्च,
श्रीमज्जयानन्दमुनिप्रकाण्डः ॥ २१८ ॥
( पञ्चभिः कुलकम् । )

वर्षर्तुकाले किल नीतिसूरि-
र्व्याख्यानजन्यं सुपरिश्रमं हि ।
सोढुं स्वकीयस्य शरीरकस्य,
दौर्बल्यहेतोः समभूदशक्तः ॥ २१९ ॥

समादिशत् सूरिवरस्ततोऽसौ,
व्याख्यानहेतोर्निजविज्ञशिष्यम् ।
गणीशसंपद्विजयं श्रुतज्ञं,
पन्न्यासमत्युच्चपदातिवित्तम् ॥ २२० ॥

एतेऽपि पन्न्यासवरा गुरूणां,
सूरीश्वराणां समवाप्य चाज्ञाम् ।
सद्बोधकस्याऽऽगमसारभाजो,
'वंदित्तु' सूत्रस्य वरेण्यटीकाम् ॥ २२१ ॥

तथाऽधिकारे वरभावनाख्ये,
कैवल्यभाजः शिवसौख्यलब्धुः ।
श्रीमज्जयानन्दविभोश्चरित्र-
मुत्साहतो वाचयितुं प्रवृत्ताः ॥२२२॥ (युग्मम् ।)

व्याख्यानशैल्या अतिसुन्दरत्वात्,
सुश्रोतृवर्गे हि रसोऽतिजातः ।

ततश्च वाचामृतपानहेतोः,
सच्छ्रावकौघः समगंस्त तत्र ॥ २२३ ॥

तथा च योगीश्वर-नीतिसूरि-
वर्षर्तुकाले समकारयत् सः ।
चतुर्दशाङ्काङ्कितपूर्वनाम,
तपो गरिष्ठं सुकृतैर्वरिष्ठम् ॥ २२४ ॥

गीतिः

आणंदजि-कल्याणजि-श्रेष्ठीतिनाम्न्याः श्रेष्ठसंस्थायाः ।
श्रीभारतभूषाया, मुख्यतमायाः श्रीजैनसंस्थासु ॥ २२५ ॥

अत्रत्यश्चाऽध्यक्षः, श्रीमच्छ्रेष्ठीशहेमचन्द्रसुतः ।
हरगोवनदासाख्यः, सद्गुरु-सद्धर्म-जिनराजभक्तः ॥२२६॥

उपजातिः

सेवासु सूरीशपदाब्जयोः स,
भक्तौ तथैवं मुनिमण्डलस्य ।
सदैव हर्षेण सुतत्परोऽभूत्,
स्युः श्रावका भक्तिपरा गुरूणाम् ॥ २२७ ॥
( त्रिभिर्विशेषकम् । )

श्रीसादडीनामपुरीयरम्ये,
वर्षर्तुवासे भविहर्षदेऽस्मिन् ।

सन्नीतिभाजो गुरुनीतिसूरेः,
पुण्यात्मनां मञ्जतमोपदेशात् ॥ २२८ ॥

चित्तोडदुर्गस्थितवीतराग-
पुरातनानां किल मन्दिराणाम् ।
जीर्णोद्धृतौ सम्मिलिताः सहाये,
सत्पञ्चत्रिंशच्छतरूप्यका वै ॥२२९॥ (युग्मम् ।)

आचार्यसंदर्शन-वन्दनार्थं,
निरूपणार्थं च तदातनीं वै ।
शारीरिकीं सूरिपतेः स्थितिं तां,
समागमत् सादडिनामपुर्याम् ॥ २३० ॥

अहम्मदावादपुरीयमान्यः,
श्रीमञ्चुनीलालधनीशपुत्रः ।
धीमान् सुभक्तो मगुभाइनामा,
श्रीक्षूतरीयाख्यकुलाऽवतंसः ॥२३१॥ (युग्मम् ।)

मालिनी

उदयपुरसुनाम्नो मेदपाटाख्यभूमेः,
प्रवरतिलकरूपाद् ऋद्धिपूर्णात् पुराच्च ।
धनिकवरवहोरोपाभिधो मोतिलालः,
समगत गुरुभक्त्या सूरिराजं प्रणन्तुम् ॥ २३२ ॥

गीतिः तथा सुश्रेष्ठिवित्त-
श्चतुरोपाभिधश्रावकप्रवरः ।
मनहरलालजिनामा,
तत्राऽऽगात् सूरिवन्दनां कर्तुम् ॥ २३३ ॥

उपजातिः

मुहूर्तमप्राक्षुरदोपयेते,
चित्तोडदुर्गस्थितमन्दिराणाम् ।
भद्रप्रतिष्ठाकरणाय पूज्य-
माचार्यराजं विदुषां वरेण्यम् ॥ २३४ ॥

न्यरूपयत्सूरिवरः सुधीशो,
मुहूर्तशास्त्राण्यवलोक्य सम्यक् ।
श्रीमाघमासस्य सितद्वितीया-
तिथिः प्रतिष्ठाकरणेऽस्ति भव्या ॥ २३५ ॥

अस्मिँश्च काले विबुधः समायात्,
श्रीसादडीनामपुरे वरेण्ये ।
मौहूर्तिको जोधपुरीयवित्त-
पञ्चाङ्गकृद् विज्ञवरो गरीयान् ॥ २३६ ॥

अप्राक्षुरेतद्विषये तमेते,
न्यगादि तेनाऽपि मुहूर्तमुच्चैः ।
श्रीसूरिराजैर्गदितं यदस्ति,
तदेव सम्यक् शुभयोगजुष्टम् ॥ २३७ ॥

तथा वरो जोधपुरीयविज्ञः,
सल्लग्नसंदर्शककुण्डलीं च ।
कृत्वा सुनिश्चित्य मुहूर्तमेतद्,
आचार्यवर्योक्तमवोचदुच्चम् ॥ २३८ ॥

मालिनी

उदयपुरनिवासिश्रावकाग्रेसरा वै,
निजनगरमथो ते संघमामेल्य गत्वा ।
गुरुगदितमुहूर्तं श्रावयित्वा च सर्वान्,
व्यदधत बहुयत्नं कर्तुमुच्चैः प्रतिष्ठाम् ॥ २३९ ॥

उपजातिः

समाप्य वर्षर्तुनिवासकार्य-
माचार्यवर्याः सह शिष्यरत्नैः ।
विहृत्य तस्माज्जनताहितार्थाः,
समागता राणकपूर्वपुर्याम् ॥ २४० ॥

कृत्वा च यात्रां परिवारयुक्ता-
स्तीर्थोत्तमस्याऽस्य यमीन्द्रमुख्याः ।
प्रत्यागमन् शिष्यवरिष्ठजुष्टाः,
श्रीसादडीनामपुरं पुनस्ते ॥ २४१ ॥

श्रीमार्गशीर्षाख्यवरेण्यमासे,
शुक्ले च पक्षे तिथिपञ्चमी या ।
विहृत्य तस्यां वरसूरिराजा,
रावाधाणोऽथ पुरे समागुः ॥ २४२ ॥

मार्गाख्यमासस्थितशुक्लपक्षी-
यैकादशी मौनपदाश्रिता या ।
स्थित्वा स तावत्समयं पुरेऽत्र,
ततो विहारं कृतवान् यमीन्द्रः ॥ २४३ ॥

कृत्वा मुछालाख्यमहादिवीर-
सुतीर्थयात्रां किल सूरिराजः ।
उत्तीर्य पश्चाद् नहरेतिनाम्नीं,
श्रीकेलवाडापुरवित्तकुल्याम् ॥ २४४ ॥

मालिनी

उदयपुरमगुस्ते मार्गशीर्षाख्यमास-
प्रवरबहुलपक्षे पञ्चमीसत्तिथौ वै ।
अकृत मुदितसंघो बेण्डवाद्यैस्तदोच्चैः,
समहमतुलहर्षं पूःप्रवेशं गुरूणाम् ॥२४५॥(युग्मम्

उपजातिः

विहारजन्याऽतिपरिश्रमेण,
सूरीश्वराणां तु तनुः सुतन्वी ।

अशक्तिबाहुल्ययुताऽतिजीर्णा,
तदा समासीच्च रुजाप्रपूर्णा ॥ २४६ ॥

ततो हि तत्रत्यचिकित्सकेन्द्रै-
स्तथा प्रसिद्धोत्तमडॉक्टराख्यैः
शीघ्रं समारभ्यत सूपचारो,
वरौषधीभिश्च यमीन्द्रदेहे ॥ २४७ ॥

परं न जातं तु यदाऽऽनुकूल्यं,
तदा समाहूयत वैद्यराजः ।
चित्तोडदुर्गीययतीन्द्रवर्यः,
श्रीबालचन्द्राऽभिधया प्रसिद्धः ॥ २४८ ॥

तस्यौषधं सूरिवरैर्गृहीत-
मष्टौ दिनानि विधिना हि यावत् ।
अहम्मदाबादपुराच्च तत्र,
तावत्समागाद् वरसूरिभक्तः ॥ २४९ ॥

मालिनी

गुरुवरपदरक्तः सूतरीयेत्युपाह्वो,
धनिकमगनलालस्यात्मजो भोगिलालः ।
परमगुरुवराणां दैहिकीं तां स्थितिं वै,
किल सनिजकुटुम्बो द्रष्टुमत्युच्चभक्त्या ॥२५०॥
( युग्मम् । )

उपजातिः

दृष्ट्वा च सूरीश्वरवर्यतन्त्रा-
स्तदार्तनीं शोच्यतमामवस्थाम् ।
श्रेष्ठीश्वरः प्रार्थयतैप सूरी-
नहम्मदावादपुरागमार्थम् ॥ २५१ ॥

चित्तोडदुर्गे च जिनेशबिम्ब-
वरप्रतिष्ठाकरणाय पूज्य ! ।
विधेर्विधाने प्रवरः प्रवीणः,
सदागमज्ञः श्रुततत्त्ववेत्ता ॥ २५२ ॥

श्रीमानुपाध्यायपदातिवित्तो,
धीमान् दयायुग् विजयान्तनामा ।
मुनीन्द्रमान्याः समुदायिनश्च,
समागमिष्यन्ति मुनिप्रकाण्डाः ॥ २५३ ॥

तथा प्रतिष्ठाप्रवरप्रसङ्गे,
चित्तोडदुर्गाभिधरम्यतीर्थे ।
वयं गमिष्याम उदात्तभावा,
गुरोरनुज्ञां समवाप्य सर्वे ॥ २५४ ॥

आदेशतुल्यं भवतां गुरूणां,
चैत्यप्रतिष्ठाविधिपुण्यकार्यम् ।

समापयिष्याम उरूच्चभक्त्या,
चिन्ता न कार्या गुरुदेव ! काचित् ॥ २५५ ॥
( पञ्चभिः कुलकम् । )

परन्तु सूरीश्वरपुङ्गवोऽसौ,
दौर्बल्ययुक्तोऽपि सशक्तचेताः ।
प्राचीनतीर्थे हि समुत्सुकोऽभूत्,
कर्तुं प्रतिष्ठां स्वकराम्बुजाभ्याम् ॥ २५६ ॥

ततोऽब्रवीत् श्रेष्ठिवरं सुवाचा,
युष्माकमुक्तं गुरुभक्तिपूर्णम् ।
अनुप्रतिष्ठाकरणं तु भावि,
स्थलेऽरणादीयं गमनं परत्र ॥ २५७ ॥

चित्तोडदुर्गस्थितमन्दिराणां,
पूतप्रतिष्ठाकरणार्थमस्मात् ।
श्रीपौषमासस्य सुपूर्णिमायां,
प्राज्ञो व्यहार्षीद् गुरुनीतिसूरिः ॥ २५८ ॥

आचार्यराजैरुदयादिपुर्यां,
यदा विहारः प्रकृतः सशिष्यैः ।
तदा च तेषां सविधे समासन्,
मुनीन्द्रवर्या नव शुद्धशीलाः ॥ २५९ ॥

औपच्छन्दसकम्

मनहरविजयो मुनीन्द्रमान्यः,
पञ्यासाख्यपदाऽतिभूषितात्मा ।
विजयपदवृतो गणिप्रकाण्डः,
पन्यासो मुनिसंपदाह्वविज्ञः ॥ २६० ॥

मुनिरविविजयो व्रती गुरूणां,
सेवायां स सदा निबद्धचेताः ।
भुवनविजयनामसन्मुनीन्द्रः,
सच्छीलं मुनिपञ्चकं तथैवम् ॥ २६१ ॥

प्रतिपदि सुतिथौ दले च कृष्णे,
पौषाख्ये वरमासके यमीन्द्राः ।
अदवदनरतीर्थवित्तयात्रां,
कृत्वाऽगुस्तत एकलिङ्गवासे ॥ २६२ ॥

उपजातिः

सायं च सूरीशशरीरमुग्र-
रोगाभिभूतं समभूत् क्रमेण ।
वृत्तान्तमेतत् सकलं ततस्तैः,
संप्रापि शीघ्रमुदयादिपुर्याम् ॥ २६३ ॥

मालिनी

उदयपुरनिवासिश्रावकाग्रेसरास्ते,
सह वरभिषगिन्द्र-प्रष्ठसङ्डॉक्टराभ्याम् ।
अपि च सहचराभ्यां दक्षकम्पौण्डराभ्यां,
प्रवरगुरुसमीपे तत्र तूर्णं समागुः ॥ २६४ ॥

उपजातिः

सर्वे मिताः षोडशसंख्यया ते,
त्वरावता मॉटरवाहनेन ।
रात्रौ समागुर्गुरुभक्तियुक्ता,
आचार्यवर्यस्य समीपमुत्काः ॥ २६५ ॥

वैद्यप्रवेकः स च डॉक्टरेन्द्रो,
निदानकार्ये निपुणावुभौ तौ ।
अस्वास्थ्यपीडां बहुसूक्ष्मरीत्या,
न्यरूपयेतां गुरुदेहजन्याम् ॥ २६६ ॥

निशि निषिद्धो जिनधर्मभाजां,
चतुर्विधाहार उरूग्रदोषः ।
पेयौषधिं दातुमतो ह्यशक्ता,
इंजक्शनादेरुपचारमाधुः ॥ २६७ ॥

बाह्योपचारस्य तु संविधानं,
कृत्वा स्थितिं ते घटिकाश्चतस्रः ।

किञ्चित्तुर्यं गुरुदेहरोगे,
ज्ञात्वा समागुरुदयादिपुर्याम् ॥ २६८ ॥

श्रीपौषमासाऽसितपक्षकस्य,
रात्रौ द्वितीयाख्यतिथौ पुनश्च ।
सूरेः शरीरं समभूत्तदानी-
मसाध्यरोगैकनिदानचिह्नम् ॥ २६९ ॥

सर्वे मुनीन्द्रा गुरुवर्यपार्श्वे,
तदोपविष्टा बहुशोकमग्नाः ।
सूरीशभक्तो मरुधन्ववासी,
स कालुलालाख्यो वणिग्वरश्च ॥ २७० ॥

किन्तु न्यगादीद् गुरुनीतिसूरि-
रिमान् समुद्दिश्य मुनीश्वरादीन् ।
जागर्मि संप्रत्यहमेक एव,
यूयं शयीध्वं सकलाः श्रमार्ताः ॥ २७१ ॥

निद्रा समागच्छति नैव मां च,
ततोऽहमर्हच्चरणाम्बुजेषु ।
मनोऽवधार्याऽतिदृढं स्वकीयं,
ध्यानं करोम्यात्महिताय धर्म्यम् ॥ २७२ ॥

अशायि तैः साधुवरैस्तदानी-
माचार्यदेवेशसमाज्ञया वै ।

द्विवादनाऽनन्तरमेव रात्रौ,
शिष्यं समाहूत्स मनोहराह्वम् ॥ २७३ ॥

कुण्डीं समानाय्य तदा हि तेन,
कृत्वा गुरुः प्रस्रवणं स्वयं वै ।
निशम्य पश्चान्निजसंस्तरेऽसौ,
ध्याने निमग्नश्च जिनेश्वरस्य ॥ २७४ ॥

सर्वैर्विनिद्रैर्गुरुनीतिदेहे,
व्याधिः प्रपूर्णः समवुध्यतोग्रः ।
ततः समाहूयत वैद्यराज-
स्तत्रत्य आतङ्कनिरूपणार्थम् ॥ २७५ ॥

परीक्ष्य सूरीश्वरदेहरोग-
मवोचदेवं बत वैद्यराजः ।
क्षीणायुषो लक्षणमीक्ष्यतेऽतः,
संश्रावणीयाः खलु धर्म्यशब्दाः ॥ २७६ ॥

समीपमासीद् वरपण्डिताख्यः,
सुपाठको यो मुनिवर्यकाणाम् ।
नाडीपरीक्षाकुशलं तमेनं,
तेऽवोधयन् सूरिनिरूपणार्थम् ॥ २७७ ॥

निरूप्य नाडीं गुरुवर्यदेहे,
न्यगादि तेनाऽपि सुकोविदेन ।

अतीव मन्दाऽस्ति शरीरनाडी,
निवेदिका चान्तिमलक्षणानाम् ॥ २७८ ॥

सर्वे मुनीन्द्रा बहुशोकमग्ना,
आसँस्तदाऽऽचार्यवरैकभक्ताः ।
अश्रावयन् पूतनमस्कृतीश्च,
तथा 'पयन्ना'दिसुपाठमुख्यान् ॥ २७९ ॥

पश्चाच्चतुर्वादिनकस्य रात्रेः,
प्रतिक्रमं चेतनशुद्धिहेतुम् ।
विज्ञा मुनीन्द्राः प्रविधातुकामा-
स्तत्रोपविष्टा नियमैकनिष्ठाः ॥ २८० ॥

प्रतिक्रमं नित्यविधिं विधाय,
सूरीन्द्रवर्यस्य समीपमेते ।
उपाविशंस्तीर्थकरोपदिष्टान्,
निशामयन्तो मन्त्रदारशब्दान् ॥ २८१ ॥

आचार्यराजा अरिहंतदेव-
ध्यानैकलीना हि तदा समासन् ।
श्रीवीर वीरेति पुनः पुनस्तो,
उच्चारयन्तः शुभभावनाढ्याः ॥ २८२ ॥

आयुष्यकर्मावलिपूर्णतायां,
सूरीश्वरोऽसौ सुसमाधिनिष्ठः ।

औदारिकं देहमिमं विहाय,
निर्वाणभावं समवापदुच्चैः ॥ २८३ ॥

वसन्ततिलका—

अर्ष्ट-ग्रहं[1] ग्रह-भ्रशाङ्कमिते सुवर्षे,
श्रीविक्रमार्कनृपतीन्द्रवराद् गते हि ।
मासोत्तमे हिममये शुभपौषमासे,
आत्मस्थितिस्थिरकरे स्थिरवासरे च ॥२८४॥

लग्ने तुलाधरगृहे रविपुष्ययोगे,
मार्तण्डमण्डलविभूषितचापगेहे[2] ।
कर्कस्थिते हिमकरे[3] निजगेहरूपे,
भूमीसुते[4] स्थितवति स्वगृहे सुमेपे[5] ॥ २८५ ॥

सोमात्मजे[6] भृगुसुते[7] मकरस्थिते च,
मेषस्थिते रविसुते[8] ललनाख्यभावे ।
तत्सिंहिकासुत[9]विभूषितसिंहराशौ,
कुम्भस्थिते शिखिनि[10] मित्रगृहे त्रिकोणे ॥२८६॥

युग्मं[11] गते सुरगुरौ च सुपुण्यकाले,
सूर्योदयात् प्रविगतासु तदा नरासु ।

१ शनैश्चरदिने । २ धनराशौ । ३ चन्द्रे । ४ मङ्गले । ५ मेषराशौ । ६ बुधे । ७ शुक्रे । ८ शनैश्चरे । ९ सिंहिकासुतो राहुः । १० केतौ । ११ मिथुनराशिम् ।

पञ्चाशदिष्टघटिकासु च पद्भुतासु,
सूरीश्वरः प्रविगतो वरदेवलोकम् ॥ २८७ ॥

स्वर्गं गतानां श्रीविजयनीतिसूरीश्वराणां
निर्वाणसमयकुण्डलिका चेयम्-




उपजातिः-

निर्वाणभावं प्रगतस्य पूज्य-
सूरीशवर्यस्य शरीरकान्तिः ।
विशेषतोऽभूदतिदीप्यमाना,
दृष्ट्वा जना विस्मयभाज आसन् ॥ २८८ ॥
सूरीश्वरस्वर्गनिवासजन्यो,
वृत्तान्त एष त्वरितं सशोकम् ।

संप्रापि लोकैरुदयादिपुर्यां,
ख्याता न वार्ता सहते विलम्बम् ॥ २८९ ॥
शीघ्रं तदा श्रावकवर्गमुख्या,
ग्रामे समागुः शुभ एकलिङ्गे ।
जिनेन्द्रधर्मैकधुरन्धरस्य,
संदर्शनार्थं गुरुनीतिसूरेः ॥ २९० ॥

मालिनी

उदयपुरनरेशो म्हारम्होराख्यवासे,
ह्यभवदतुलनीतिर्हेतुमाश्रित्य कंचित् ।
समयुरतिशुचार्ता मोतिलालह्वोरा-
प्रमुखगुरुसुभक्ताः श्रावकास्तस्य पार्श्वे ॥२९१॥

उपजातिः

तैर्ज्ञापितः सद्गुरुनीतिसूरे-
र्निर्वाणभावो बहुदुःखहेतुः ।
अश्रव्यवृत्तान्तमिमं विदित्वा,
शोके न्यमज्जत् स हि भूपतीन्द्रः ॥ २९२ ॥

आशावरीं हेममयीं सुमूल्यां,
देहे समाच्छादयितुं हि सूरेः ।
अयाचयन्नुज्ञा नृपतीन्द्रपार्श्वे,
सच्छ्रावकाद्यैस्तदनन्तरं तैः ॥ २९३ ॥

महीमहेन्द्रोऽपि स सूरिभक्त-
स्तच्छ्रावकाणां समदादनुज्ञाम् ।
आचार्यवर्यस्य गुणैरगण्यै-
रावर्जितः सद्गुरुनीतिसूरेः ॥ २९४ ॥

व्होरोपनामा तदनन्तरं वै,
श्रीमोतीलालाभिध इभ्यवर्यः ।
अनन्यभक्तश्च स नीतिसूरेः,
कोठार्युपाह्वो बहुराजमान्यः ॥ २९५ ॥

इत्यादयः श्रावकवंशदीप्रा-
स्तत्रैकलिङ्गाख्यनिवासकेऽगुः ।
ऐच्छंश्च योगीश्वरनीतिसूरे-
र्नेतुं शरीरं ह्युदयादिपुर्याम् ॥ २९६ ॥

नीत्वा शरीरं गुरुवर्यसूरेः,
सुश्रावकाख्या उदयादिपुर्याम् ।
कर्तुं तदीयाऽनलसंस्कृतिं ते,
सूरीशशिष्यान् समवेदयन्त ॥ २९७ ॥

तदाऽवदन् सूरिपतेः सुशिष्या,
आचार्यवर्याः सुरलोकवासम् ।
इहाऽऽप्तव-तोऽत्र वरं ततोऽग्नि-
संस्कारकार्यप्रविधानमेषाम् ॥ २९८ ॥

न्यगादिषुस्ते खलु नम्रवाचा,
सूरीशदेवस्य पवित्रदेहम् ।
नेतुमनुज्ञामुदयादिपुर्या,
पूज्या भवन्तो ददतां सुविज्ञाः ॥ २९९ ॥

मालिनी

उदयपुरनिवासिश्रावकाणां च तत्र,
प्रचुरतमसुमोदः संभविष्यत्यतुल्यः ।
गुरुवरवरतन्वा दर्शनोद्भूत उच्चै-
रितरजनसमूहस्याऽपि संतोषकारी ॥ ३०० ॥

अपि च विजयनीतिसूरिराजस्य तन्वा,
उदयपुरपृथिव्यामग्निसंस्कारकार्यम् ।
प्रचुरतमसुधर्मोन्नत्यहेतुं विचिन्त्य,
प्रभवतु विधिपूर्वं वाञ्छति संघ एवम् ॥३०१॥

उपजातिः

इत्थं च संघस्य महाग्रहेण,
पुनः पुनश्चाऽर्थनया तदानीम् ।
श्रीसूरिराजस्य सुविज्ञशिष्याः,
सर्वे ह्यभूवन्ननु संमतास्ते ॥ ३०२ ॥

५

अनन्तरं श्रावकवर्यधुर्या,
आचार्यदेवेशपवित्रदेहम् ।
नीत्वाऽग्निसंस्कारकृते च तत्र,
प्रभूतमुद्योगमवारभन्त ॥ ३०३ ॥

वृत्तान्तमेतं सकलं विदित्वा,
विद्वेषकृत्स्थानकवासिवित्तः ।
तत्संप्रदायाश्रितमुख्यवर्गो,
विघ्नं प्रकर्तुं हि समुद्यतोऽभूत् ॥ ३०४ ॥

आचार्यवर्यस्य तु नीतिसूरे-
स्तनुं समाच्छादयितुं पवित्राम् ।
आशावरीमानमदान्नरेन्द्रो,
नाऽऽसंश्च शक्ताः प्रविसोढुमेते ॥ ३०५ ॥

अस्मद्गुरुः पूज्यतमोऽपि चाऽत्र,
दिवं गतोऽभूदुदयादिपुर्याम् ।
आशावरीच्छादनकं निषिद्धं,
संप्रार्थितेनाऽपि नरेश्वरेण ॥ ३०६ ॥

अतो वयं तत्करणे विरोधं,
वेहुं करिष्याम इतो मिलित्वा ।
एवं विचिन्त्यैकमतेन सर्वे,
विघ्नार्थमुद्योगमकार्षुरेते ॥ ३०७ ॥

अमूं प्रवृत्तिं प्रविबुध्य तेषां,
समादिशत्तन्नगराधिराजः ।
संप्रेष्य भृत्यं निजशासनेन,
न्यवेदयद्वृत्तमिमांस्तदानीम् ॥ ३०८ ॥

आचार्य आसीद् गुरुनीतिसूरि-
र्योगीश्वरः पूततमान्तरात्मा ।
अतोऽतिपूज्यस्य मुनीश्वरस्य,
संमानदानं भवतीति योग्यम् ॥ ३०९ ॥

आशावरी स्वर्णमयी सुखेन,
प्रभूतमूल्या परिधापनीया ।
केनाऽपि बाधा खलु नैव कार्या,
बाधाकराः स्युर्नृपदण्डनीयाः ॥ ३१० ॥

आदेशमेतं नगराधिपस्य,
श्रुत्वा समे स्थानकवासिनस्ते ।
आसन् स्वकार्ये शिथिलप्रयासाः,
खला लभन्ते खलताफलं हि ॥ ३११ ॥

अभूज्जयोद्घोषणमुच्चकैश्च,
तदा सतां मन्दिरमार्गिणां वै ।
अवाप्य भूपेन्द्रनिदेशमेतं,
विरोधिरोधं स्वमते हितं च ॥ ३१२ ॥

सुश्रावकाद्यास्तदनन्तरं ते,
आचार्यराजस्य सुनीतिसूरेः ।
स्नानादिकार्यं प्रविधाय तन्वा,
व्यभूषयन् शुद्धनवीनवस्त्रैः ॥ ३१३ ॥

आशावरी स्वर्णमयी सुमूल्या,
देहोपरि संपरिधापिता च ।
प्राचीनरूढ्या च परंपराया,
अवध्यताऽऽस्ये मुखवस्त्रिका तैः ॥ ३१४ ॥

कृत्वा वरां मण्डपिकां सुभव्यां,
सौवर्णसूत्रान्वितशुद्धवस्त्रैः ।
पट्टैर्दुकूलैश्च वरातिमूल्यै-
र्व्यभूषयन् श्रावकपुङ्गवास्ताम् ॥ ३१५ ॥

मनोहराकारविराजितस्य,
तद्याप्ययानस्य विधापितस्य ।
स्वलङ्कृतस्योपरि स्वर्णरूपा-
मारोपयन् सत्कलशीं वरेण्याम् ॥ ३१६ ॥

अनन्तरं श्राद्धसमूहमुख्याः,
प्रभूतभक्त्या कृतयाप्ययाने ।
आचार्यदेवस्य पवित्रदेहं,
शनैः शनैः स्थापितवन्त एते ॥ ३१७ ॥

सूरीशदेहं शिविकान्तराले,
प्रस्थाप्य सर्वे जयनादयुक्ताः ।
अवाक्षुरत्युत्तमभावभाजो,
वेण्डादिवाद्यध्वनिपूर्वमेते ॥ ३१८ ॥

गीतिः

जय नन्दा जय भद्दा,
जय जय नन्दा जय जय जय भद्दा ।
सर्वे भव्याः श्राद्धा,
वदन्त इत्थं व्यचारिषुर्मार्गे ॥ ३१९ ॥

उपजातिः

उच्छालयन्तोऽध्वनि ताम्र-रौप्य-
सौवर्णमुद्रादिधनस्य मुष्टीन् ।
अमुश्च राज्यस्य महाश्मशान-
स्थानं प्रति श्रावकपुङ्गवास्ते ॥ ३२० ॥

तस्मिंश्च काले वरधान्यमुख्यं,
प्रभूतदानं समदीयताऽत्र ।
अतीवदीनार्तजनेभ्य उच्चै-
रथोऽगमन् राजश्मशानमेते ॥ ३२१ ॥

१ 'वह्' धातोरद्यतन्याम् ।

तत्राऽग्निसंस्कारमकुर्वतैते,
　　सुगन्धिभिश्चन्दनदारुभिर्हि ।
आचार्यराजस्य पवित्रतन्वाः,
　　सर्वे जनाः शोकयुतास्तदानीम् ॥ ३२२ ॥

प्रभाविमाहात्म्यविभूषितस्य,
　　मुनीन्द्रवर्यस्य शरीररक्षाम् ।
शत्रुंजयानामपवित्रनद्यां,
　　क्षेप्तुं हि तत्रत्यजनस्य रूढिः ॥ ३२३ ॥

अतो द्वितीये दिवसे समेत्य,
　　श्राद्धा हि भर्तुं समवारभन्त ।
गोणीषु रक्षां तु यदा तदानीं
　　तस्यामपश्यन् खलु नारिकेलम् ॥ ३२४ ॥

दृष्ट्वैतदाश्चर्यकरं च लोका,
　　विस्फारनेत्रैस्तददृष्टपूर्वम् ।
अवर्णयन्नुच्चतमं प्रभाव-
　　माचार्यराजस्य सुनीतिसूरेः ॥ ३२५ ॥

संप्रेषिता सूरिशरीरभूतिः,
　　श्रीपादलिप्ताख्यपुरे पवित्रे ।
शत्रुंजयासन्नतमस्थितायां,
　　शत्रुंजयायां समवाह्यतैषा ॥ ३२६ ॥

आचार्यवर्यस्य समीपमास-
 न्निमे मुनीशा अवसानकाले ।
गणीन्द्रपन्न्यासपदाभिजुष्टो,
 मनोहरादिर्विजयाभिधानः ॥ ३२७ ॥

तथा च पन्न्यासपदातिवित्तो,
 गणीशसंपद्विजयाभिधानः ।
रविप्रपूर्वो विजयान्तनामा,
 मुनिर्वरेण्यः शुभशीलशाली ॥ ३२८ ॥

सूरीशभक्तो भुवनादिशब्द-
 श्चारित्रयुक्तो विजयान्तनामा ।
श्रीरङ्गपूर्वो विजयाभिधश्च,
 सोमादिमोऽथो विजयान्तनामा ॥ ३२९ ॥

प्रमोदपूर्वो विजयाभिधश्च,
 श्रीदीपपूर्वो विजयाह्वसाधुः ।
अशोकमुख्यो विजयान्तरम्य-
 श्चारित्रनिष्ठो गुरुभक्तिलीनः
 ( चतुर्भिः कलापकम् । ) ॥ ३३० ॥

आचार्यदेवेशसुनीतिसूरे-
 र्निर्वाणभूमौ बहुशोकयुक्ताः ।
अमी यमीन्द्रा गुरुभक्तिभाजः,
 सर्वेऽमिलन् देवविवन्दनार्थम् ॥ ३३१ ॥

वंशस्थवृत्तम्

कृत्वा विलोमं वरदेववन्दनं,
ततोऽनुलोमं विधिना प्रपूर्णम् ।
सुसंघसंप्रार्थनतस्ततस्ते,
गता मुनीन्द्रा उदयादिपुर्याम् ॥ ३३२ ॥

उपजातिः

आचार्यवर्यः स च नीतिसूरि-
र्वह्नयष्ट-नन्दैकमितात्तु वर्षात् ।
श्रीसूरिमन्त्रस्य जपं पवित्रं,
प्रारब्धवान् सद्विधियोगशुद्धम् ॥ ३३३ ॥

गीतिः-

तथा च तपागच्छीय-
सामाचारीसूरिमन्त्रपट्टम् ।
आरभ्य तत्र जापे,
व्यस्थैपीत् प्रहरद्वयं स नित्यम् ॥
( युग्मम् । ) ॥ ३३४ ॥

उपजातिः

सूरीश्वरश्चाऽन्तिमसार्धवर्षाद्,
रुजाऽभिभूतः समभूदतीव ।

तादृक्प्रगुणास्थितिवर्तमानो-
ऽप्येकाग्रचित्तेन जपं व्यधात्सः ॥ ३३५ ॥

विहाय निर्वाणदिनं स जापः,
सूरीश्वरेणाऽस्खलितो हि जप्तः ।
स तस्य चारित्रमहाप्रभाव-
स्तथा तदाध्यात्मिकमोज आसीत् ॥ ३३६ ॥

स सार्धसंवत्सरजन्यरोगात्,
कदापि न व्याकुलतामगच्छत् ।
असोढ किन्त्वार्तिमसौ प्रशान्त्या,
शरीररोगप्रभवां प्रभूताम् ॥ ३३७ ॥

वंशस्थवृत्तम्

स भावयन्नात्मनि शुद्धभावनां,
तथा ह्यकार्षीन्निजकर्मनिर्जराम् ।
व्यधात् स जीवेषु च साम्यभावना-
मपूर्वधैर्यं समभूत्तदुच्चकैः ॥ ३३८ ॥

उपजातिः

सर्वेषु सूरीश्वरपुङ्गवेषु,
सोऽयं विशेषः समभूत्तथाऽस्मिन् ।
यद्-वमन्यन्त ह्यपास्तदोषं,
समानभावं शुभशीलमेनम् ॥ ३३९ ॥

सर्वे सुसाधुप्रवरास्तथैवं,
साध्वीप्रकाण्डा बहुमानपूर्वम् ।
विहाय नैजं समुदायभेदं,
समागुरेनं च विवन्दनार्थम् ॥
( युग्मम् । ) ॥ २४० ॥

सूरीश्वरस्याऽस्य हृदि प्रभेदो,
निजः परो वेति कदापि नासीत् ।
अपास्य भेदं समुदायजन्यं,
सर्वानपश्यत् स समानदृष्ट्या ॥ २४१ ॥

साधोश्च साध्व्याः समुदायकस्य,
कस्याऽपि किञ्चित् समपेक्ष्य वस्तु ।
उदारभावेन स नीतिसूरि-
रदापयत् तूर्णतमं स्वभक्तैः ॥ २४२ ॥

एतादृशः सद्गुणशीलशाली,
सूरीशदेवो जिनधर्मधुर्यः ।
निर्वाणमात्रं समगादकाले,
हेतोश्च तस्मादमिलन् सुभक्ताः ॥ २४३ ॥

श्रीपौषमासस्य हि कृष्णपक्षे,
तिथौ चतुर्थ्यामुदयादिपुर्याम् ।

बाह्यप्रदेशस्थितधर्मशाला-
मध्ये व्यधुः शोकसभां वर्तते ॥
( युग्मम् । ) ॥ ३४४ ॥

यदा च सूरीश्वरपुङ्गवोऽसौ,
निर्वाणभावं समगात्तदैव ।
ग्रामेषु खेटेषु तथा पुरेषु,
संघेन वृत्तं तदिदं न्यवेदि ॥ ३४५ ॥

तद्वायुसंदेशसमूहमुख्या-
न्यनेकशोकप्रतिसूचकानि ।
अश्रावयंश्चागतपत्रकाणि,
सभ्यप्रकाण्डाः समितौ हि तानि ॥
( युग्मम् । ) ॥ ३४६ ॥

अनेकवक्तृप्रवरैः सभायां,
सूरीश्वरस्योत्तमशीलभाजः ।
संवर्ण्य वाग्भिः प्रवरप्रभावं,
प्रस्ताव उच्चैश्च कृतः शुचोऽस्याम् ॥ ३४७ ॥

अनन्तरं कारयितुं प्रतिष्ठां,
चित्तोडदुर्गस्थितमन्दिरेषु ।
अमन्त्रि संघेन मिथः सभायां,
करिष्यमाणस्य विधेश्च हेतोः ॥ ३४८ ॥

वैशाखमासे प्रवरप्रतिष्ठां,
कर्तुं विचिन्त्यैकमतेन सर्वे ।
अहम्मदावादपुरे तदेते,
न्यवेदयन् वृत्तमिदं च तूर्णम् ॥ ३४९ ॥

तदैव चैतन्नगराधिवासी,
श्रीमच्चुनीलालतनूजवर्यः ।
श्रेष्ठी भगूभाइशुभाभिधेयो,
ज्योतिर्विदं विज्ञवरं ह्यपृच्छत् ॥ ३५० ॥

चित्तोडदुर्गस्थितमन्दिरेषु,
शुभप्रतिष्ठाकरणाय विद्वन् ! ।
वैशाखमासे सुमुहूर्तमस्मि-
न्नागच्छति वा न वदेति तथ्यम् ॥ ३५१ ॥

निरूप्य शास्त्राणि मुहूर्तकानां,
न्यगादि दैवज्ञवरेण तेन ।
संवत्सरेऽस्मिन् वरमाघमासे,
शुक्लद्वितीयैव वरं मुहूर्तम् ॥ ३५२ ॥

वृत्तान्तमेतं ह्युदयादिपुर्यां,
न्यवेदयत् सुतरियोपनामा ।
धीमद्भगूभाइधनीशवर्यः,
श्रीसंघपार्श्वे विनयेन तूर्णम् ॥ ३५३ ॥

तथा न्यवेदीद्धनिकः स श्राद्धः,
सूरीश्वरेणाऽपि निवेदितं प्राक् ।
अतो मुहूर्तं शुभदं हि माघ-
शुक्लद्वितीयैव सुनिश्चिताऽस्तु ॥ ३५४ ॥

दिनस्ततोऽसावुदयादिपुर्याः,
संघस्य मुख्यैरपि निश्चितो वै ।
अनन्तरं सूरिमते मुहूर्ते,
शुभप्रतिष्ठाकरणोद्यतास्ते ॥ ३५५ ॥

ततोऽनु पूर्वोक्तनवाङ्कभाजो,
मुनीन्द्रवर्या उदयादिपुर्याः ।
चित्तोडदुर्गं प्रति सद्विधिज्ञा,
व्यहार्षुरेते कृतिबद्धलक्ष्याः ॥ ३५६ ॥

फत्तेहपूर्वं नगरं च गत्वा,
ततः करेडाभिधतीर्थमुच्चम् ।
ते सन्मुनीन्द्रा भविबोधदक्षाः,
शीघ्रं समागुर्वरबोधयुक्ताः ॥ ३५७ ॥

बीयावराख्ये नगरे स्थितो यो,
वर्षर्तुवासार्थमतीव विज्ञः ।
श्रीमानुपाध्यायपदाङ्कितोऽसौ,
धीमान् दयायुग्विजयाभिधानः ॥ ३५८ ॥

मालिनी

चरणविजयनामा साधुधुर्यश्च सौम्यो,
मलयविजयनामा सद्गुरौ भक्तिशाली ।
गुरुवरवरनीतेर्नीतिसूरेर्निदेशाद्,
भुवि विदिततमेऽस्मिन् प्राक्स्थितास्ते हि तीर्थे
(युग्मम् । ) ॥ ३५९ ॥

उपजातिः

सर्वे मुनीन्द्रा नवसंख्यका ये,
ज्ञानोद्यताः संयमलीनचित्ताः ।
तांस्तेऽमिलन्नुक्तमुनिप्रवेका,
नेतुं प्रतिष्ठासुमहोत्सवेऽत्र ॥ ३६० ॥

विहृत्य तस्मात् सुवरेण्यतीर्थाद् ,
विद्याऽतिवित्तो वरसंयमाढ्यः ।
श्रीमानुपाध्यायपदाभिधर्ता,
दयादिशब्दो विजयान्तनामा ॥ ३६१ ॥

गणीशपन्यासपदाङ्कितश्च,
मनोहरादिर्विजयाभिधानः ।
तथा च पन्न्यासपदाभिजुष्टः,
शमीशसंपद्विजयो गणीन्द्रः ॥ ३६२ ॥

इत्यादयस्ते सुचरित्रवित्ता-
श्चित्तोडदुर्गं त्वरया समागुः ।
तत्राऽमिलंस्तान् यमिनामधीशान्,
अवस्थिताः पूर्वमिमे मुनीशाः ॥ ३६३ ॥

भद्रङ्कराख्यो विजयावसान,
उमेदपूर्वो विजयो मुनिश्च ।
श्रीचम्पकाख्यो विजयान्तरम्यः,
संमिल्य सर्वे बहुमोदमापन् ॥ ३६४ ॥
( युग्मम् । )

वसन्ततिलका-

चित्तोडदुर्गजिनचैत्यवरप्रतिष्ठा-
श्रीमन्महोत्सवकृतौ दृढबद्धलक्ष्याः ।
तेऽष्टादशप्रमितसाधुवरेन्द्रधुर्या-
स्तत्राऽमिलन् प्रचुरहर्षयुतास्तदानीम् ॥ ३६५ ॥

उपजातिः

पुरेष्वनेकेषु सुविश्रुतेषु,
ग्रामेषु नैकेषु च संघमुख्याः ।
प्रैषुश्च सत्कुङ्कुमपत्रिकास्ते,
शुभप्रतिष्ठाकरणस्य शीघ्रम् ॥ ३६६ ॥

सूरीश्वराकस्मिककालधर्मात्,
शीघ्रं प्रतिष्ठासमयागमाच्च ।
सर्वस्थले कुङ्कुमपत्रिका वै,
न संगता यद्यपि ता यथेष्टम् ॥ ३६७ ॥

तथापि पुण्ये सुमहोत्सवेऽस्मिन्,
श्रीमेदपाटाभिधरम्यराष्ट्रात् ।
तथैव देशाद् मरुधन्वमुख्याद्,
आगाज्जनानामयुतं तदानीम् ॥ ३६८ ॥ (युग्मम्।)

गीतिः

जामनगरपुरवासी,
संघवीतिविदितोपनामयुक्तः ।
लक्ष्मीचन्द्रस्य पुत्र-
श्चुनीलालाह्वः श्राद्धवंशदीपः ॥ ३६९ ॥

उपजातिः

तेनाऽतिभव्यो जलयात्रिको वै,
निष्काशितः सद्वरघोटकोऽत्र ।
परःसहस्रे जनतासमूहे,
ध्वजा-पताकादिविराजितोऽसौ ॥
( युग्मम् । ) ॥ ३७० ॥

तस्मिन् वरेण्ये वरघोटके वै,
पञ्चाङ्कयुक्ता मदहस्तिराजाः ।
त्रिसंख्यकानि श्रुतिसौख्यदानि,
वेण्डानि चाऽऽसन्नतिसुस्वराणि ॥ ३७१ ॥

तथा करेडाभिधतीर्थकीयो,
रथोऽत्र रौप्यो बहुमूल्यरम्यः ।
तथा महोच्चो ध्वजदण्ड आसीत्,
तैरस्य शोभा ह्यतिदर्शनीया ॥ ३७२ ॥

तथैव राज्ञा स्वपुरस्थितानि,
साहाय्यके भूरिसुसाधनानि ।
दत्तानि तस्माद्वरघोटकेऽस्मि-
न्नभूतपूर्वाऽभवदत्र शोभा ॥ ३७३ ॥

श्रीपौषमासस्य च कृष्णपक्षे,
एकादशीपुण्यतिथौ तदानीम् ।
हीरादिलालाभिध इभ्यवर्यः,
सीरोडियोपाह्व-जिनेशभक्तः ॥ ३७४ ॥

त्रयोदशीनामतिथौ तथैव-
महम्मदावादपुराधिवासी ।
श्रीतेजपालाख्यधनीश्वरस्य,
सुतोत्तमो गोकुलचन्द्रनामा ॥ ३७५ ॥

गीतिः

साधर्मिकवात्सल्ये,
मुदा व्यधातामिमौ श्रेष्ठिवर्यौ ।
उत्तमोत्तमैः प्रकारै-
र्विविधैः स्वादिष्टमिष्टान्नादिभिः ॥
( त्रिभिर्विशेषकम् । ) ॥ ३७६ ॥

उपजातिः

तत्राऽस्ति मुख्यं जिनमन्दिरं यत्,
श्री ' सातवीशी ' शुभनामवित्तम् ।
तस्मिन् खलु त्रिप्रतिमोत्तमानां,
वरप्रतिष्ठाकरणं विधानैः ॥ ३७७ ॥

श्रीमच्चुनीलालतनूजवर्यः,
श्रेष्ठी मगूभाइसुनामधेयः ।
श्रीसूतरीयेत्युपनामधर्ता,
प्रागेव तत् स्वीकृतवानभूद्धि
( युग्मम् । ) ॥ ३७८ ॥

तत्रागतः श्रेष्ठिवरः स एष,
भ्रात्रा सह श्रीकेमलालनाम्ना ।
पुत्रैश्च पौत्रैः परिवारयुक्तै-
रासन्नपष्टैः स्वजनैस्तदानीम् ॥ ३७९ ॥

सोऽत्रास्थित श्रेष्ठतमेऽतितुङ्गे,
चित्तोडदुर्गोपरिराजिते च ।
राष्ट्राधिराजस्य महाप्रतिष्ठे,
प्रासादवर्ये बहुमानजुष्टः ॥ ३८० ॥

पुण्यप्रतिष्ठासुविधिं विधातुं,
तत्रागमच्छ्रीकचुकीत्युपाह्वः ।
श्रीमोतिलालात्मजचन्दुलालो,
जैनप्रतिष्ठाविधिसुप्रतिष्ठः ॥ ३८१ ॥

गीतिः

चीमनलालाभिधश्च,
सकरचन्द्रस्य तनुज उच्चशीलः ।
इत्यादिका विधिज्ञाः,
क्रियां विधातुं समागतास्तत्र ॥ ३८२ ॥

उपजातिः

श्रीमाघमासस्य सिते सुपक्षे,
पुण्यद्वितीयाख्यतिथौ सुलग्ने ।
भूरिप्रमोदैः सह सज्जनानां,
तत्र प्रतिष्ठा समभूत् सुमन्या ॥ ३८३ ॥

तस्मिन् प्रतिष्ठादिवसे पवित्रे,
व्यधात् प्रपूतां नवकारशीं च ।

श्रीमान् भगूभाइधनिप्रसिद्धः,
श्रीचूनिलालात्मज इभ्यकीर्तिः ॥ ३८४ ॥

साधर्मिकाणां वरभक्तिहेतौ,
सुभोजनेऽस्मिन् नवकारश्याख्ये ।
चतुःसहस्रीं खलु रूप्यकाणां,
व्यधाद् व्ययं श्रेष्ठिवरो वदान्यः ॥ ३८५ ॥

इत्थं प्रतिष्ठाख्यपवित्रकार्यं,
चित्तोडदुर्गस्थितमन्दिरेषु ।
इच्छानुसारि गुरुनीतिसूरेः,
समाप्तिमापत् प्रचुरप्रमोदैः ॥ ३८६ ॥

तपोगरिष्ठस्य सुसंयमस्य,
ब्रह्मत्वनिष्ठस्य विदांवरस्य ।
आचार्यराजस्य हि नीतिसूरेः,
स एष चारित्रमहाप्रभावः ॥ ३८७ ॥

अनन्तरं सूतरियोपनामा,
श्रीमच्चुनीलालसुपुत्रमुख्यः ।
श्रेष्ठी भगूभाइरिति प्रणम्य,
व्यजिज्ञपत् सूरिपतेः सुशिष्यान् ॥ ३८८ ॥

अहम्मदावादपुरे भवद्भिः,
शुभागमः पूज्यवरैर्विधेयः ।

निर्वाणहेतोर्गुरुनीतिसूरे-
रष्टाह्निकाख्यादिमहोत्सवेषु ॥ ३८९ ॥

श्रीलोहकाराभिधवित्तवासे,
तथा डहेलाह्व उपाश्रये वै ।
वीरस्य चोपाश्रय एवमादा-
वस्माकमिच्छाऽस्ति महान् विधातुम् ॥ ३९० ॥

किञ्चापि चैतत् सुमहोत्सवादि,
कार्यं पवित्रं भवदागमस्य ।
अनन्तरं चैव भविष्यतीति,
समागमो वस्त्वरयैव कार्यः ॥ ३९१ ॥

आवश्यकत्वं समुदायकस्य,
सम्मेलनस्यास्ति च संप्रतीह ।
भवन्त आयान्तु ततश्च शीघ्र-
महम्मदावादपुराय सर्वे ॥ ३९२ ॥

( पञ्चभिः कुलकम् । )

स्वीकृत्य सर्वे यमिनां वरिष्ठा-
स्तां प्रार्थनां श्रेष्ठिवरस्य तथ्याम् ।
अहम्मदावादपुरं प्रयातुं,
चित्तोडदुर्गाद् व्यहरँस्तदैते ॥ ३९३ ॥

स्थलेषु चाऽन्येषु तथा स्थिता ये,
शिष्योत्तमाः श्रीगुरुनीतिसूरेः ।
विद्वत्सु विद्या विजयादिहर्ष-
सूरिप्रधाना मुनिमाननीयाः ॥ ३९४ ॥

तथैव पंन्यासपदाङ्कितोऽसौ,
दानेतिपूर्वो विजयो गणीन्द्रः ।
तथा च पंन्यासगणिप्रकाण्डः,
श्रीमानपूर्वो विजयान्तनामा ॥ ३९५ ॥

मालिनी

उदयविजयनामा वित्तपंन्यासवर्यः,
उदयसमपदाढ्यो रम्यकल्याणनामा ।
उभयमुनिसमानैः सत्पदैः राजितश्च,
विजयपदविराजी मङ्गलाख्यो गणीशः ॥३९६॥

उपजातिः

इत्यादिपूर्वोक्तमुनीश्वरेषु,
पत्राण्यलेखीत् किल नम्रवाक्यैः ।
धीमान् मगूभाइवरेण्यनामा,
श्रीसुतरीयाख्यकुलावतंसः ॥ ३९७ ॥

( चतुर्भिः कलापकम् । )

तदेव राष्ट्राद् वरमेदपाटात्,
तथा च देशाद् मरुधन्वनाम्नः ।
तथैव सन्मालवनामदेशा-
देवं हि सौराष्ट्रसुदेशमुख्यात् ॥ ३९८ ॥

कृत्वा विहारं व्रतिनामधीशा,
आसन्नपञ्चाशमहामुनीन्द्राः ।
शिष्यप्रशिष्यादिसमूहयुक्ता,
अहम्मदावादपुरं समागुः ॥ ३९९ ॥ (युग्मम्।)

आचार्यवर्योत्तमलब्धकीर्ते-
र्निर्वाणहेतोर्गुरुनीतिसूरेः ।
अहम्मदावादपुरे प्रसिद्धे,
श्रीलोहकाराभिधपूतवासे ॥ ४०० ॥

अष्टाह्निकाह्वः सुमहोत्सवो वै,
व्यधायि पूर्वं प्रवरे च तस्मिन् ।
श्रीरैवताख्यस्य सुपर्वतस्य,
चित्तोडदुर्गस्य च तीर्थभूमेः ॥ ४०१ ॥

तथैव गीर्वाणगिरेः सुमेरो-
र्महर्द्धिजुष्टस्य गिरीश्वरस्य ।
अकारि भव्या रचनाऽतिरम्या,
सच्छ्रावकैर्भावयुतैः सहर्षम् ॥ ४०२ ॥
( त्रिभिर्विशेषकम् । )

जिनेश्वराणां प्रतिमोत्तमानाम्,
आङ्गीति ख्याता रचिता सदैव ।
सुगन्धिपुष्पैर्वरभूषणैश्च,
शोभाऽतिभव्या समभूच्च तस्याः ॥ ४०३ ॥

तथा सदा सुन्दररागपूर्व-
मपाठयन्ताऽत्र वराः सुपूजाः ।
अष्टोत्तरीस्नात्रमथो पवित्रं,
व्यधायि भक्तैर्वरशुद्धभावैः ॥ ४०४ ॥

तथा प्रसिद्धे डहेलाभिधाने,
उपाश्रये वै समकारि रम्यः ।
अष्टाह्निकाख्यः सुमहोत्सवश्च,
भव्यैः प्रकारैर्जिनभक्तिभाग्भिः ॥ ४०५ ॥

शिखरिणी

महापूजामुख्या वरविमलभावा विधियुता,
शुभा नैकाः पूजाः सकलभविचेतस्सुखकराः ।
अपाठ्यन्त श्राद्धैर्जिनपरमभक्तैर्बहुविधाः,
सुवाद्यैः सद्रागैर्जनहृदयहारिभिरतुलैः ॥४०६॥

गीतिः-

तथैव वीरविजयाह्व,
उपाश्रये चापि राजनगरस्थे ।

अष्टाह्निको महोत्सवो,
व्यधीयत श्राद्धपुङ्गवैर्भव्यः ॥ ४०७ ॥

तत्राऽकारि समवसरण-
भरतमहाराजसभाप्रभृतीनाम् ।
चित्र-विचित्रपदार्थै,
रचना भव्या तदा सुशिल्पिवरैः ॥ ४०८ ॥

शिखरिणी

तथा शान्तिस्नात्रं विविधविधिपूर्णं सुखकर-
मपाठ्युच्चैः श्राद्धैर्भविकजनताह्लादजनकम् ।
त्रिषु स्थानेष्वित्थं व्ययितमतिभक्त्या बहुमुदा,
मिलित्वा रूप्याणामयुतं[1] मुरुभावैर्भविवरैः ॥ ४०९ ॥

उपजातिः

एवं व्यधायि प्रचुरव्ययेन,
श्रीशामलाह्वे जनविद्यपोले ।
अहम्मदावादपुरे तदानी-
मष्टाह्निकाह्वः सुमहोत्सवो वै ॥ ४१० ॥
तथैव रीत्या वरपादलिप्ता-
ऽभिधे पुरे मोक्षदसिद्धक्षेत्रे ।

१ दश सहस्राणि ।

श्रीजीर्णदुर्गाह्वपुरे च रम्ये,
श्रीरैवताद्रेः सविधे पवित्रे ॥ ४११ ॥

द्रुतविलम्बितम्

कपडवंजपुरे च महर्द्धिके,
भविजनैर्हि कृताः सुमहोत्सवाः ।
विजयनीतिगुरौ बहुभावतो,
यमिवरस्य हि निर्वृतिहेतवे ॥ ४१२ ॥ (युग्मम्)

उपजातिः

अकारिषातां वरराजधन्ये,
पुरे तथा पट्टननामके वै ।
अष्टाह्निकाख्यौ सुमहोत्सवौ तैः,
श्राद्धैर्गुरौ भक्तिपरैस्तदानीम् ॥ ४१३ ॥

आचार्यवर्यस्य सुनीतिसूरे-
र्निर्वाणहेतोः खलु तत्र तत्र ।
स्थले महाडम्बरपूर्वमेवं,
तदा समासन् सुमहोत्सवा वै ॥ ४१४ ॥

तथैव सूरीश्वरपुङ्गवानां,
तेषां प्रभावान्वितशीलभाजाम् ।
सम्मेलनं सत्समुदायकस्य,
मन्ये समासीदनुमोदनीयम् ॥ ४१५ ॥

अनन्तरं संघमहाग्रहेण,
ते सूरिराजस्य हि शिष्यविज्ञाः ।
अहम्मदावादपुरे वरेण्ये,
स्थिताश्चतुर्मासिनिवासहेतोः ॥ ४१६ ॥

तस्मिन् डहेलाह्व उपाश्रये वै,
श्रीलोहकाराभिधविचपोले ।
वीरस्य चोपाश्रयके तथैवं,
पृथक् पृथक् साधुवराः सुशीलाः ॥ ४१७ ॥

तथा च तत्रत्यजनप्रसिद्धे,
श्रीशामलानामकरम्यपोले ।
सन्नूतनोपाश्रयके तदानीं,
वर्षर्तुवासार्थमवस्थितास्ते ॥ ४१८ ॥ (युग्मम् ।)

अनेकसंख्यैः शुभपुण्यकृत्यै-
स्तथैव तीर्थोद्धृतिभिश्च तेषाम् ।
सूरीश्वराणां सकलासु दिक्षु,
व्यपप्रथत् कीर्तिगणोऽतिशुद्धः ॥ ४१९ ॥

शार्दूलविक्रीडितम्

विद्वान् सत्समुदाय उच्चयमिनां
श्रीनीतिसूरेः सदा,

चारित्राऽवनतस्तपश्चरणतो
ज्ञानादिदानार्जनैः ।
सर्वज्ञप्रथितोपदेशकरणै-
र्भव्यान् समुद्बोधयन्,
कीर्तिं सूरिपतेस्तनोतु बहुलां
वाञ्छाम इत्थं वयम् ॥ ४२० ॥

शार्दूलविक्रीडितम्

तीर्थोद्धारकृदागमज्ञसुगुरु-
श्रीनीतिसूरीश्वर-
भक्त्येकप्रवणात्मना च विदुषा
तच्छिष्यरत्नेन वै ।
श्रीसंपद्विजयाभिधेन गणिना
पंन्यासवर्येण यद्,
गूर्जरवाग्ग्रथितं गुरोः सुचरितं
भव्यात्मबोधेच्छया ॥ ४२१ ॥

उपजातिः

तदीयसंप्रेरणाया तदेतत्,
सूरेश्चरित्रं परमं पवित्रम् ।
गीर्वाणवाण्यां रचितं विशुद्धैः,
पदैर्विचित्रैः परिभूषितं च ॥ ४२२ ॥ (युग्मम् ।)

शार्दूलविक्रीडितम्

काव्य-व्याकरणाख्यशास्त्रविषये
दत्वा परीक्षां मुदा,
आचार्येत्यतुलं पदं ह्यधिगतं
काशीस्थविद्यालये ।

पुत्रश्रीशिवशङ्करेण कविना
मोरारजीशास्त्रिण:,
क्लृप्तं संस्कृतवाङ्मये तनुधिया
पूतं चरित्रं गुरो: ॥ ४२३ ॥

वसन्ततिलका

श्रीपादलिप्तनगरे नगरप्रसिद्धे,
शत्रुंजयस्थितयुगादिजिनेशपूते ।
चारित्रशुद्धवरसाधुसमूहवित्ते,
पूजामहोत्सवनिरन्तरवाद्यघोषे ॥ ४२४ ॥

मालिनी

ख-ख-ख-सहितयुग्मे[1] वैक्रमीये सुवर्षे,
फलदसितसुपक्षे माधवाह्वे[2] च मासे ।

१ २००० संवत्सरे । २ वैशाखमासे ।

सकलतिथिवरेण्ये पूर्णिमायां तिथौ वै,
परमगुरुचरित्रं पूर्णितं तत् पवित्रम् ॥ ४२५ ॥
( युग्मम् । )

वसन्ततिलका

साहाय्यकं कृति-विशोधनकादिकार्ये
दत्तं हि येन विदुषा बहुलं कृतेऽस्मिन् ।
अत्रत्यपण्डितवराऽमृतलालनाम्ना,
तस्योपकारमपि नित्यमहं स्मरामि ॥ ४२६ ॥

अस्यां कृतौ च यदि मे स्खलनं प्रजातं,
क्षम्यं सदा गुणगणग्रहणैकधीभिः
विज्ञैश्च सत्कविपरिश्रमवेदिभिर्यत्,
सर्वत्र चाऽस्खलितवाग् जिननाथ एव ॥४२७॥

उत्तरार्द्धं समाप्तम् ।



पुस्तक छपाववामां मदद आपनार गृहस्थोनां

मुबारक नाम ।

२००) डेलाना उपाश्रय तरफथी, अमदावाद.

१२५) शा. बचुभाई नथुभाई, अमदावाद.

१००) कोठारी बापुलाल जीतमल, राधनपुर.

४०) शा मणिलाल वाडीलाल अप्पा, अमदावाद.



वीर संवत् २४७०
विक्रम संवत् २०००
इस्वीसन १९४४

रैवताचलादितीर्थोद्धारक-शासनप्रभावक-
आचार्य-श्रीविजयनीतिसूरीश्वरचरित्रं
समाप्तम् ।

मुद्रक -शा. गुलाबचंद लल्लुभाई.
महोदय प्रिन्टींग प्रेस-भावनगर.